# सुप्रभेदागमः

## शिवमयम्

## सुप्रभेदम्

### अथ क्रियापादे प्रश्नविधिपटलः

कैलासशिखरासीनं मुनिसङ्घैः समावृतम्
देवैर्यक्षैः सगन्धर्वैः सिद्धविद्याधरैरपि १
ब्रह्मामृगाङ्कसूर्यैश्च लोकेशैरिह संवृतम्
दृष्ट्वा प्रणम्य देवेशं विघ्नेशो वाक्यमब्रवित् २
भगवन् देवदेवेश लोकनाथजगत्पते
अनन्यमानसो भूत्वा शिवज्ञानं परं वद ३
यदवाप्य नराः सर्वे मुक्तिमायान्ति केवलाम्
ज्ञानयोगक्रियाचर्याः पुराप्रोक्ताः सविस्तराः ४
पुंसामनुग्रहार्थाय संक्षेपाद् वक्तुमर्हसि
तन्त्राणामुद्भवं किञ्चित् मन्त्राणामुद्भवं कथम् ५
किं शौचा चमनं देव स्नानं भस्मविधिः कथम्
अर्चनाङ्गं च पूजा च मुद्राणां लक्षणं कथम् ६
नैवेद्यं चाग्निकार्यश्च अग्निकुण्डबलिः कथम्
उत्सवस्य विधिः को वा स्नपनस्य विधिः कथम् ७
शीतकुम्भं कथं देव नवनैवेद्य लक्षणम्
कार्तिक्याङ्कत्तिकादीपमाषाढे पूरकर्मकम् ८
फलपाकविधानं च आचार्यस्य च लक्षणम्
लक्षणं करणानां च ग्रामादीनां कथं प्रभो ९
विभव निश्चयं किं वा कर्षणस्य विधिः कथम्
बालालयविधिः को वा धामयास्तु विधि कथम् १०
आद्येष्टकाविधानं किं गर्भन्यासविधिः कथम्
अङ्गुलीनां विधानं किं कथं प्रासादलक्षणम् ११
मूर्ध्नेऽष्टकाविधानं किं कथं वा लिङ्गलक्षणम्

प्रतिमालक्षणं किं वा अङ्कुरार्पणलक्षणम् १२
लिङ्गसंस्थापनं किं च सकलस्थापनं कथम्
शक्तीनां स्थापनं किं वा परिवारस्य लक्षणम् १३
अथाष्ट परिवाराणां स्थापनं च पृथक् पृथक्
इन्द्रादीनां प्रतिष्ठा च आदित्यस्थापनं कथम् १४
क्षेत्रपालप्रतिष्ठा च शूलस्य स्थापनं कथम्
अस्त्रराजप्रतिष्ठा च शास्तुश्च स्थापनं कथम् १५
जीर्णोद्धारविधिः किं वा प्रायश्चित्तविधिः कथम्
तन्त्राणां सङ्करोपेतं क्रियापादे कथं प्रभो १६
चर्या पादे च शैवानामुद्भवं च कथं प्रभो
जातिभेदविधानं किं मण्डलस्य कथं प्रभो १७
दीक्षामार्गं कथं तेषां चर्यापादे व्यवस्थितम्
आदिशैवानुशैवानां कथं वा षोडश क्रियाः १८
व्रताचाराः कथं तेषां पवित्रारोहणं कथम्
दीक्षितानां नृपाणां च स्वर्णगर्भतुला कथम् १९
हिरण्यगर्भतुलाभारं दहनस्य विधिः कथम्
पितृयज्ञविधानं किं स पिण्डीकरणं च किम् २०
अष्टकायाविधानं च प्रायश्चित्तविधिः कथम्
नाडीचक्रं कथं योगे कालचक्रं तु कीदृशम् २१
आधाराधेयकं सर्वं योगपादे तु कीर्तितम्
ज्ञानपादे महादेव शिवसृष्टिक्रमं कथम् २२
पशुसृष्टिश्च कादेव षडध्वालक्षणं कथम्
मया तु तानिप्रश्नानि प्रश्नान्यन्यान्यशेषतः २३
वक्तुमर्हसि मे देव अनुग्रह्योह्यहं प्रभो
श्रीभगवानुवाच
साधु साधु महाप्राज्ञ यत् त्वया परिचोदितम् २४

शुद्धशैवमिदं तन्त्रं न देयं न प्रकाशितम्
दीक्षितस्य सुधीरस्य शिवभक्तिपरस्य च २५
श्रवणीयं न चान्यत्र कथनं हि प्रशस्यते
चतुष्पादयुतं तन्त्रं भुक्तिमुक्त्यर्थकारणम् २६
सारात् सारमिदं तन्त्रं सुप्रभेदं विनायक
तवस्ते हादहं वक्ष्ये तत्सर्वं श्रूयतां क्रमात् २७
शैवं पाशुपतं सोमं लाकुलं च चतुर्विधम्
तेषु शैवं परं सौम्यं रौद्रं पाशुपतादिकम् २८
शैवं पुनश्चतुर्भेदं वामदक्षिणमेव च
मिश्रं चैव तु सिद्धान्तं तेषु सिद्धान्तमुत्तमम् २९
अष्टाविंशति भेदेन सिद्धान्तं शृणु तत्वतम्
इति प्रश्नविधिपटलः प्रथमः १

अथ तन्त्रावतारविधिपटलः

अथातः सम्प्रवक्ष्यामि तन्त्राणामुद्भवं परम्
तनोति विपुलानर्थान् तन्त्रमन्त्रसमाश्रितान् १
त्राणं च कुरुते पुंसां तेन तन्त्रमिति स्मृतम्
कामिकं योगजं चिन्त्यं कारणमजितं तथा २
दीप्तं सूक्ष्मं सहस्रं च अंशुमान् सुप्रभेदकम्
विजयं चैव निश्वासं स्वयम्भुवमथानलम् ३
वीरं च रौरवं चैव मकुटं विमलं तथा
चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ४
सिद्धं सन्तान सर्वोक्तं पारमेश्वरमेव च
किरणं वातुलं चैव अष्टाविंशति संहिताम् ५
वक्ष्यामि सर्वतन्त्राणां वक्तारं प्रतिवाचकः
ज्ञानमेकं विभज्याशु दशाष्टादशसंहिताः ६

सृष्टेरनन्तरं विघ्न मयाप्रोक्ताभिमुक्तये
कामिकं प्रणवाख्यस्य परार्थ ग्रन्धसङ्ख्यया ७
प्रणवार्ति कलः प्रोक्तस्त्रिकलाच्च ततो हरः
त्रयश्चैवोप भेदाः स्युर्वक्तारं भैरवोत्तरम् ८
नारसिम्हं च वैवत्स उच्यते कामिकत्रयम्
योगजं तु सुधाख्यस्य प्रोक्तं तल्लक्षसङ्ख्यया ९
सुधाख्याद्भस्म सम्प्राप्तस्ततः प्राप्तो विभुः क्रमात्
वीणाशिखोत्तरन्तारं सुधासन्तन्तिमेव च १०
आत्मयोगं च पञ्चैते योगतन्त्रस्य भेदकाः
चिन्त्यं सूदीप्त संज्ञस्य प्रोक्तं शतसहस्रकैः ११
दीप्ताच्च गोपतिप्राप्तस्ततः प्राप्ता तु चालिका
सुचिन्त्यं सुभगं वामं पापनाशं सुरोद्भवम् १२
अमृत्यविद्रतन्त्रं च षड्विधं तत् प्रकीर्तितम्
कारणं कारणाख्यस्य कोटिग्रन्थेन चोदितम् १३
कारणाच्छर्वरुद्रस्तु शर्वान् प्राप्तः प्रजापतिः
कारणं पावनं दौर्गं माहेन्द्रं भीमसंहिता १४
ततस्तु मारणात्वेषां सप्तधाकारणं तथा
अजितं तु शिवाख्यस्य नियुतग्रन्थसङ्ख्यया १५
सुशिवाख्याच्छिव प्राप्तः तच्छिवादच्युतः ततः
प्रभूतं च परोद्भूतं पार्वती पद्मसंहिता १६
चतुर्भेदमिदं तन्त्रे चास्मिन्तन्त्रे प्रकीर्तितम्
दीप्तमीशस्य विख्यातं नियुतग्रन्थसङ्ख्यया १७
ईशात् त्रिमूर्तिः सम्प्राप्ताः ततः प्राप्तो हुताशनः
अमेयमब्दमच्छाद्यमसङ्ख्यममितौजसम् १८
आनन्दं माधवोद्भूतं अद्भुतं च मृतं तथा
दीप्तं तु नवधा प्रोक्तं सूक्ष्म तन्त्रनिबोधनात् १९

सूक्ष्मं सूक्ष्मस्य सम्प्रोक्तं तत् ग्रन्धं
पद्मसङ्ख्यया
कालभीमस्तत प्राप्तो भीमाधर्मो यथा तथा २०
अतीतममलं शुद्धमप्रमेयं तु जातुभाक्
वुबुधं विबुधं हस्तमलङ्कारं सुबोधकम् २१
एते सहस्र तन्त्रस्य दशसङ्ख्या प्रकीर्तिताः
अम्शुमानम्बु संज्ञस्य पञ्चलक्षेण कीर्तितम् २२
अग्रश्चैवाम्बुसंज्ञाच्च अग्रान् प्राप्तस्ततो रविः
विद्यापुराणं तन्त्रं च वासवं निललोहितम् २३
प्रकरणं भूततन्त्रमात्मालङ्कारमेव च
काश्यपङ्तौ तमं चैन्द्रं ब्राह्मं वासिष्ठमेव च २४
ईशानोत्तरतन्त्रं च अंशुमान्वा दश स्मृतम्
सुप्रभेदमिदं तन्त्रं दशेशस्य प्रकीर्तितम् २५
विघ्नेश्वरो दशेशाच्च दशप्राप्तो बृहोदरात्
त्रिकोटिसङ्ख्यया प्रोक्तं भेदमत्र न विद्यते २६
क्रियादि ज्ञानपर्यन्तमत्रैवेह प्रदृश्यते
इदं शास्त्रमनेनैव सुप्रभेदमिति स्मृतम् २७
शिवभेदमिति प्रोक्तं रुद्रभेदमथोच्यते
रुद्रस्यानादिसंज्ञस्य विजयं तन्त्रमुत्तमम् २८
परमेशस्ततः प्राप्त त्रिकोटिग्रन्थसङ्ख्यया
विजयं चोद्भवं सौम्यं अघोरं मृत्युनाशनम् २९
कुबेरेशं महाघोरं विमलं विजयाष्टकम्
निश्वासं यद्दशार्णस्य प्रोक्तं तत् कोटिसङ्ख्यया ३०
दशार्णाच्छैलजा वाप्ता अष्टभेदेन चोदिताः
निश्वासोत्तर निश्वासौ निश्वासस्य मुखोदयम् ३१
निश्वासनयनं चैव तथा निश्वासकारिका

घोरसंज्ञा समाख्याता गुह्यं चाप्येवमष्टधा ३२
निधनस्य स्वयम्भूतं त्रिकोट्यर्द्धेन कीर्तितम्
निधने शात् स्वयम्भूतं श्रुतवान्नपि चोद्भवः ३३
प्रजापतिमतं पद्मं स्वायम्भुवमिति त्रिधा
आग्नेयं च ततो मेनाग्रन्थसङ्ख्या युतत्रयम् ३४
आग्नेयं तन्त्रमेवं तु ततः प्राप्तो हुताशनः
आग्नेयमेकमेवं तु आग्नेयां नादमेव च ३५
तेजसो वीरसम्प्रोक्तं नियुतग्रन्थसङ्ख्यया
प्रजापतिस्ततः प्रोप्त त्रयोदशविभेदतः ३६
प्रस्तरं फुल्लममलं प्रबोधं बोधबोधकम्
अमोहं मोहसमयं शकटं शाकटायिकम् ३७
हलं विलोखरं भद्रं वीरं वीरे त्रयोदश
रौरवं ब्रह्मणेशस्य अम्बुजाष्टकसङ्ख्यया ३८
नन्दिकेशस्ततः प्राप्तो भेदाः षट्प्रविधीयते
कालदाहं कलातीतं रौरवं रौरवोत्तरम् ३९
महाकालमतं चैन्द्रं रौरवं षट्प्रकीर्तितम्
मकुटं तु शिवाख्यस्य शतसाहस्रसङ्ख्यया ४०
महादेवःस्ततः प्राप्ता भेदं च द्विविधं भवेत्
मकुटोत्तरं तु मकुटं द्विविधं च विधीयते ४१
सर्वात्मकस्य विमलं त्रिलक्षग्रन्थसङ्ख्यया
वीरभद्रः स्ततः प्राप्तो भेदाः षोडश एव च ४२
अनन्तं भोगमाक्रान्तं वृषं लिङ्गं प्रषोदरम्
प्रषोद्भूतौ सुदन्तं च रौद्रं भद्रविधिं तथा ४३
आरेवतमतिक्रान्तमट्टहासमलङ्कृतम्
अजितं मारणं तन्त्रं विमलं षोडशैव तु ४४
चन्द्रज्ञानमनन्तस्य त्रिकोटिग्रन्थसङ्ख्यया

बृहस्पतिस्ततः प्राप्तो भेदाश्चापि चतुर्दश ४५
स्थिरं स्थाणमहान्तं च नन्दीशं नन्दिकेश्वरम्
एकपादपुराणं च शङ्करन्तूलरुद्रकम् ४६
श्रीभद्रं कल्पभेदं च श्रीमुखं शिवशासनम्
शिवशेखरमाख्यातं देव्यामतन्तथैव च ४७
चन्द्रज्ञानस्य तन्त्रस्य चतुर्दशविधं भवेत्
मुखबिम्बं प्रशान्तस्य शतसाहस्र सङ्ख्यया ४८
दधीचिर्मुनि सम्प्राप्तो भेदः पञ्चदशैव तु
चतुर्मुखमहायोगं संस्तोभं प्रतिबिम्बकम् ४९
अर्थालङ्कारवायव्यं तोटकं तुटिनिकरम्
प्रत्ययं च तुला योगं कुट्टिमं पट्टिशेखरम् ५०
महाविद्या महासौरं बिम्बं पञ्चदशैव तु
प्रोद्गीतं शूलिनः प्रोक्तं लक्षत्रितयसङ्ख्यया ५१
कवचाख्यस्ततः प्राप्ता भेदाः षोडश एव हि
कवचं चैव वाराहं पिङ्गलामतमेव च ५२
पाशबन्धं दण्डधरं कुशं च धनुधारिणम्
शिवज्ञानं च विज्ञानं श्रीकालं ज्ञानमेव च ५३
आयुर्वेदं धनुर्वेदं सर्वदंष्ट्रविभेदनम्
गीतं भरतमातोद्यं प्रोद्गीतं षोडशेन वै ५४
ललितं चलयस्यैव प्रोक्तमष्टसहस्रकम्
आलयाल्ललितं प्राप्तो ललितं ललितोदरम् ५५
कौमारं चैव विघ्नेशं त्रिविधं परिकीर्तितम्
बिन्दोः सिद्धमिदं तन्त्रं कोटिकोटयर्द्धसङ्ख्यया ५६
बिन्दुसंज्ञाच्च सम्बन्धः प्राप्तश्चण्डेश्वरोपरः
सारोत्तरमथाद्यस्तु ऐशानोत्तरमेव च ५७
शालाभेदं शशीमण्डं सिद्धतन्त्रं चतुर्विधम्

सन्तानं शिवनिष्ठस्य षट्सहस्त्रं तु संङ्ख्यया ५८
शैवे वायुस्ततः प्राप्तो भेदं सप्तविधं भवेत्
लिङ्गाद्ध्यक्षं सुराद्ध्यक्षं शङ्करं त्वमलेश्वरम् ५९
असङ्ख्यमनिलं द्वंद्वं सन्तानं सप्तधोदितम्
सोमदेवस्य सर्वोक्तं द्विलक्षेणैव सङ्ख्यया ६०
नृसिम्हः प्राप्तवान् सोमात् भेदं पञ्चविधं भवेत्
शिवधर्मं तु धर्मोन्तं वायुप्रोतं तथैव च ६१
दिव्यप्रोतमथैशानं शर्वोद्गीतं विधीयते
श्रीदेव्यास्तु समाख्यातं पारमेश्वरमुत्तमम् ६२
ग्रन्थद्वादशलक्षं तु सप्तधा प्रसृतं तु तत्
उशना मुनि सम्प्राप्त श्रीदेव्याश्च यथा क्रमम् ६३
मातङ्गं यक्षिणी पद्मं पारमेश्वरमेव च
पुष्कलं सुप्रयोगं च हंसं सामान्यमेव हि ६४
किरणङ्गरुडस्योक्तं कोटिपञ्चकसङ्ख्यया
संवर्तकस्तत प्रप्ताः भेदन्तन्नव एव तु ६५
गारूडन्नैर् ऋतन्नीलं रुक्विं भानुक धेनुकम्
प्रबुद्धं बुद्धकालाख्यं नवमङ्किरणं तथा ६६
शिवस्य वातुलं प्रोक्तं ग्रन्थं शतसहस्त्रकम्
महाकालः स्ततः प्राप्तो भेदं वै द्वादशोदितम् ६७
वातुलं चोत्तरं चैव कालज्ञानं प्ररोहितम्
सर्वं सर्वात्मकं श्रेष्ठं नित्यं शुद्धं महाननम् ६८
विश्वं विश्वाकरं चैवं वातुली द्वादशं स्मृतम्
अष्टाविंशति तन्त्राणां तन्त्रसङ्ख्या प्रकीर्तिताः ६९
कामिकं पादयुग्मं स्याद् योगजङ्गुल्भमेव च
चिन्त्य पादाङ्गुलिः प्रोक्तं कारणं जङ्घमेव च ७०
अजितं जानुदेशं च दीप्तं मूलप्रदेशकम्

सूक्ष्मं तु गुह्यबीजं स्यात् सहस्त्रं तु कटीतटम्  ७१
अंशुमान् प्रष्ठभागं च सुप्रभेदं तु नाभिकम्
विजयङ्कुक्षिदेशं स्यान्निश्वासं हृदयं भवेत्  ७२
स्वायम्भुवं स्तनौ द्वौ तु अनलं नेत्रमेव च
वीरं कण्ठप्रदेशं तु रौरवं श्रोत्रमेव च  ७३
मकुटे मकुटं तन्त्रमङ्गप्रत्यङ्गमेव च
बाहू तु विमलं प्रोक्तं चन्द्रज्ञानमुरस्थलम्  ७४
बिम्ब तन्त्रं सुवदनं प्रोद्गीतं जिह्वसंज्ञितम्
ललितं कपोलतलं सिद्धं चैव ललाटकम्  ७५
सन्तानं कुण्डल ज्योतिः शर्वोक्तमुपवीतकम्
पारमेश्वरहारं च किरणं रत्नभूषितम्  ७६
वातुलं परमेशस्य वायुस्तद्विशङ्केन तु
कल्पं च सूत्रसंयोगं शिवधर्मेनुलेपनम्  ७७
ललितः पुष्पमाल्यं च सिद्धान्तं च निवेदनम्
तन्त्रकायशरीरेण मन्त्रप्राणमयं तथा  ७८
एभिर्भेदोपभेदैश्च सादाख्ये मूर्तिमा स्थिताः
शैवभेदमिदं तन्त्रं दशाष्टादशसंहिताः  ७९
चिन्तामणिरिवाभाति एक या बहुधादिशेत्
यट्र्यव्येको भवेद्वक्ता श्रोतारोबहवो यथा  ८०
येन तन्त्रेण चारब्धं कर्षणाद्यर्चनान्तकम्
तस्मिन् तन्त्रे प्रकर्तव्यं अन्य तन्त्रं न कारयेत्  ८१
कारयेदन्य तन्त्रेण नोक्तन्तस्मिन् विशेषतः
तन्त्रावतारणं प्रोक्तमन्त्रोद्धारमथ शृणु  ८२
तन्त्रावतार द्वितीय पटलः  २

## मन्त्रोद्धार पटलः

अथातः सम्प्रवक्ष्यामि मन्त्रोद्धारविधिं परम्
सर्वसिद्धिकरं श्रेष्ठं सर्वकामप्रदायिकम् १
मननं सर्ववेदित्वं त्राणं संसारसागरात्
मननत्राणधर्मित्वान् मन्त्र इत्यभिधीयते २
शिवं ब्रह्माङ्गविद्येशान् गणेशान् लोकपालकान्
अस्त्रान्विद्याङ्गमेवं तु बीजार्णक्षुरिकां तथा ३
पृथिव्यादीनि बीजानि बीजब्रह्मं पुरोक्तकम्
पिण्डमन्त्रं कलामन्त्रं पञ्चब्रह्मं च रुद्रकम् ४
वक्ष्यते सविशेषेण तच्छृणुष्व गजानन
योऽसौ परापरो देवः सर्वज्ञः सर्वदा विभुः ५
निष्कलं तु परब्रह्मन्तस्माच्छक्ति द्वयं भवेत्
तद्द्वयं निष्कलं प्रोक्तं तस्मान् नादसमुद्भवः ६
तस्मात् बिन्दु समुत्पन्नं तस्माद् योनिसबीजकम्
अकारादिविसर्गान्तं बीजं तत् षोडशाक्षरम् ७
त्रयस्त्रिंशाक्षराः शेषा योनयश्चाव्ययात्मिकाः
तेषु तन्त्राः समुत्पन्नास्तेषु मन्त्राः समुद्भवाः ८
तस्य वाचकमन्त्राणांस्तैरेवाभि न विद्यते
दशबीजमिदं मन्त्रं सर्वमन्त्रेषु कथ्यते ९
ॐकारं प्रथमं बीजमाकारं तु द्वितीयकम्
तृतीयं बीजमीकारं सर्वकारक कारणम् १०
चतुर्थं बीजमूकारं व्योकारं पञ्चमं भवेत्
मकारं षष्ठमेवं स्याद् व्याकारं सप्तमं तथा ११
पिकारमष्टमं बीजन्नेकारं नवमं स्मृतम्
ॐकारं दशमं बीजं सर्वात्मा चैव विश्रुतम् १२
एत देव प्रबोद्धव्यं शिवेन परिभाषितम्
शिवमन्त्रमिदं प्रोक्तं तस्य लक्षणमुच्यते १३

सदाशिवं तत्व संस्थं प्रत्यक्षं सर्वतोमुखम्
इच्छाशक्तयुद्भवं पद्मं सहस्रदलभूषितम् १४
कर्णिका केसरैर्युक्तं तत्रस्थं तु सदाशिवम्
पञ्चमूर्द्धं चतुर्वक्त्रं नेत्रैर्द्वादशभिर्युतम् १५
चतुरास्यं चतुर्नासं वसुश्रोत्रं चतुर्गलम्
दशभुजन्तनूरेका द्विपादं पद्मसंस्थितम् १६
शुद्धस्फटिकसङ्काशं सूर्यकोटिसमप्रभम्
चन्द्रांशु हिमशीतं च सर्वाभरणभूषितम् १७
शुक्लाम्बरधरन्देवं शुक्लयज्ञोपवीतिनम्
अभयं शूलपरशुं वज्रखट्गं च दक्षिणे १८
खेटकं चांकुशं पाशं घण्टावह्निं च वामके
मनोन्मनीं तस्य वामे पञ्चावरणमध्यगाम् १९
एवं सदाशिवं ध्यायेत् सर्वपाप निकृन्तनम्
इदं रूपं सदाध्येयं सर्वकर्मफलप्रदम् २०
एतत् सदाशिवं रूपमुमेशस्य शृणुष्व हि
मम रूपप्रभेदोऽस्ति चैक वक्त्रं चतुर्भुजम् २१
शिवमन्त्रमिति ख्यातं ब्रह्माङ्गं च ततः शृणु
प्रथमात् पञ्चबीजादि ब्रह्माङ्गं प्रधितानि वै २२
शुक्लं रक्तं तथाश्यामं कुङ्कुमं क्षीरसन्निभम्
पञ्चानां पञ्चवर्णानि पञ्चब्रह्ममिहोच्यते २३
रशामिषर्पपर्यन्तं शिवाङ्गं चेति कीर्तितम्
इन्दु धूम्रौ तथा किञ्चिद् धूम्र कृष्णं रवेर्निभम् २४
तमोरूपं सुविज्ञेयं सूर्यकोटि शिवास्त्रकम्
शिवाङ्गास्त्रस्य पर्यायमघोरास्त्रं प्रकीर्तितम् २५
एकाक्षरसमायुक्तमोङ्कारादिनमोन्तकम्
अस्त्रं विसर्गसंयुक्तमन्ये बिन्दुसमायुताः २६

शेषा प्लुतसमायुक्ताः शिवाङ्गाश्च प्रकीर्तिताः
ब्रह्माङ्गाश्च यथा प्रोक्तास्तेषां रूपमिहोच्यते २७
त्रिणेत्रं चतुर्भुजं सौम्यं सर्वलक्षणसंयुतम्
हारकेयूर संयुक्तं सर्वाभरणभूषितम् २८
तेषां रूपं मयाप्रोक्तं विद्येशंलक्षणं शृणु
द्वितीयादि नमोन्ताश्च विद्येशानां प्रकीर्तितम् २९
जपा पुष्प प्रभोनन्तो नीलवर्णं तु सूक्ष्मकम्
शिवोत्तमोथकुन्दाभो बन्धूकं चैकनेत्रकः ३०
पद्माभमेकरुद्रस्य रक्ताशोक स्त्रिमूर्तिभिः
नीलोत्पलाभ श्रीकण्ठः शिखण्डी चाञ्जनः प्रभः ३१
अनन्तादिशिखण्ड्यान्ताश्चाष्ट विद्येश्वरा स्मृताः
तेषां हृदोपचारं तु ॐकारद्वयमेव हि ३२
पूर्वोक्तलक्षणोपेतं तेषां रूपं ततो मतः
गणेशलक्षणं वक्ष्ये शृणु तत्वङ्जानन ३३
एकारादि द्वितीयान्तं गणेशानां तु बीजकम्
जाम्बूनदमयिदेही चण्डो वै सूर्यसन्निभः ३४
नन्दीशः पद्मरागस्तु कालोमरतकप्रभः
वृषभः शारदाभ्राभो गणेशः पद्मसन्निभः ३५
भृङ्गीश श्वेतवर्णस्तु रक्तवर्णस्तु षण्मुखः
देव्यादि षण्मुखान्ताश्च विज्ञेयास्ते गणेश्वराः ३६
तेषां हृदुपचारं तु ज्ञेयं विद्येशवत्पुरा
इन्द्रादिलोकपालानां शृणुमन्त्रङ्जानन ३७
दशबीजं ततः प्रोक्तं पूर्वादिक्रमयोगतः
इन्द्रस्तु पीतवर्णः स्यात् पिङ्गवर्णस्तु पावकः ३८
कृष्णवर्णो यमः प्रोक्तो निर्ऋृतिर्धूम्रवर्णकः
वरुणः शुक्लवर्णस्तु वायुर्वै पीतवर्णकः ३९

सोमस्तु हिमसङ्काशस्त्वीशस्फटिकसन्निभः
ज्वालाविद्युदनं तस्य ब्रह्मणश्चेन्द्रकोपकः ४०
तेषां रूपं पृथक् प्रोक्तं मन्त्राणां लक्षणं शृणु
दशाभिप्रथमान्तं च मन्त्रमुच्चार्यते क्रमात् ४१
नानावर्णमयं वज्रं शक्तिर्विद्युत् प्रभासिकाः
दण्डश्च नीलजीमूतः खड्गोनीलोत्पलप्रभः ४२
पाशः पावक सङ्काशश्चांकुशं पद्मरागभाक्
गदा तु षारवर्णा तु इन्द्रनीलस्त्रिशूलकः ४३
अतसी कुसुमश्चक्रः पद्मस्तत् भास्करप्रभः
भूतानां शिरसश्चोर्ध्वे आयुधानि प्रकल्पयेत् ४४
शिवबीजमिदं मध्ये शिवब्रह्माङ्गमेव च
विद्येशाश्च गणेशाश्च लोकपालास्त्रसंयुतम् ४५
मन्त्रं रूपं तथा वर्णं प्रोक्तादश विशेषतः
दशबीजाद्य ये चान्ये क्रमान्नागानन शृणु ४६
विद्याङ्गलक्षणं ब्रूमो नेत्रेण तु समायुतम्
सप्ताष्ट पञ्चमात्रं तु गुणवर्णा यथा क्रमात् ४७
ओङ्कारादि प्रशान्ताय नमो हृद्युक्तवर्णकम्
ॐ प्रणवात्मं नमोनमः शिरस्फटिकसन्निभम् ४८
शिखाय हुं प्रणवादि शिखा चैवाञ्जन प्रभा
हुङ्कारस्तु तथा वर्म पद्मपत्रेण सन्निभम् ४९
फट्कारमिहशस्त्रं स्यात् सूर्यकोटिसमप्रभम्
एतत् पाशुपतास्त्रं च ईषट्करालदंष्ट्रकम् ५०
ॐ जिह्वा संस्मृता नेत्रमरुणाभं ततो विदुः
पूर्ववद् रूपमेतेषां शक्तिबीजं तत शृणु ५१
ॐ भृं जृं क्ष्मृं शक्तिमन्त्रं स्यात् बीजमुख्यं तु
देवता

तप्तकां चन वर्णाभा रूपलक्षणमुच्यते ५२
चतुर्भुजा त्रिणेत्रा च सर्वालङ्कारसंयुता
नितम्बतटविस्तीर्णा मध्यक्षामास्तनोन्नता ५३
एवं लक्षणसंयुक्ता आदिशक्तिर्मनोन्मनी
शक्तेस्तु लक्षणं प्रोक्तं क्षुरिकास्त्रं ततः शृणु ५४
ओश्चिपिखीचिदक्षि उत्क्षुरिकामन्त्रमुत्तमम्
विशुद्धस्फटिकाकारं क्षुरिकास्त्रं चतुर्भुजम् ५५
विद्याङ्गास्त्रं शिवाङ्गास्त्रं अघोरास्त्रं तृतीयकम्
शिवाङ्गास्त्र द्विधा चैव शिवशस्त्रं तथैव च ५६
सर्वात्मा ज्ञानहृदयं विद्याङ्गाद् योगजं स्मृतम्
भूतजं हृदयं घोरं हृदयं तु त्रिधा भवेत् ५७
सृजेत भूतजेनैव योगजेन तु सम्हरेत्
ज्ञानेन मोक्षदं प्रोक्तमित्येवं तु मनीषिणाम् ५८
पृथिव्यादीनि बीजानि लवरय्यहकारकाः
ब्रह्माख्यां पूर्ववत् ब्रह्ममेवं चैव ततः शृणु ५९
प्रथमं ब्रह्मबीजं सात् द्वितिय्यं पिण्डमन्त्रकम्
कलामन्त्रं तृतीयं तु ब्रह्ममेतत् त्रिधा मतम् ६०
ब्रह्मबीजेष्वयत् ब्रह्म बीजब्रह्ममिहोच्यते
सद्यादीशानपर्यन्तं वक्ष्यमाणं विधानतः ६१
पिण्डमन्त्रमिति ज्ञेयं कलामन्त्रं ततः शृणु
सद्यः कलाभिरष्टाभिर्वामदेवस्त्रयोदश ६२
अघोराष्टकलाष्टाभिश्चतुर्भिश्चैव वक्त्रकम्
ईशानं पञ्चधा भित्वा कल्पयेत्तु विचक्षणः ६३
अष्टत्रिंशत्कला ह्येवं कला ब्रह्मं तु कथ्यते
ब्रह्मरुद्रौ प्रवक्ष्यामि चक्रं न्यसाक्षरक्रमात् ६४
मण्डपं कारयेत् तत्र नवहस्तप्रमाणतः

प्रपां वा कल्पयेद् विद्वान् द्वादश स्तम्भसंयुतम् ६५
वितानं ध्वजसंयुक्तं भूषितं धूपदीपकैः
मण्डपस्य तु तन्मध्ये चक्रं कुर्याद् विशेषतः ६६
पूर्वापरेण मार्गेण युग्मसूत्रं प्रपातयेत्
दक्षिणोत्तरमार्गेण तद्वत् सूत्रं प्रपातयेत् ६७
सप्ताङ्गुलान्तरं ज्ञेयं मानाङ्गुलेन कारयेत्
षोडशाङ्गुलमानेन मध्ये वृत्तं प्रकल्पयेत् ६८
तन्मद्ध्येऽष्टदलं पद्मं तत् बाह्ये षोडशं दलम्
तत् बाह्ये भ्रामयेद् विद्वान् संवीक्ष्य वरणं क्रमात् ६९
पञ्चाङ्गुलान्तरं तेषां द्वाराग्रे शूलमुल्लिखेत्
बाह्यविधौ न्यसेद् धीमान् त्रयस्त्रिंशच्च देवताः ७०
बाह्यवास्तुपदे युक्ता देवान् सङ्कल्प्य तत्र वै
खट्गखेटकसंयुक्तान् वास्तुदेवा न्यसेत् क्रमात् ७१
रक्तवर्णनिभान् देवान् हृदयेऽञ्जलिसंयुतान्
परितः कल्पयेत् तत्र एकैकान्तरितः क्रमात् ७२
ब्रह्माक्षरान् महाशासु रुद्रार्णानि दिशासु वै
प्रागाद्युत्तरपर्यन्तं दिक्षु ब्रह्मं समुद्धरेत् ७३
आग्नेय्यां दिशिकोणान्तं रुद्रमन्त्रं समुद्धरेत्
ब्रह्मरुद्रक्रमेणैवं विन्यासं च ततः शृणु ७४
ब्रह्मसूत्रं न्यसेत् तत्र सितेन रजसा पुनः
नानावर्णविमिश्रेण भ्रामयेत् ब्रह्मसूत्रकात् ७५
रक्तेन धातुना वर्ग प्रस्तरेदक्षराणि वै
यवर्गादष्टमं बीजं तेजोबीजसमायुतम् ७६
चतुर्दश स्वरोपेतं बिन्दुनादसमन्वितम्
ब्रह्महत्यादिकं पापञ्जप्तमात्रेण नश्यति ७७
इदं प्राणदमुद्धृत्य कर्णिकायां विशेषतः

प्राक् दले प्रणवं न्यस्त्वा द्याकारं तस्य दक्षिणे ७८
पप्रगच्छोश्च सद्योसौ न्यसेद् अष्टदलाब्जके
सद्योजाश्च तथातश्च पृच्छिपश्च ततः पुनः ७९
जाकाराश्च इमे सर्वे पूजाद्यब्ददले न्यसेत्
मकारं च सकारं च गोकारं च तथा पुनः ८०
जातायश्च तथा वैनं स्थवसर्गोऽयमेव च
भाश्च वे च तथा भश्च चेतना च तथातिभम् ८१
मिकारमिन्द्रदिक् पात्रे भतीनावे भवेगमः
न वै वताजान्योसाश्च न्यसेत् षोडशदिक् दले ८२
प्रदक्षिणक्रमादेवमन्वेष्वा वरणेषु च
जश्च भश्च तथा पेचमश्चप्यो च तमोक्षरः ८३
खकारश्च विकारश्च खकारोमा तथैव च
काच पश्च तथा पोच ह्योचरे कारयेव च ८४
मुश्चयश्च तथा द्राच रुद्रः शन्नोत एव च
पश्च धिश्च तथा गाश्च पूर्वादीनि प्रदक्षिणम् ८५
चतुर्विं शति मे प्रोक्ता प्रथमावरणे क्रमात्
नश्च माश्च तथा स्वश्च व्यश्च दिश्च ततः पुनः ८६
ने च पश्च तथाव्या च पश्चना चर एव च
बालबाधपराश्चैव रश्चघोचर एव च ८७
स्त्रश्च विश्चककारश्च षश्च पिश्च तथैव च
चोश्च प्रश्च तथा द्रश्च मुश्च प्रश्च श एव च ८८
एत चश्च द्वितीये तु द्वात्रिंशद्वर्णमुच्यते
स विसर्गो मकारस्तु रवतावाक्षरान्य हुः ८९
तत् बाह्ये षोडशदले भश्च मोचय एव च
पाच रूच क्वकारश्च रिकारश्च च एव च ९०
बश्च मोच तथा नश्च मश्च पामस्तथैव च

मोकारश्च मलो चैव सविसर्गोह्य एव च ९१
रेतौ निश्च तथाद्याश्च निश्चयश्च त आयतः
शिकारः प्रणवश्चैव याच्चदश्च तथैव च ९२
सविसर्गे ककारस्तु तेधमाश्च प्रपञ्च च
षट्त्रिंशदक्षरा प्रोक्तास्तृतीया वरणे ततः ९३
नश्च वाच ततो दीप नाधा प्रश्च जनेऽपि वा
व्याश्चर्वश्च समौ प्रश्च लकारो भुक्तिरेव च ९४
निश्चयश्च तथा द्राश्च ओष्ठ ज्येकार एव च
सविसर्गन्त कोरस्तु मश्चसश्चम आयते ९५
णयश्चरश्च तथा हिश्च मोचनश्चध एव च
त्याकारश्च न कारश्च ईकारश्च त एव च ९६
तश्च भूश्च नवौभानौ वश्चभश्च तथैव च
चतुर्था वरणेह्यत्र चतुश्चत्वारिंशदक्षरम् ९७
यश्च वा च तथा देश्च माद्योवाश्च तथैव च
पादोहामाश्चयश्चैव वा कारश्च शि एव च ९८
स विसर्गोमकारश्च न कारः प्रणवस्ततः
यधौ नाधाब्द शाश्चैव शब्दासाः स विसर्गमः ९९
तश्चरणे च विरूकारौ हुकारो बश्चयः ततः
ह्याकारौ सर्वकारौ च शश्चरश्च त आयतः १००
तु हे सेच्च च कारश्च लकारश्च न एव च
लकारश्च निकारश्च स्वराद्योह्हेविस्तथा १०१
रेफ पूर्वोपकारस्तु सश्चद्यश्चपि एव च
न्याकरोपित्तिशाश्चैव त्याच शश्च व एव च १०२
वकारोव्यो च भव्यौ च भकारश्च ततोन्ततः
अष्टषष्ट्य क्षराः प्रोक्ताः पञ्चमावरणे तथा १०३
ज्येकारश्च तथा मोश्च नश्चदापदपास्तथा

यच्च पाकृति पच्चैव कानेचाद्यस्वरस्तथा १०४
यश्च स्रायसकारश्च हार्गसा स विसर्गमम्
न च जोश्च तथा तेजसौ जाते कार एव च १०५
ऐकारश्च विकारश्च ऊकारश्च तथा पुनः
रेफ पूर्वशकारश्च सच्चयश्च ततः पुनः १०६
रेफ पूर्वे तु दीर्घस्तु स्पश्चणे च विरू ततः
न ह्योर्वे घोततीं ताशा ताश्चशा च ततः पुनः १०७
दीर्घरेफौ पकारश्च रश्च पश्चतिथौ ततः
णामिनाभ्याश्च क्षिंश्चैव शीं क्ष्लीं कारस्तथैव च १०८
प्रणवश्च शकारश्च देशादेत्ताश्च जा ततः
स्रश्च षश्च रुकारश्च पूषौ रूप तथैव च १०९
षट् च सप्ततयः प्रोक्ताः षष्ठमावरणे क्रमात्
तयष्ठा षाश्च शेविश्च पाचयश्च ततः पुनः ११०
रूचद्रश्च तथा रौचयश्च नाशाविरेव च
घ्नश्च विश्चर्वसौ चैव याकारश्च तरुश्च वै १११
रेफपूर्वौ चकारश्च रुश्चराडश्च गधौ तथा
डा गणेपि चरूडाश्च रावसाश्चरणेऽपि च ११२
रूस्तुस्तैमाश्च प्रोवैव स्वराद्योमविसर्गयुक्
तश्चवश्च शिमस्ता च वश्चशिश्च भ एव च ११३
तरघोमोगराश्चैव सश्चरश्चश्च एव च
ह्री कारश्च त्रयं दीप ह्रिकारस्य तथा त्रयम् ११४
स्रक्षर त्रीणी हुंकाराः प्रणवं फट् तथास्त्रयः
दीपकश्च तथांशाश्च स्रशीतिः सप्तमावृतौ ११५
द्रौश्चरुश्च तथा मोचनश्चरश्चरुपी तथा
यश्चष्टा च तथा दंश्च तूश्चवश्च लिपी तथा ११६
लिश्च किश्च लिपी चैव लिश्च हिश्चतन्ती पुनः

नामादाश्च तथा द्वंश्चणेपि रूलाश्चद्रू तथा ११७
यश्चला च तथा मूचणेपि रूजाश्च एव च
बीजायाश्चैव बीचैवणेपि बेरुद्र एव च ११८
अक्षरः सविसर्गेण मकारो न यदा तथा
नमो न देनाद्य स्वराः सविसर्गौ मतौ ततः ११९
वीह्य पोमोन ह्यताम्रर्वनाश्चन्ता चनस्ततः
अफट्कारौ च हुंश्चैव प्रणवश्च तथा पुनः १२०
षट् च वौ चैव षट्चैव यथा स्वाचैव हा पुनः
स्वाश्चस्तिश्च सकारश्च सविसर्गौ मनौस्तथा १२१
अष्टमावरणे प्रोक्ता अष्टाशीत्यक्षराः पुनः
सविसर्गोमकारश्च नकारश्च ययौ पुनः १२२
यान्निर्वे च धमाः साश्च जुश्चग्यश्च ऋ एव च
श्वश्च ह्वा च तथा जींश्च ग्रश्चनोच ह आयतः १२३
लीपे पाश्च तथा पश्च लापा नानास्तथैव च
मोनयाश्चैव पिश्चैव रुद्रपाश्चै य आयतः १२४
द्रापणे पिततारू च लश्च नायौ चला ततः
नाकारेणापि रूरांश्च रुद्राश्चैव य एव च १२५
राचरूश्च तथा तद्ध प्रणवश्च ह्य एव च
पश्चसिश्च तथाद्यश्च चापिश्चर्व स एव च १२६
सविसर्गो मकारश्च तश्चभ्यश्चनुयो पुनः
तव गोप्ते च गौयौ च ह्या च गुश्च तथा पुनः १२७
मोनहु प्राश्च हश्चैव स्मश्च व्रंश्चैव नांस्ततः
तश्च हा च तथा स्वा च यकारश्च र आयतः १२८
यश्च भीश्च तथा भूश्च मश्च प्रेच ह आयतः
सा च यश्च तथा रा च यश्च जश्च व एव च १२९
हाच स्वाच तली चैव ज्वश्च सुश्च द एव च

नवमावरणे प्रोक्ताः शताष्टाधिकमक्षरम् १३०
यश्च लाच तथा काच व्यालिकैलिश्च किंस्ततः
यश्च ता च तथा श्वश्च शाश्चयश्च व ग्रायतः १३१
ध्राश्चयश्च तथा ता च ता श्रीश्चाना चयौ पुनः
ता च ना चस्वराच्छाद्यो यश्चन्ताश्च न एव च १३२
ग्रकारश्च मकारश्च नोमणश्च पिता तथा
लश्चपश्च यकारश्च लाचभश्च तथा पुनः १३३
णेचपिश्च तथा रूच पञ्चपुश्च य एव च
ष्वाच पुश्च तथा णश्च विश्वरूपर्भगौ तथा १३४
यश्च भाच तथा गश्चणे च ष्वाश्चरु एव च
पुश्च द्यो च तथात्मश्च व्योचनश्च त एव च १३५
चेचना च तथा तश्च चेचेवाद्य स्वरास्तथा
यश्चरा च तथा पश्च रश्चयश्च तथैव च १३६
मेचरश्च पकारश्च यश्च पाच तथा परू
निश्चद्यो च तथा ये च तश्च पश्चतिणाच्चिवाः १३७
नकारश्च स्वरश्चोद्यो रश्चपश्चन्द्र एव च
रुश्चष्णुश्च तथा पिश्च ह्याच पुश्चरकौ ततः १३८
स्यश्च नैश्च तथा सा चर्वश्च सश्च द एव च
प्रश्च खश्चसुतौ चैव हूकारश्चर्व एव च १३९
दशमावरणे प्रोक्ताः शताश्च द्वादशाधिकाः
कश्चमः सविसर्गस्तु नयायेश्चरु ग्रायतः १४०
याकारश्च तथा कारयश्च राच ह ग्रायतः
नश्चद्ध्या च तथाने च गित्ययोत्यं नियास्तथा १४१
ताच स्थिश्च तथा सश्च मश्च पीच ग एव च
यो बलंश्च नयौ ना च णेच विश्च तथा पुनः १४२
रुकारश्च तथा नो च मश्च सेचनमौ ततः

णेकारश्च विरूतौ च रेकारश्च तथा पुनः १४३
सेतरेणे विरुन्ताश्च नश्चयाश्च य एव च
तश्च नश्च अकारश्चत्मश्च विश्च वधू पुनः १४४
अग्निश्च स्वराश्चाद्योप श्वरूपश्च एव च
नित्योजः सविसर्गश्च ते मथाश्च तथा पुनः १४५
प्रश्च विश्च तथा रूनौ विश्वरूच अपिंस्ततः
व्या विश्चैव तथा व्योमिन् स्माच प्रश्चति एव च १४६
शिक्ष क्ष्मा च तथा सूचब्दश्चंश्चन एव च
ज्ञाश्च गश्च तथा पिंश्च गश्च तश्च परू तथा १४७
तुश्च षिश्च तथा सा च तश्च स्थिश्चर्व एव च
पूतौस्तुश्च अतौ चैव विन्यसेत् तु विशेषतः १४८
दशैकावरणे प्रोक्ताः शतवर्णाश्च षोडश
ककारश्च विलौ चैव अकारो यश्च वा शिराः १४९
घोमानाश्च यकारश्च ज्ञाचवश्च ष एव च
रुश्च पुश्च तयौ चैव वा शिये तत् पगास्तथा १५०
जकारो यश्च नाशाश्च ईकारश्चाद्यमक्षरम्
प्रणवः सविसर्गेण मकारप्रश्चयस्ततः १५१
पारुतिश्च कृकारश्च प्रश्चणे च विरूरकाः
हंसश्चाभ्य स्वरश्चैव यश्चरा च क आयतः १५२
अं चैवाद्य स्वाराश्चैव णेचविश्च तथा पुनः
रुथौ चाद्य स्वराश्चैव यर्थ चैवाद्यमक्षरम् १५३
महामहे वहुश्चैव तथा प्रणव एव च
सविसर्गेण रूकारः प्रणवश्च तथा पुनः १५४
चत्वारश्चैव सूकारा नाकारश्च तथा चतु
देनादेश्च तथा ना च अकारोन्तश्च नस्ततः १५५
अकारश्च स्मकारश्च अश्चन्तश्चर्भ एव च

अाद्य स्वरो मकारश्च मेवोशिश्च च एव च १५६
षांश्च शांश्च तथा वांश्च लांश्च यांश्चस्तथापि च
अोकारेश्च तथा नेच विश्वव्याम च एव च १५७
व्योकारश्च तथा ऊचं रच अाकार एव च
प्रणवश्च वयश्चैव मश्चनद्यम एव च १५८
शिश्च दश्चर्वसौ चैवर्वश्च शश्चव एव च
द्वादशावरणे प्रोक्तो विंशतिश्च शतं क्रमात् १५९
यश्चणा च तथा रश्च वाचपाचप एव च
यकारो ह्यागुवाश्चैव देवमायाश्च एव च १६०
नोश्च पश्चात् प्रयद्युश्च विधं द्राचैवकास्तथा
वश्च सिश्च यथा दश्च भूयभ्यश्च च एव च १६१
रेच घोणे विरुद्राश्च विश्वयद्यश्च अायतः
विश्वणे च तथा पिश्च रूपद्धश्च शुयौ ततः १६२
याश्च गुश्च तथा णेचरु माया च यथौ ततः
माचणे पि तथा रूति ककारायश्च वा पुनः १६३
देय व्याश्च स्वराश्चाद्यो वेचभश्च विमौ ततः
वाचमावाकने चैव कानेचाद्य स्वरस्ततः १६४
त्र्यंश्च सश्च ततो दीपः सविसर्ग व एव च
तकारः प्रणवश्चैवः सविसर्गो न एव च १६५
जकारादीपकश्चैवः सविसर्गो ह कारकः
मकारः प्रणवश्चैव सविसर्गस्प एव च १६६
प्रणवश्च तथा दाच सश्चस्तुश्च तपो ततः
तश्च भावै च स्वाकारः सविसर्गो म एव च १६७
नश्च पेच तथा भश्च प्रश्चगच्छ च एव च
सविसर्गो मकारस्तु नये ताश्च प एव च १६८
न कारश्चैव शाद्रौ च क्षंकारः क्षविसर्गयुक्

त्वैंश्चक्षूंश्च तथा क्षंश्च त्वां क्षां हां हाश्च एव च १६९
त्रयोदशावरणे प्रोक्ता विंशदष्टोत्तरं शतम्
यश्चमोश्च तथा रुश्च वश्चकायौ च एव च १७०
राचयात्क्या च शश्चैव दिश्चमाकार एव च
लयेक्ता च तथा मूच तश्च जाद्यो स एव च १७१
चन्द्रश्च नश्चधारा च विश्चसुश्चाष्ठ एव च
रिश्चवश्च तथाणयश्च रेच वश्चरवौ तथा १७२
यश्च घे च यकारश्च ग्रकारश्च ततः पुनः
रश्चश्चाग्नि तथा लाच काश्चमः सविसर्गयुक् १७३
नियवाशिश्च हौकारः प्रणवश्च तथा चणे
पिश्च रूच तथा वीच शिदासाश्चैव यस्ततः १७४
पाशिदा साश्चणेकारः पिश्चरुय न एव च
यानाश्च महिमौ धीये वाश्च शिश्च तथैव च १७५
दासः सर्वश्च चौचैव शिश्चवंश्च ह एव च
नोयनिश्च तथा नश्च धनिश्चाद्य स्वरस्तथा १७६
मम्पधा च तकारश्च तीरश्च स्वराभ्यकः
नश्चमश्च सनौसश्च शान्तेशायाश्च दीपकः १७७
स विसर्गो वकारस्तु शिकारं विन्यसेत् ततः
स विसर्गो मकारस्तु नयेनांश्च पणांस्ततः १७८
द्राचरुश्च विसर्गेण मकारोनश्चनेत्मकाः
मृश्च ग्रश्च विसर्गेण मकारोनश्चने तथा १७९
मवौ चैव सकारश्च स विसर्गो म एव च
नश्च नश्च तथा ने च तथात्मश्च तथा पुनः १८०
स विसर्गो मकारश्च नकारश्चैव ए ततः
चतुर्दशावरणे प्रोक्तं षट्त्रिंशश्च शतक्षरम् १८१
एवमक्षरविन्यासं कृत्वोद्धरणमारभेत्

सौधमूर्तिं प्रवक्ष्यामि पञ्चवक्त्रसमन्वितम् १८२
पञ्चादशाक्षसंयुक्तं भूजैश्च दशशोभितम्
वरदाभय हस्तं स्याद् अष्टायुधसमन्वितम् १८३
दुकूलपट्टवसनं सर्वाभरणभूषितम्
पद्मासनसमारूढं प्रासादमिति चोच्यते १८४
एकवक्त्रं त्रिणेत्रं स्यात् चतुर्भुजं सुरूपकम्
दिव्याम्बरधरं देवं दिव्याभरणभूषितम् १८५
एवं ब्रह्मसमाख्यातं रुद्रलक्षणमुच्यते
चतुर्वक्त्रं चतुर्बाहु द्वादशाक्षिसमन्वितम् १८६
वरदाभयहस्तं स्यात् छुलश्चांकुशमेव च
सर्वाभरणसंयुक्तं शुक्लयज्ञोपवीतकम् १८७
क्षौमवस्त्रधरं रक्तं ध्यायेद् रूपं विशेषतः
संक्रान्ते विषुवे चैव अयने जन्मऋक्षके १८८
दीक्षायास्थापनान्ते च दुर्भिक्षे दुर्निमित्तके
भूमिकं पेदिशां दाहे ज्वरमार्यादि पीडने १८९
गोक्षीरं गन्धतोयं वा घृतं वा मधुवा पुनः
नालिकेरजलं वापि रुद्रेण स्नापयेच्छिवम् १९०
सप्तजन्म कृतं पापं यजमानस्य नश्यति
सर्वेषामेव देवानां मन्त्रमेवं द्विधामतम् १९१
स्वनाम्नि चादिवर्णे तु ऋचामन्यत् स वह्निकम्
बिन्दुनादसमायुक्तं सर्वेषां मूलमन्त्रकम् १९२
दीर्घाणि ह्यंगमेवं स्यात् षडंगाश्चैव कीर्तिताः
अस्त्रं विसर्गसंयुक्तं ह्रस्वा वै ब्रह्मपञ्चकम् १९३
यथा वर्णास्तथा रूपमस्मिन् मन्त्रे प्रचोदितम्
तेषां मन्त्रं तु सर्वेषां शिवस्य परमात्मनः १९४
सर्वकार्ये प्रयोक्तव्यं सर्वसिद्धिप्रदायकम्

मन्त्रोद्धारमिदं प्रोक्तं शौचाचमनकं शृणु १९५
इति मन्त्रोद्धारस्तृतीय पटलः ३

## अथ शौचाचमन पटलः

अथातः सम्प्रवक्ष्यामि शौचाचमनलक्षणम्
साधकानां हितार्थं तु चतुराश्रमधर्मिणाम् १
ब्राह्मे मुहूर्ते विद्वान् वै मनसाचिन्तयेच्छिवम्
त्रिपादो न त्रिघटिका राजन्ते तु दिने दिने २
ब्राह्म्यं मुहूर्त्तमाख्यातं मम संख्यासु कथ्यते
उत्थाय च बहिर्ग्रामात् गत्वाशौचं समाचरेत् ३
रविं दक्षिणतः कृत्वा विण्मूत्रं तु विसर्जयेत्
दक्षिणाभिमुखोरात्रौ तृणमाधायभूतले ४
करे वा कर्णमूले वा उपवीतं न्यसेद्बुधः
वेष्टयित्वा शिरस्तत्र ऋजुका यो न पाचयन् ५
प्रत्यादित्य जलाग्नीनां चन्द्रगोब्राह्मणान् प्रति
देवालयसमीपे तु कूपे गोष्ठेन भस्मनि ६
क्षेत्रे च वृक्षच्छायायां नद्यामन्तः सरस्वपि
चैत्य वृक्षसमीपे तु वेलायां वाम होदधेः ७
चत्वरे ग्रहमध्ये च न कुर्यादुभयं नरः
वामेन शिश्नं संग्राह्य मृत्पिण्डं दक्षिणे करे ८
जले शुद्धे समागम्य पश्चाच्छौचं समाचरेत्
सकृन्मृत्तिकया शिश्नमक्षमात्रप्रमाणतः ९
तथा सर्वत्र संयोज्य पश्चात् पादे तु मृत्तिकाम्
दश कृत्वा करं वामं सप्तकुर्यात् करद्वयम् १०
शोधयेदम्भसा नित्यं ग्रहस्थानां विधीयते
एतद् उक्तं ग्रहस्थानां द्विगुणं ब्रह्मचारिणाम् ११

त्रिगुणं वा न प्रस्थानां यतीनां तु चतुर्गुणम्
यावन्मात्रामनः शुद्धिस्तावत् शौचं समाचरेत् १२
उत्थायतीरोत् तस्माद् वै अन्यत्रा चमनं चरेत्
प्रक्षाल्य पाणिपादौ च दक्षिणादि क्रमेण तु १३
स पवित्रकरेणैव सर्वकर्मसमाचरेत्
स्थले तु दक्षिणं पादं वामपादञ्जले स्थितम् १४
नभो न दिक्षुसंवीक्ष्य हस्ते गोकर्णवत् कृते
माषमग्नं तु यद्वारि निःशब्दं तत्र पीयते १५
यथा वै त्रितयं पीत्वा आस्येंगुष्ठेन निस्पृशेत्
मुखं हस्तेन संस्पृश्य पद्भ्यामभ्युक्षणं भवेत् १६
अङ्गुष्ठानामिकाभ्यां तु चक्षुषी संस्पृशेत् बुधः
अङ्गुष्ठ तर्जनीभ्यां तु नासिकां संस्पृशेत् पुनः १७
अङ्गुष्ठ कनिष्ठाभ्यां तु श्रोत्रे चैव तु संस्पृशेत्
यदा तत् त्रितयं पीतमृग्यजुःसामतृप्तये १८
अथर्वस्येति हासार्थं तन्मुखं तु द्विधा स्पृशेत्
पादावुभौ तदाभ्युक्ष्य ऋषीणां सप्ततृप्तये १९
मूर्द्धास्ये चक्षुषी श्रोत्रे सर्वाधिक्येन्दु चक्षुषा
भुजौ तु नाभि हृदयमिन्द्रमिष्णवनलांस्तथा २०
क्षुधेकफेत्वधासन्ने सद्य आचमनं कुरु
अङ्गुष्ठे नास्य संस्पृश्य पश्चादाचमनं बुधः २१
एवमाचनं प्रोक्तं तत स्नानविधिं शृणु
इति शौचाचमनश्चतुर्थ पटलः ४

अथ स्नान पटलः

अथातः सम्प्रवक्ष्यामि स्नानं पापहरं परम्
पञ्च स्नानानि विप्राणां हीनानां शुद्धये ततः १

स्नानं वारुणमाग्नेयं दिव्यं वायव्यमानसौ
वरुणं वारिणा स्नानं आग्नेयं भस्मना भवेत् २
दृष्ट्वा सा तपया दिव्यं वायव्यं रजसागवाम्
मन्त्रैर्मानसमित्युक्तं पञ्चस्नानाः प्रकीर्तिताः ३
वक्ष्ये वारुणमाग्नेयं शृणु तत्वं गजानन
नद्यां वाप्यान्तटाके वा कूपे वापि चतुर्विधम् ४
कूपस्नानं न कर्तव्यं वाप्यादिषु च सम्भवे
तटाकेष्वपिन स्नानं सरित्सत्यांगजानन ५
कूपाद् दशगुणं वाप्यां वाप्यादशगुणं सरित्
तस्माद् दशगुणं नद्यः समुद्रगामिकाः पराः ६
प्राङ्मुखोदङ्मुखो वापि स्नानार्थं संव्रजेत् गुरुः
ततः शतगुणं पुण्यं स्नानं प्राङ्मुखमुच्यते ७
तत्रापि दक्षिणन्तीरमनन्तं फलमावहेत्
तोयं शुद्धमशुद्धं वा शिवालयसमीपतः ८
शिवगङ्गेति तां विद्याच्छिवधामाम्बु सेवनात्
तेषान्तीर्थं समागम्य स्नानं कुर्याद् विशेषतः ९
शुचौ देशेसुखासीनः प्राङ्मुखोवाप्युदङ्मुखः
प्लक्षोदुम्बरनिम्बैश्च कुर्याद्वैदन्तधावनम् १०
मलस्नानं पुराकृत्वा विधिस्नानं ततः परम्
रजनीकरणविष्ठैस्तु अङ्गप्रत्यंगघर्षणम् ११
मलस्नानमिदं प्रोक्तं मन्त्रस्नानमतः शृणु
मत्स्यमण्डूकसर्पाद्यैरन्यैश्च जलजादिभिः १२
सेवितं तु जलं नित्यं तस्माद्दुष्टं विशेषतः
तद्दोषशमनार्थं तु शिवतीर्थं प्रकल्पयेत् १३
हस्तमात्रप्रमाणेन परितश्चतुरश्रकम्
हुम्फट्कारेण शुद्धां च मृदं गृह्णीतसाधकः १४

सद्येन स्थापयेन्मन्त्री वामदेवेन सेचयेत्
अघोरेण तु सम्प्पृश्य पुरुषेण त्रिभागिकम् १५
पूर्वेण दक्षिणेनैव तथा चैवोत्तरेण तु
ईशानेन तु मन्त्रेण एकैकमभिमन्त्रयेत् १६
अस्त्रं ब्रह्मशिवं जप्त्वा पूर्वादिक्रमशो न्यसेत्
अस्त्रजप्तं तु यद्भागं दशदिक्षुविनिक्षिपेत् १७
शिवजप्तं तु यद्भागं तीर्थमद्ध्ये विनिक्षिपेत्
फट्कारेणाभिमन्त्रेण नाराचास्त्रप्रयोगतः १८
जले सूक्ष्माश्च ये दोषास्तेषामुच्चाटनं भवेत्
ब्रह्मजप्तस्य चार्द्धेन आत्मनोङ्गानि कर्षयेत् १९
शिरोवक्त्रं च हृदयं पादौ गुह्यं च भागशः
शेषार्द्धेनोप संस्पृश्य स्नात्वा भित्वा पुनः पुनः २०
उपस्पृश्य ततस्नायाच्छिवतीर्थस्य मध्यतः
तीर्थानिपञ्च वै सन्ति द्विजानामुभये करे २१
ब्रह्माग्नि पित्रदेवाश्च ऋषितीर्थानि पञ्चधा
अङ्गुष्ठमूलके ब्राह्मं अग्निमङ्गुलमध्यमे २२
तर्जन्यङ्गुष्ठयोर्मध्ये पैत्रकं तीर्थमुच्यते
अङ्गुलीनां तु मूलेतु दैविकं तीर्थमुच्यते २३
अङ्गुल्यग्रे ऋषीतीर्थं पञ्चदेवांश्च विन्यसेत्
अग्निर्वायुः प्रजाद्ध्यक्षः तीक्ष्णरश्मिः पुरन्दरः २४
अङ्गुष्ठादौ न्यसेद् विद्वान् क्रमेणैव व्यवस्थितान्
पिबेद् वै ब्रह्मतीर्थेन चाग्नितीर्थेन प्रोक्षणम् २५
चक्रवत्युपचारेण सुगन्धामलकादिभिः
जलक्रीडावसाने तु वक्त्रमुद्राभिषेचयेत् २६
शिवब्रह्माङ्ग विद्याङ्गैः स्नानं कृत्वा विचक्षणः
पञ्चब्रह्मशिवाङ्गैश्च त्रिपदैरघमर्षणम् २७

अन्तर्जले पिधायाक्षं सर्वाङ्गं नैव दर्शयेत्
दर्शयेच्च ततः तीर्थं मुखमग्रोध वा पुनः २८
मुखमग्रं तु यत् प्रोक्तं शताद्ध्यर्धं भवेत् क्रमात्
अर्धाङ्गेध्यर्ध साहस्रं निम्नगेकोटिरुच्यते २९
ध्यानयुक्तो विनिक्रम्य क्रमेणाचम्य तत्वतः
ततः सूर्य इति प्रातर्मध्याह्नेत्वाप उच्चरेत् ३०
सायेऽग्निश्चेति जप्त्वा तु क्रमेणाचमनं चरेत्
आपोहिष्ठेति सम्प्रोक्ष्य सावित्र्या चोदकं क्षिपेत् ३१
स्थित्वा सन्ध्यामुपासीत प्रातः शुद्धकृताञ्जलिः
स्थितो वासीनमध्याह्ने उपासीनस्तुरात्रिके ३२
एकवारं यथा शक्यं प्राणायामं ततो जपेत्
अष्टवारं तु सावित्रीं सन्ध्याकालेषु नित्यशः ३३
मित्रा सत्येनेमम्मेति सततं सममन्त्रितः
एभिर्मन्त्रैस्त्रिभिर्विद्वान् प्रातरादावुपासयेत् ३४
देवां नृषीन् पितृंश्चैव वामाघोरेण सद्यकैः
तर्पयेत् तु यथा विद्वान् पूर्वे चोत्तरदक्षिणे ३५
अप्रशस्तं निशि स्नानं रवेरन्यत्रदर्शनात्
वृत्रस्य रुधिरं नित्यं स्रवन्तिनिशिनिम्नगाम् ३६
तस्मात् स्नानं च पानं च न कुर्वीत कदाचन
रात्रौ वा परिगृह्णीयाद् देवार्थं चात्मनश्च वै ३७
सुवर्णानि समक्षं वा प्राणायामेन वा जलम्
प्राणायामत्रयं वापि कारयेद् देशिकोत्तमः ३८
जलशुद्धिर्भवे देवं निशि स्नानायगम्यते
तस्माद् दीपं तु गृह्णीयाद् देवार्थं चात्मनश्च वै ३९
एवं समाचरेन्नित्यं शिवमन्त्रं ततो जपेत्
ऋग्भिर्जप्तैर्जलं स्पृष्ट्वा मूर्ध्निपादान्तकं क्रमात् ४०

शिवमन्त्रं यथा शक्ति जपेत् ब्रह्माङ्गकैर्बुधः
फट्कारेण तु मन्त्रेण शिवतीर्थं तु संहरेत् ४१
धौतवस्त्रं तु संग्राह्य चार्द्रवस्त्रं विसर्जयेत्
शिवधामनयेत् पश्चात् प्रदक्षिणमथाचरेत् ४२
प्रणम्यदण्डवत् भूमौ शिवं परमकारणम्
यत्र यत्र मुखद्वारे कवाटद्वयमिष्यते ४३
तत्र तत्र कवाटे तु नवदेवान् समर्चयेत्
भूजङ्गं च पतङ्गं च ऊर्ध्वाधः कल्पयेत् क्रमात् ४४
तत् स्कन्दपट्टिका मध्ये त्वा संस्थाप्य विशेषतः
स्वनामाद्येन चार्णेन गन्धपुष्पादिनार्चयेत् ४५
अस्त्रमन्त्रेणमतिमान्तं मुद्रां तु प्रदर्शयेत्
कवाटोद्घाटनं कृत्वा प्रविशेन्मण्डपं प्रति ४६
ततस्तु शोधनीं बद्ध्वा हुंकारेण विशोधयेत्
जलस्नानमिदं प्रोक्तं भस्मस्नानमथो शृणु ४७
इति स्नान पटलः पञ्चमः ५

अथ भस्मस्नान पटलः

अथातः सम्प्रवक्ष्यामि भस्मस्नानविधिं परम्
श्रीकरं च पवित्रं च हारमाभरणं तथा १
लोकवश्यकरं पुण्यं पापनाशं दिने दिने
गावच्छिवपुरात् पञ्चक्षितिं प्राप्ताः शिवेच्छया २
सुरासुरैर्मध्यमानात् क्षीरोदात् सागरोत्तमात्
पञ्चगावः समुत्पन्नाः सर्वलोकस्य मातरः ३
नन्दासुभद्रासुरभिः सुशीलाः सुमनास्तथा
कपिलाकृष्णाश्वेता च धूम्रारक्ता तथैव च ४
नन्दादि सुमनान्तानां वर्णमेतत् प्रकीर्तितम्

सर्वलोकोपकारार्थं देवानां तर्पणाय च ५
गोमातर स्थिता भूमौ स्नानार्थं हि शिवस्य तु
गोमयं रोचनामूत्रं क्षीरं दधि घृतङ्गवाम् ६
षडङ्गानि पवित्राणि सर्वसिद्धिकराणि हि
गोभिर्यज्ञा प्रवर्तन्ते गोषुदेवां प्रतिष्ठिताः ७
गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदक्रमाः
शृङ्गमूले गवां नित्यं ब्रह्माविष्णुश्च संस्थितौ ८
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च
शिरोमध्ये त्वहं वत्सभूतैः परिवृतः सह ९
ललाटे संस्थितो वत्स तत्त्वं भ्राता विशेषतः
कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ १०
कर्णयोरश्विनीदेवौ चक्षुषीशशिभास्करौ
दन्तेषु मरुतो देवा जिह्वायां वरुणो स्थितः ११
सरस्वती तु हुङ्कारे यमयक्षौ च गराडयोः
सन्ध्याद्वयं ततोष्ठाभ्यां ग्रीवे चन्द्रे समाश्रितः १२
पुरमध्येषु गन्धर्वा पुराग्रेषु च पन्नगाः
पुराणां पश्चिमाग्रेषु गणाह्यः सरसस्तथा १३
रुद्राश्चैव तु नाडिस्था वायवः सर्वसन्धिषु
श्रोणीतटस्थाः पीतरो ह्युरसिस्थ उमारमे १४
श्रीरपाने गवान्नित्यं धर्मोलांगूलमाश्रितः
आदित्यरश्मयो वालागोमूत्रे जान्हवीस्वयम् १५
ऋषयश्च तथा सर्वे रोमाग्रेषु च संस्थिताः
उदरे पृथिवी जाताजन्तवश्च गजानन १६
चत्वारः सागराः पुर्णागवां ये च पयोधराः
आसितं विश्वविघ्नेश यथा गोषु प्रतिष्ठितम् १७
दत्तश्चैव हुतं भुक्तं गोषु सर्वं चराचरम्

कपिलायां तु गोमूत्रं कृष्णायां ग्राह्य गोमयम् १८
क्षीरं श्वेत निभायां तु धूम्रायाश्च दधिस्मृतम्
सर्पिः संग्राह्य रक्तायां सर्ववर्णेषु रोचना १९
गोमूत्राद् गुल्गुलुं जातः सुगन्धिः प्रियदर्शनः
आहारः सर्वदेवानां शिवस्य च विशेषतः २०
गोमयादुत्थित श्रीमान् बिल्ववृक्षः शिवप्रियः
तत्रास्ते पद्महस्ता श्रीःश्रीवृक्षस्तेन चोच्यते २१
बीजान्युत्पल पद्मानां पुनर्जातानि गोमयात्
यत् बीजञ्जगतः किञ्चित् ज्ञेयं तत् क्षीरसम्भवम् २२
दध्नः सर्वाणि जातानि माङ्गल्यान्वर्थ सिद्धये
घृताद् अमृतमुद्भूतममराणामति प्रियम् २३
तस्मात् तासां षडङ्गैश्च स्नापयेच्छिवमादरात्
गोरोचना च माङ्गल्या पवित्रा सर्वकामदा २४
इत्थं गावस्समालोच्य भस्मापिगोमयं गृहेत्
भूमा वा पतितं ग्राह्यं सद्यमन्त्रेण गोमयम् २५
पिण्डानि वाममन्त्रेण ह्यघोरेण तु शोषयेत्
पुरुषेण तु तद्दग्ध्वा ईशानेनाभिमन्त्रयेत् २६
केतकी पुष्पसंयुक्तं नवभाण्डेषु निक्षीपेत्
अथवा चाग्निहोत्रेषु भस्मग्राह्यं विचक्षणैः २७
जलस्नानं पुराकृत्वा भस्मस्नानमतः परम्
जलस्नानं विनाचोर्द्ध्वे भस्मस्नानं विधीयते २८
शिवब्रह्माङ्गजप्तेन भस्मस्नानं समाचरेत्
ईशानेन कमुद्धूल्य वक्त्रं तत् पुरुषेण तु २९
बहुरूपेण हृदयं नाभिं वामेन कीर्तितम्
सर्वाङ्गं सद्यमन्त्रेण समुद्धूल्य विचक्षणः ३०
उषितं वा ससन्त्यम्य शुद्धवस्त्रं परिग्रहेत्

पादौ पाणी च संशोद्ध्य पश्चादाचमनं कुरु ३१
भस्मनोद्धूलनाभावे त्रिपुण्ड्रं तु विधीयते
आध्वरं कर्म तत् सर्वं न त्रिपुण्ड्रं न चाचरेत् ३२
तर्जन्य नामिका मध्यैस्त्रिपुण्ड्रं तु समाचरेत्
ब्रह्माविष्णुश्च रुद्रश्च त्रिपुण्ड्रस्याधि दैवतम् ३३
शिरस्थाने स्वयं ब्रह्म ललाटे स्कन्ध एव च
कण्ठे विनायकश्चैव बाहौ च केशवस्तथा ३४
हृदयेत् वीश्वरः प्रोक्तो नाभौ चैव प्रजापतिः
जान्वोस्तु चाश्विनी चैव पादयोः पन्नगास्तथा ३५
सर्वतीर्थेषु यत् स्नानं सर्वयज्ञेषु यत् फलम्
तत्फलं कोटिगुणितं भस्मस्नानेन सिद्ध्यति ३६
भस्मस्नानमिदं प्रोक्तं अर्चनाङ्गमतः शृणु
इति भस्मस्नान पटलः षष्ठः ६

## अथ अर्चनाङ्ग पटलः

अथातः सम्प्रवक्ष्यामि अर्चनाङ्गसमुच्चयम्
पाद्यमाचमनं चार्घ्यं गन्धपुष्पं च धूपकम् १
दीपं चैव निवेद्यं च लिङ्गनृत्तं दशैव तु
दशाङ्गैस्तु समायुक्ता पूजाश्रेष्ठा शिवस्य तु २
दीपान्तमर्चनं प्रोक्तं नैवेद्यान्तन्तु पूजनम्
शान्तिकं बलिनृत्तान्तं पूजात्रिविधमुच्यते ३
उशिरं चन्दनं दूर्वा सिद्धार्थकसमन्वितम्
चतुरङ्गसमायुक्तं पाद्य द्रव्यमुदाहृदम् ४
एलालवङ्गकर्पूरत्र पूजाति फलैर्युतम्
आचमनं तु पञ्चाङ्गं द्रव्यैरेतैः प्रसिद्ध्यति ५
आपः क्षीरकुशाग्राणि यवसिद्धार्थतण्डुलैः

तिलैर्व्रीही समायुक्तमर्घ्यमष्टाङ्गमुच्यते ६
यवतण्डुलसिद्धार्थव्रीहिभिश्चाक्षतं विदुः
व्रीहितण्डुलसंयुक्तमक्षतं तु प्रकीर्तितम् ७
अगरुं चन्दनं चैव कोष्ठं कुंकुममेव च
सममर्धं पादमेवा कर्पूरेण समायुतम् ८
गन्धद्रव्यमिदं प्रोक्तं पुष्पान् सम्यगतः शृणु
श्वेत कृष्णं तथा रक्तं सात्विकादिगुणत्रयम् ९
पुष्पाणि पीतवर्णानि सत्वराजसमिश्रितान्
कृष्णां निलोत्पलादन्यान्तामसान् परिवर्जयेत् १०
नन्द्यावर्तन्तु पूर्वाह्णे मधाह्ने करवीरकम्
साये तु मल्लिका प्रोक्ता ह्यर्धरात्रौ द्विकर्णिका ११
द्रोणं च श्वेतपद्मं च जाती च बहुकर्णिका
नन्द्यावर्तं श्रियावर्तं मन्दारं शतपत्रिकम् १२
श्वेतार्कमालती चैव पुन्नागं कुरवन्तथा
एवमादीनि पुष्पाणि सात्विकानि समादिशेत् १३
रक्तोत्पलं तथा पद्मं बृहतीधुर्धूरकं तथा
पाटलीरक्तपुष्पाणि राजसानि विनिर्दिशेत् १४
कर्णिकारं च धुर्तूरसरलारग्वधौ तथा
एवमादीनि पीतानि मिश्रकाणि विनिर्देशेत् १५
करञ्जवकुलं चैव शिरीषं केतकी तथा
लाङ्गली च विहीतं च बन्धूकं चैव डाडिमी १६
किंशुकं च मदन्ती च कुमुदानि च वर्जयेत्
अतिपक्वमपक्वं च मुकुलैर्नार्चयेद् धरम् १७
केशकीटापविद्धानि लूतसूत्राव्रतानि च
स्वयं पतितपुष्पाणि पर्युषितानि वर्जयेत् १८
शमीबिल्वमपामार्गं कुशदूर्वा सहा तथा

नागनन्दी रुद्रपर्णीधातकी पत्रमेव च १९
भद्री चैव महाभद्री द्रोणपत्रं तथैव च
उग्रगन्धैस्तु निर्गन्धैर्नार्चयेत् तु विशेषतः २०
पत्र जातिषु सर्वेषु बिल्वपत्रं प्रशस्यते
तथैव पुष्पजातीनां पद्मपुष्पमुदाहृतम् २१
उत्सवादिषु यात्रायां परिवेष क्रियासु च
सकलानामलङ्कारे वर्ज्या ग्राह्याप्रकीर्तिताः २२
एवं पुष्पाणि चोक्तानि धूपं तु सम्प्रवक्ष्यते
कृष्णागरुर्भवेदेव कार्यः सद्विगुणं भवेत् २३
त्रिगुणं चन्दनं प्रोक्तमीषत् कर्पूरमिश्रितम्
शीतारिनामधूपोयं मधुनां पावितं भवेत् २४
एवं धूपं परं श्रेष्ठं उत्तमन्तद्विशिष्यते
गुल्गुलुं वा घृतं वापि गुलं वा बिल्वधूपकम् २५
कुष्ठं वा चन्दनं वापि घृतमश्रं सुधूपयेत्
गोघृतं वाथतैलं वा कर्पूरं वर्तिसंयुतम् २६
चतुस्त्रयंगुलायाम दीपज्वालाविशिष्यते
दीप प्रियो हि भगवान् देवदेवः सदाशिवः २७
अर्चनाङ्गविधि प्रोक्ता त्वर्चनायाविधिं शृणु
इति अर्चनाङ्गः सप्तमः पटलः ७

अथ शिवार्चनविधि पटलः

अथातः सम्प्रवक्ष्यामि शिवार्चनविधिक्रमम्
सर्वपापहरं दिव्यं सर्वलोकसुखावहम् १
श्रीप्रदं सर्वविघ्नघ्नं राज्ञो राष्ट्रविवर्धनम्
तदपि द्विविधं प्रोक्तमात्मार्थं च परार्थकम् २
क्षणिके चललिङ्गे च स्थण्डिले मण्डलेऽपि च

कौतुके भक्तिचित्रे वा आत्मार्थेऽर्चनमारभेत् ३
ग्रामे दृष्ट्वाधवान्येषु शिवधामनिनिर्मिते
तेषु स्थावरलिङ्गेषु परार्थं यजनं स्मृतम् ४
सिकतं तण्डुलं चान्नं नदीमृद्गोमयं तथा
नवनीतं च रुद्राक्षं पिष्टं चन्दनकूर्चकम् ५
पुष्पमालाङ्गुलं चेष्टं क्षणिका द्वादश स्मृताः
पूजान्ते क्षणिका त्याज्याः तत्त्वं हृदि समानयेत् ६
स्फटिकं रत्नजं शैलं बाणलिङ्गं च लोहजम्
चललिङ्गं समाख्यातं स्थण्डिलं शालितण्डुलैः ७
सिकतैर्वा समाख्यातं मण्डलं करमानतः
गोमयालेपिते तत्र संलिख्ख्याब्जदलाष्टयुक् ८
मण्डलं त्विति विख्यातं द्वादश प्रतिमार्चनम्
कौतुकं त्विति विख्यातं भित्तिचित्रं तथैव च ९
आत्मार्थ यजने ख्याता यथा युक्त्या समर्चयेत्
दीपान्तं वाहविष्यन्तमात्मर्थे तु परार्थके १०
सामान्यमिदमाख्यातं परार्थस्तु विशेषतः
नित्योत्सवं तु नित्याग्नियजनं पादुकार्चनम् ११
नीराजनं रजन्यां च गीतं नृत्तं च वाद्यकम्
तेषु कुर्याद् यथा शक्यं लिङ्गे स्थावर संज्ञके १२
उक्तेषु तेषु सर्वेषु विना नित्योत्सवं ततः
पादुकाभ्यर्चनं त्यक्त्वा शेषाण्यात्मार्थमाचरेत् १३
दीक्षितानां द्विजातीनामात्मार्थमनुलोमिनाम्
परार्थमादिशैवानामात्मार्थं वा समर्चयेत् १४
वह्निमण्डलमध्यस्थ ज्वालाभिर्वह्निबीजतः
पादाङ्गुष्ठाच्छिखायावन् निर्दहेच्छुष्ककाष्ठवत् १५
विचिन्त्य भस्मीभूतं तु पिण्डीकृत्वा निलेन तु

तस्मिन् प्रागुक्तममृतं स्रवन्तं भस्मनि स्मरेत्  १६
आत्मानमानयेत् तत्र सर्वात्महृदयेन तु
दिव्यदेहो भवेदेवमङ्गन्यासमथ शृणु  १७
मूर्धादिसृष्टिरेवं स्यात् पादादिः संहृतिर्भवेत्
नासादि हृदयान्तन्तु स्थिति न्यासं प्रकीर्तितम्  १८
पञ्चमेन शिरः पञ्चपञ्चभिः कल्पयेत् ततः
चत्वारिवदनां यत्र वक्त्रमन्त्रेण भावयेत्  १९
पञ्चमं वदनं तत्र सर्वात्म हृदयेन तु
अन्यथा कल्पयेत् घोरं हृद्ग्रीवांसेष्वधोरसि  २०
तन्नाभ्युदरपृष्ठेषु न्यसेद् वा मन्त्रयेद् दश
गुह्यं पायुस्तथा चोरु जानुनी जंघकाद्वयम्  २१
स्फिचौ द्वौ तु कटिः पार्श्वौ न्यसेत् सद्यं ततोऽष्टधा
पाणिपादौ तथा नासाशिरोबाह्ये न्यसेत् बुधः  २२
दक्षिणे कटिपार्श्वे तु क्षुरिकास्त्रं प्रकल्पयेत्
मूर्धानने च हृदये गुह्यो वै पादयोः क्रमात्  २३
ब्रह्माणि सृष्टिमार्गेण ईशानादीनि विन्यसेत्
पादादारभ्य सद्यादि संहरं न्यासकर्मणि  २४
नाभ्यादि हृदयान्तन्तु स्थितिं न्यासं प्रकीर्तितम्
सर्वात्मानं तु हृदये स शिवं शिरसि न्यसेत्  २५
शिखायां ज्वालिनीं न्यस्त्वा वर्मणादेहमध्यतः
अस्त्रं हस्तप्रदेशेषु पञ्चाङ्गान्योमाचरेत्  २६
विद्याङ्गं पूर्ववन्न्यस्त्वा नेत्रं नेत्रेषु योजयेत्
द्वात्रिंशत् सन्धिदेशेषु बीजमुख्यं तु विन्यसेत्  २७
हृत्पद्मे तु न्यसेदेवमष्ट त्रिंशत् कलान्वितम्
अङ्गुष्ठमात्रमचलं ध्यायेत् प्रणवमीश्वरम्  २८
मानसैः कुसुमैर्गन्धैर्धूपदीपोपचारकैः

पूजयेद्धृदये नैव आत्मशुद्धिस्तु कीर्तिताः २९
द्वारदेवान् समभ्यर्च्य गन्धपुष्पादिभिः क्रमात्
वाग्देवीं द्वारशाखोर्ध्वे सव्ये वामे श्रियं यजेत् ३०
विघ्नेशं मध्यमे पूज्य नन्दिवर्गां श्च दक्षिणे
यमुनां च महाकालं वामे भ्यर्च्य स्वनामभिः ३१
स्थानं संमृज्य सम्प्रोक्ष्य दिग्बन्धं चास्त्रमन्त्रतः
भौमदिव्यन्तरिक्षस्थान् विघ्नान् प्रोत्सारयेद्धृदा ३२
भूमीष्ठान् प्राणदृष्ट्या तु तत्वदृष्ट्यान्तरिक्षगान्
ज्ञानदृष्ट्या तु दिक् स्थांस्तां स्तन्नामाख्याय मुद्रया ३३
ब्रह्मस्थाने तु ब्रह्माणं पुष्पगन्धादिभिर्हृदा
स्थानशुद्धिर्भवेदेवं द्रव्यशुचिं ततः शृणु ३४
गोमयेनोपलिप्याथ द्रव्यपात्राणि विन्यसेत्
अर्घ्यपात्रं शरावं च पाद्याचमनपात्रकौ ३५
वर्धनीजलभाण्डं च अस्त्रमन्त्रेण क्षालयेत्
हृदयेन निरीक्ष्याथ कवचेनावकुण्ठयेत् ३६
अर्घ्यपात्रं समादाय सन्दाह्यभ्यन्तरं हृदा
संस्पृश्य तस्मिं श्वेताब्जं ध्यात्वा वै मण्डलत्रयम् ३७
तेषु तत्वत्रयं स्मृत्वा आत्मविद्या शिवात्मकम्
शिवाम्बुना शिवेनैव अपूर्वब्रह्मपञ्चकैः ३८
कलावर्णात्मकैः पिण्डैरभिमन्त्र्य यथा क्रमम्
सुगन्धिकुसुमान् गन्धान् प्रक्षिप्याम्बुनिमन्त्रवित् ३९
तत्तोयं सर्वपात्रेषु द्रव्यपात्रेषु सर्वतः
बिन्दौ बिन्दुं विनिक्षिप्य कुशेनैव हृदाणुना ४०
द्रव्यशुद्धिर्भवेदेषां मन्त्रशुद्धिरतः परम्
ॐकारादि युतामन्त्रा नमस्कारान्तयोजिताः ४१
पूर्वं शिवं समुच्चार्य ततो ब्रह्माङ्गकाद्युभौ

विद्याङ्गं बीजमुख्यं च क्षुरिकां च समुच्चरन् ४२
तत् तद्रूपान्वितान्ध्यात्वा पूर्ववन्मन्त्रशुद्धये
क्रियाकाले प्रयोक्तव्या स्वाहान्तं हवने स्मृताः ४३
मालाद्यैश्वर्यजातानि मन्त्राणि ह्यानितानि च
मन्त्रशुद्धिरियं प्रोक्ता लिङ्गशुद्धिरतः परम् ४४
हुम्फट्कारेण मन्त्रेण महाघण्टां प्रदापयेत्
प्रच्छादनपटं त्यक्त्वा लिङ्गशुद्धिं समारभेत् ४५
निर्माल्योद्वासनारम्भे स्नानारम्भे तदन्तके
धूपकाले हविष्यादौ हविष्यन्ते तथैव च ४६
नित्योत्सवान्ते नृत्तान्ते महाघण्टां प्रदापयेत्
निर्माल्योद्वासने काले स्नानान्ते तु विशेषतः ४७
हविष्यादौ च नृत्तान्ते कुर्याद्यवनिवान्ततः
स्नानारम्भे तथा धूपे हविष्यान्ते तथैव च ४८
नित्योत्सवादिकाले च पटं प्रच्छादनं त्यजेत्
शिवे समर्चितं पूर्वं हृदयार्घ्यं विसर्जयेत् ४९
अङ्गुष्ठतर्जनीभ्यां तु पुष्पं ग्राह्य विचक्षणः
कनिष्ठानामिकामध्ये त्यजेत् पर्यूषितं गुरुः ५०
विसर्जने च काले तु पुष्पं मूर्ध्निनिदापयेत्
न पुष्परहितं तुर्याच्छिवमौलिं गुरूत्तम ५१
पिण्डिकेशस्थ निर्माल्यं चण्डेशाय निवेदयेत्
लिङ्गशुद्धिः सपिण्डान्ता क्रमेणैव समापयेत् ५२
लिङ्गं प्रक्षाल्य चास्त्रेण पीठं पाशुपतेन तु
त्यजेदुषितगन्धादि जलैर्दक्षिणहस्ततः ५३
सङ्ख्याय शुद्धयः पञ्च ततस्त्वासनकल्पनम्
आसने मूर्तिमावाह्य त्वेतद्वितयमध्वनि ५४
व्याप्यव्यापकभावेन ज्ञात्वा यजनमारभेत्

इच्छाशक्त्युत्थितं पद्मं पृथिव्यादिशिवान्तकम् ५५
पार्थिवाराडमयं स्कन्दमाप्यान्तं नालमेव च
प्रधानतत्वपर्यन्तं तन्नालं कराटकैर्युतम् ५६
ग्रकारादिक्षकारान्तं शम्बरं कराटकं स्मृतम्
श्यामाभं नालमित्युक्तं नालसूत्रं त्विदं स्मृतम् ५७
पुंस्तत्वादि कलान्तं च पीठं दलाष्टकान्वितम्
धर्मं ज्ञानं च वैराग्यमैश्वर्यं पादमेव हि ५८
ग्राग्नेयादिक्रमेरौव सिंहरूपोग्रदंष्ट्रकाः
सितरक्तपीतकृष्णास्त्रिरोत्रा वज्रपीठकाः ५९
ग्रन्योन्याभिमुखाः सर्वे सिंहकोटिसमायुताः
न्यस्तव्या भार्द्रमन्त्रेरा भीमाभीम पराक्रमाः ६०
ग्रधर्मज्ञानवैराग्या नैश्वर्यान्वै क्रमेरा तु
प्रागाद्युत्तरपर्यन्तां नियतांश्च सितप्रभान् ६१
न्यस्त्वा गुरात्रयेनैव ऊर्ध्वच्छदमथच्छदम्
पीठस्योर्ध्वे महामाया ग्रन्थिस्तत्वङ्गजानन ६२
विद्यातत्वमयिं तस्य कर्शिकां परिचिन्तयेत्
इच्छाशक्त्यादिबीजानि विद्येशांश्च दलानि वै ६३
मन्त्रास्तत् केसरेप्रोक्तास्ते विद्यायां प्रतिष्ठिताः
केसरे बीजमुख्येन शक्तिं तत्र प्रकल्पयेत् ६४
सितरक्तासितांश्चैव मूलमध्याग्रकान् क्रमात्
दलंश्वेतं विजानीयात् कर्शिकाकनकप्रभा ६५
पञ्चविंशतिकानीह बीजानि हरितानि वै
तप्तचामीकरप्रख्यं शक्तिव्यूहं न्यसेत् ततः ६६
केसरेषु च मध्ये तु वामादीन् पूर्वतः क्रमात्
वामाज्येष्ठा च रौद्री च कालीकलविकरगी तथा ६७
बलविकरगी बलप्रमधनी सर्वभूतदमनात्मिका

मध्ये मनोन्मनीं देवीं कर्णिकायां निवेशयेत् ६८
सूर्याख्यमण्डलं पात्रे केसरे सोममण्डलम्
कर्णिकोपरिचाग्नेयं मण्डलस्थां मनोन्मनीम् ६९
इच्छाशक्त्यादिनालान्तमनन्तासनमीरितम्
गुणान्तं धर्मज्ञानादि सिंहाख्यमासनं विदुः ७०
योगासनं तु तत् ख्यातं परमेशस्य सुव्रत
पद्मग्रन्धिं समारभ्य केसरान्ताब्जमासनम् ७१
शक्त्यन्तं केसरादूर्ध्वं कर्णिका विमलासनम्
एवमब्जासनं कल्प्य पूजयेत् स्वस्वनामभिः ७२
मुकुलीं प्रथमं बध्वा पद्ममुद्रामतः परम्
शशकर्णिं शिवं विप्रः कर्णिकान्तं निदर्शयेत् ७३
आसनोपरिमूर्तिं तु सदाशिवमनुत्तमम्
पञ्चवक्त्रशिरोपेतं पञ्चाधिकदशेक्षणम् ७४
दशदोर्दण्डसंयुक्तमष्टायुधसमुज्वलम्
अभयं शूलपरशुं वज्रं खट्गं च दक्षिणे ७५
वरदं चाङ्कुशं पाशं घण्टां वह्निं च वामतः
अच्छः स्फटिकसंकाशमष्टत्रिंशत् कलात्मकः ७६
पञ्चब्रह्माङ्ग विद्याङ्ग दशबीजात्मकं परम्
दिव्याम्बरधरं चार्थ वज्राङ्कितजटाधरम् ७७
बद्धपद्मासनासीनं कम्बुग्रीवं सुयौवनम्
इच्छाज्ञानक्रियाचेति नेत्रत्रयसमन्वितम् ७८
शुक्लयज्ञोपवीतं च देवं ज्ञात्वा परापरम्
सर्वाभरणसंयुक्तं ध्यात्वा ह्यावाहयेत् ततः ७९
लिङ्गं मूलपरीणाहे कल्पयेत् तु मनोन्मनीम्
तदेस्या परिस्थिते लिङ्गे चले चैव सदाशिवम् ८०
एवं सङ्कल्प्य मूर्तिं तु ततोवाह्यमनुं स्मरन्

पुष्पैरञ्जलिमापूर्य तदा वाहनमुद्रया ८१
प्रविष्टे हृदयाग्रे तु शिवरूपं विचिन्तयेत्
प्रणवं मनसोच्चार्य सर्वज्ञादिर्गुणैर्युतम् ८२
सर्वोपाधिविनिर्मुक्तं कारणानां तु कारणम्
अतर्क्यमप्रमेयं च धृतमव्ययमीश्वरम् ८३
बिन्दावभ्युदितं ध्यायेत् स्थिरधीः पुरतः स्थिरे
सदाशिवात्ममध्यस्थं विन्यसेद् देशिकोत्तमः ८४
आवाहनादिभिर्भक्त्या परमेशं सुपूजयेत्
आवाह्य सद्यमन्त्रेण स्थापयेत् गुह्यमन्त्रतः ८५
बहुरूपेण सान्निध्यं पुरुषेण निरोधनम्
सर्वावयवसम्पूर्णमिशानेन तु भावयेत् ८६
आवाहनाख्यया वाह्य स्थापयेच्छान्तमुद्रया
ध्वजाख्यया तु सान्निध्यं रोधनं निष्ठुराख्यया ८७
पाद्यं हृदाणुनादत्वा वक्त्रेणाचमनं ततः
अर्घ्यं तु शिरसादत्वा पञ्चमूर्धसु बुद्धिमान् ८८
करन्यासं विना तत्र दहनप्लावनं विना
सर्वमात्मविशुध्यर्थमाचरेत् तु गजानन ८९
आवाहने तु पूजान्ते विसर्जनविधौ तथा
अर्घ्यं दद्यात् तु मन्त्रज्ञस्त्रिषु कालेषु बुद्धिमान् ९०
अर्घ्ये विलेपने स्नाने त्रिषुगन्धं प्रेयोजयेत्
आवाहनार्घ्य पाद्येषु स्नाने धूपे विलेपने ९१
नैवेद्ये च विसर्गे च पुष्पमष्टसुयोजयेत्
आवाहनं विना सप्तकाले वारिसुयोजयेत् ९२
गन्धं पुष्पेण संयोज्य पुष्पं गन्धेन योजयेत्
धूपं दीपेन संयोज्य दीपं दीपेन योजयेत् ९३
तिलोद्भवेन तैलेन हस्तयन्त्रोद्भवेन वा

गोघृतेनैव वा लिङ्गमभ्यज्य हृदयाणुना ९४
मर्दयेच्छालिपिष्टेन हरिद्रा चूर्णकेन वा
शिवेन पिण्डमन्त्रैश्च कलाभिर्मानमन्त्रकैः ९५
सहस्राक्षरमन्त्रेण व्योमव्यापिदशाक्षरैः
पञ्चाङ्गैश्चैव विद्याङ्गैः क्षूरिकाबीजमुख्यकैः ९६
सुगन्धिकुसुमोपेतं जलौघैरभिषेचयेत्
सद्योजातेन गोमूत्रं गोमयङ्गुह्यकेन तु ९७
क्षीरं तु बहुरूपेण दधितत् पुरुषेण तु
ईशानेन घृतं स्नाप्य पञ्चगव्यमथैकतः ९८
समादायोक्तसंख्याभिः स्नापयेत् तु दशाक्षरैः
मधुने क्षुरसे नैव नालीकेरजलेन च ९९
अच्छगोरोचनामिश्र जलैः संस्नापयेद्धृदा
द्रव्येषूक्तेष्वथा लाभे यथालाभं परिग्रहेत् १००
घृष्ट्वा हरिद्राचूर्णैश्च स्नापयेद् गन्धवारिणा
वस्त्रमाचमनीयं च अर्घ्यं तु हृदयाणुना १०१
दुकूलपट्टकार्पास वासोभिर्विविधैरपि
इन्ध्याभिः पुष्पमालाभिः पत्रच्छेदैरथार्च्चयेत् १०२
सम्पत्तौ हेमपट्टाद्यैर्विविधैरङ्गभूषणैः
सम्भूष्य हेमपुष्पैस्तु कुसुमैश्च सितासितैः १०३
विज्ञाप्यलयभोगाङ्गं देवदेवं क्षमापयेत्
जपं स्तुत्यं नमस्कारं ध्यानं श्रद्धावदित्यपि १०४
नृत्तं गीतं च वाद्यं च महाघण्डा स्वनादिकम्
लयाङ्गमुक्तं पूजायां देवदेवस्य नित्यशः १०५
भोगाङ्गानि च शेषाणि लयैर्भागैश्च पूजयेत्
पञ्चवर्णमार्गेण क्रमादावरणं न्यसेत् १०६
सद्यं पश्चिमदिक्पात्रे वाम देवन्तथोत्तरे

अघोरं दक्षिणे यष्ट्वा पुरुषं पूर्वपात्रतः १०७
ईशानमीशदिक्भागे न्यस्त्वा सम्यक् समर्चयेत्
स्नानदीपं पृथक् तेषामङ्गानामंगभावतः १०८
कर्णिकायां ततो याम्ये संयजेदात्म तत्वकम्
विद्या तत्वन्ततः सौम्ये शिवतत्वं तु मद्ध्यमे १०९
आत्मानमन्तरात्मानं परमात्मानमेव च
यजेत् तत्व त्रयं स्थाने हृदापुष्पैः सितासितैः ११०
गर्भावरणमाख्यातं विद्येशावरणं ततः
गर्भावरणबाह्येषु पद्मपत्रेषु संयजेत् १११
अनन्तं पूर्वतः पूज्य त्रिमूर्तिं वह्निगोचरे
सूक्ष्मं तु दक्षिणेभागे श्रीकण्ठं निर्ऋृतौ तथा ११२
शिवोत्तमं तु वारुण्यां शिखण्डिं वायुगोचरे
एक नेत्रं तथा सौम्ये ह्येकरुद्रं तथैशके ११३
द्वितियावरणं ह्येवं प्रणवेन स्वनामभिः
उमा वै चोत्तरेयष्ट्वा पूर्वभागे वृषन्ततः ११४
दक्षिणे गजराजानं गुहं वै वारुणे तथा
महाकालं तु निर्ऋृतौ भृंगीशं वायुदेशतः ११५
चण्डेशमीशदिक्भागे नन्दीशं चाग्निगोचरे
उमादिक्षुमुखान्तानि तृतीयावरणेदले ११६
इन्द्रादिलोकपालांश्च ऐन्द्र्यादिषु प्रपूजयेत्
ब्रह्माणं दक्षिणेभागे विष्णुमुत्तरतो यजेत् ११७
लोकेश गणयोर्मध्ये ब्रह्मविष्णूयमोत्तरे
चतुर्थावरणं ह्येवमथास्त्रावरणं शृणु ११८
आशास्वष्ट सुवज्रादींश्चक्रं सौम्येब्जमन्त्रके
लोकपालान् सहस्त्रांश्च स्वस्वमन्त्रेण पूजयेत् ११९
गर्भावरणमन्त्राणां बीजमुद्रां तु दर्शयेत्

विद्येशानाङ्गणेशानां कालकण्ठं तु दर्शयेत्  १२०
लोकेशानामथास्त्राणां शूलमुद्राः प्रकीर्तिताः
देवतार्चनकाले तु यथा त्वाच्छादयेत् बुधः  १२१
पापरोगनिमग्नानां मृष्टानां च स्वकर्मभिः
क्रूराणां कुब्जकादीनं कृशिकानां तथैव च  १२२
तथा कृत्रिमभक्तानां निन्दकानां च पापिनाम्
अन्यच्च दोषदृष्टानामदृष्टानामिति स्मृतम्  १२३
महाघण्टानिनादेन राक्षसाश्चासुरास्तथा
ब्रह्मराक्षसपैशा च भूतयक्षोरगेश्वराः  १२४
दूरं गच्छन्ति नादेन यान्ति देवाः सुसन्निधिम्
धूपदीपौ प्रदातव्यौ घण्टारवसमन्वितम्  १२५
ज्वलदङ्गारसम्पूर्णं धूपपात्रं नरेण तु
सव्यहस्तेन सङ्ग्राह्य घण्टां वामेन पाणिना  १२६
सुरूपान्धीरनिर्घोषां वादयन् सर्वदा गुरुः
ध्वनिनाधूपखण्डाया ग्रामशान्तिकरं भवेत्  १२७
दद्यादाचमनं तत्र दर्पणच्छत्रचामरान्
मनसा वा स्वरूपेण दर्शयेत् तु विचक्षणः  १२८
बीजमुद्रां नमस्कारां मुकुलिं पद्ममुद्रिकाम्
ध्वजाख्यां लिङ्गमुद्रां च देवदेवस्य दर्शयेत्  १२९
शिवेच्छा प्रतिमाः सर्वाः पूजयेत् तु यथोचितम्
आसनावरणे कृत्वा द्वारपालार्चनं विना  १३०
नित्यस्नानं विनालोभे स्नानं पर्वणि पर्वणि
चण्डेशपरिवाराणि विना बिम्बानिपूजयेत्  १३१
शिवस्य परिवाराणि समभ्यर्च्य यथा विधि
मुद्रादर्शनवेलायां शिवं स्नाप्य निवेदयेत्  १३२
समारभ्यशिरः पूर्वं दक्षिणोत्तर पश्चिमे

ऊर्ध्वभागे तु मन्त्रज्ञः पञ्च स्वर्घ्यं निवेदयेत् १३३
सद्योघोरेन रेवामेद त्वार्घ्यं पञ्चमान्तकम्
अपसव्यार्घ्यमित्युक्तं पूजाकालेषु नित्यशः १३४
सव्यापसव्यमार्गाभ्यां दत्वार्घ्यं तु पुनः पुनः
ऊर्ध्ववक्त्रे तु दातव्यं संमूखार्घ्यं पराङ्मुखम् १३५
संमुखं संस्थि देहस्य विसर्गेर्घ्यं पराङ्मुखम्
नैवेद्यं दापयेत् पश्चात् यथा विभवविस्तरैः १३६
भक्ष्यभोज्यां न पानानि सत्फलाज्यगुलान्वितम्
तेन दीपेन दत्वा तु नित्यां हि कमथो यजेत् १३७
शिवाग्नौ रक्षिते तस्मिन् परितः शोध्य दीप्य च
परिषिच्य हृदापूज्यलोकेशानां ततो मतम् १३८
सम्पूज्य च ततः पद्मे शिवं ब्रह्माङ्गकैरधः
घृतान्नेन घृतेनाथ जुहुयात् तण्डुलेन वा १३९
प्रत्येकं तु त्रिसंख्या वा ह्येक संख्यमथापि वा
परिषेचनमन्त्रेण पुनः सिच्य विसर्जयेत् १४०
एवं नित्याग्निकार्यं तु मध्यमे चाथमेपि च
उत्तमे चाग्निकार्योक्तं सर्वं कुर्याद् विचक्षणः १४१
परिवारबलिं दत्वा निर्माल्यान्नं विसर्जयेत्
मुखवासं च ताम्बूलं दत्वा नित्यपवित्रकम् १४२
सर्वच्छिद्रापनोदार्थं धूपितं प्रोक्षितं ततः
दशबीजमनुस्मृत्य पवित्रमधिरोपयेत् १४३
पूजाकाले तु सम्प्राप्ते लिङ्गमूर्ध्निपवित्रकम्
अवतीर्यार्चिते लिङ्गे तं पवित्रं पुनर्नयेत् १४४
नित्योत्सवं तु कर्तव्यं विध्युक्तं त्रिषुसन्धिषु
नीराजनं तु कर्तव्यं रात्रौ रात्रौ विशेषतः १४५
प्रक्षाल्यपादौ हस्तौ च प्र ।म्याष्टाङ्गमादरात्

प्रदक्षिणत्रयं कृत्वा मन्त्रञ्जप्त्वा क्षमापयेत् १४६
कालत्रयङ्गुणातीतः कालात्मा शिवशाश्वतः
उदयस्थिति संहारकरण्व पुण्यैककारणा १४७
अनेकतप कृत्यानि नयसर्वाणि सर्वदा
फलप्रदान्यमोघानि सम्पूर्णानि प्रसीदमे १४८
एतन्मन्त्रं जपित्वेशं क्षमस्वेति वदेत् गुरुः
स त्रिपाद त्रिघटिका रात्र्यन्ते तु दिने दिने १४९
ब्राह्मं मुहूर्तमाख्यातं संघोष्यस्त्विति कथ्यते
तथा पञ्च महाशब्दं कृत्वा शुभनिवृत्तये १५०
शौचं स्नानादिकं कृत्वा पूजान् कृत्वादिशैवकम्
भास्करस्योदयात् पूर्वं दृष्ट्वारभ्य यथा क्रमम् १५१
यामैका चोत्तमासन्धिर्मध्यमा पञ्चनाडिका
मध्यमाया कनिष्ठा स्याद् यथा विभवमाचरेत् १५२
सा चैकाघटिका स्नाने घटिकाद्वयमर्चने
नैवेद्यं घटिकार्धं च घटिकार्धं बलिं ततः १५३
घटिकार्धैकसंयुक्ता वेला तत्र विधीयते
नित्योत्सवे तथा स्नाने शुद्धे वै सुद्धनृत्तके १५४
सार्द्धत्रिघटिका प्रोक्ता द्रव्यसम्पन्नपूजने
असम्पद्यजनं प्रोक्तं मध्यमाधमकालतः १५५
एवं समर्चिते सर्वमर्चितं च चराचरम्
तस्माल्लिङ्गार्चनं कार्यं प्राज्ञैश्च सुमहात्मभिः १५६
ब्रह्मचर्येण वेदैश्च यज्ञैश्च विविधैः शुभैः
अग्निहोत्रैश्च सन्यासैराश्रमैश्च सुपालितैः १५७
त्रिदण्डैश्च व्रतैः सर्वै घृतैः पाशुपतादिकैः
एतैरन्यैश्च यतिभिः प्राप्यते यत्फलं शुभम् १५८
तत्फलं लभते साधु लिङ्गस्यार्चन तत् परः

एकोह्यभ्यर्च्यते लिङ्गन्तपस्तप्यति चा परः १५९
तयोर्मध्ये तु स श्रेष्ठो यो लिङ्गं सम्प्रपूजयेत्
अनेकजन्मसाहस्रे भ्रममाणस्तु योनिभिः १६०
कश्चिदाप्नोति वै मुक्तिं लिङ्गार्चनरतोनरः
शिवार्चनविधिः प्रोक्तो मुद्रायालक्षण शृणु १६१
इति शिवार्चनविधि पटलोष्टमः ८

## अथ मुद्रालक्षण पटलः

अथातः सम्प्रवक्ष्यामि मुद्रायालक्षणं परम्
अर्चनादिक्रियाकाले संयोज्या सा सलक्षणा १
अस्त्रीवक्त्री महामुद्रा शोधनी च संहारिणी
पञ्चमुखी च सुरभि द्रव्या च मुकुली तथा २
पद्मा च शशकर्णी च शक्तिबीजा तथा भवेत्
आवाहनी च शान्ता च मनोरमध्वजा तथा ३
निष्ठुरा लिङ्गमुद्रा च गायत्री कालकण्ठका
शूलमुद्रा नमस्कारात्रयोविंशति कीर्तिताः ४
द्वौ मुष्टी संहति कृत्वा शीघ्रं हस्तौ प्रसारयेत्
अस्त्रमुद्रेति विख्याता सर्वेषां च भयंकरी ५
वामहस्तो परिस्थाप्य अङ्गुल्यो दक्षिणस्य तु
आकुञ्चयेत् ततः सर्वा नङ्गुष्ठेन तु बन्धयेत् ६
वामाङ्गुष्ठेषु सम्पीड्य अङ्गुल्योङ्गुष्ठकं दृढम्
इयं वक्त्राख्यमुद्रा तु स्नानार्थं देशिकस्य तु ७
हस्ताभ्यां संस्पृशेत् पादौ द्वौहस्तौ मस्तके न्यसेत्
एषामुद्रा महामुद्रा करसंस्कारपश्चिमे ८
पाणिमूले तु संलग्नौ हृद्देशे तु परस्परम्
कृत्वैवं ताडयेत् पाणिमुद्रेयं शोधनी भवेत् ९

प्रसार्य दक्षिणाङ्गुल्यस्त्वङ्गुष्ठं मूर्ध्निसंस्थितम्
मुष्टिवत् सततं कृत्वा ह्येषा संहारिणी स्मृताः १०
कृत्वान्योन्य गताङ्गुल्याः पृष्ठतो हस्तयोर्द्वयोः
तिर्यक् त्वेकं न्यसेत् तत्र अङ्गुष्ठाभ्यां समाक्रमेत् ११
तर्जिन्या मध्यमादूर्ध्वे नामिके चोच्छ्रिते शुभे
कृत्वा पञ्चमुखी ख्याता मुद्रेयं शङ्करस्य तु १२
वेणी बन्धं करौ कृत्वा ह्यङ्गुष्ठौ युग्मसंस्थितौ
तर्जनीमध्यमे लीनौ कनिष्ठानामिके युते १३
एवं चत्वारि युग्मं तु दिव्यामृतसुवर्षिणि
इयं सुरभिमुद्रा च द्रव्यशुद्ध्यर्थमुच्यते १४
कृत्वाञ्जलिं कराभ्यां तु अङ्गुष्ठानामिकान्वितम्
प्रसारयेत् ततः शेषां मुद्रेयं द्रव्यरूपिणी १५
द्वौहस्तावेकतः कृत्वा मध्ये तु सुषिरन्तयोः
सरोजमुकुलाकारां मुकुलिन्तु प्रदर्शयेत् १६
पूर्वोक्तामुकुली या तु हृद्देशान्निः सृताङ्गुली
व्याको च कमलाकारां पद्ममुद्रां तु दर्शयेत् १७
तर्जन्यौ कुञ्चिते चैव तयोरग्रे निधापयेत्
द्वयोरंगुष्ठशिरसि तेषां मध्यघनः समाः १८
कृत्वा तु मणिबन्धे तु वामे सव्यन्तथा न्यसेत्
मुद्रेयं शशकर्णी तु विज्ञेया योगकर्मणि १९
तर्जनीं कुञ्चयेदेकामङ्गुष्ठे तु तथा पुनः
शक्तिमुद्रेति विख्याता शक्तीनां च प्रकल्पयेत् २०
उत्तानौ तु करौ कृत्वा वेणीबन्धं तु कारयेत्
अङ्गुष्ठौ प्रक्षिपेन्मध्ये हस्तसम्पुट गोपितौ २१
कनिष्ठकौ तथा चैव मुहुः कृत्वा प्रसारितौ
अग्रे गुरुसमायुक्तां बीजमुद्रां प्रदर्शयेत् २२

तर्जन्यङ्गुष्ठलग्नाग्रा शान्तेयं सम्प्रकीर्तिता
हस्ता वुत्तान्नकौ कृत्वा कन्न्यसौङ्गुष्ठकौ न्यसेत्  २३
मूलपर्वे समौ कृत्वा मुद्रेषावारिधि स्मृता
बलितं हस्तयोः कार्यमुत्ताने तु कनिष्ठकौ  २४
तयोर्वामावलि ज्ञेया वलीते मध्यमेऽपि च
कुञ्चिते नामिका या च स्वपाणितल योजिते  २५
देशिन्यौ प्रसृतौ कृत्वा तयोरग्रे नियोजयेत्
अङ्गुष्ठौ मूलपर्वस्थौ तयोरेव हि कुञ्चितौ  २६
मनोरमेति विख्याता शिव सा युज्यदायिका
वामे प्रदेशिन्यग्रं तु वेष्टयेत् सव्यपाणिना  २७
कृत्वोर्ध्वे तु ततोऽङ्गुष्ठं हृदये सन्नियोजयेत्
वामाङ्गुष्ठं च वामाभिस्तिसृभिर्वेष्टयेत् क्रमात्  २८
ध्वजमुद्रासमाख्याता संयोज्या योगकर्मणि
अङ्गुष्ठौ मध्यतः कृत्वामुष्टिभ्यां पीडयेदुभौ  २९
हस्तौ वाप्युभयौ कृत्वा निष्ठुरां सन्नियोजयेत्
कृत्वामुष्टि भवेद्धस्तौ व्युद्धमङ्गुष्ठसंस्थितौ  ३०
मुद्रैषा लिङ्गसंज्ञा तु कृत्वा देशिकदर्शने
अन्योन्यान्तरगाः सर्वाः करपृष्ठाग्रयोजिताः  ३०
अङ्गुष्ठाङ्गुलयः कुर्यादक्षरं च नरान्तने
पूजाकर्मणि गायत्रीं गायत्र्यां तु प्रयोजयेत्  ३१
कृत्वामुष्टिं ततो स्थाने तदानङ्गुलियोजिते
अङ्गुष्ठाग्रौ च संलग्नौ कालकराठीं तु दर्शयेत्  ३२
अन्योन्यान्तरितं कृत्वा पाणि पृष्ठेन योजयेत्
मध्यमे चोच्छ्रिते कृत्वा शूलमुद्रे कीर्तिताः  ३३
सतताङ्गुलि संलग्नौ हस्तौ हृद्देशमाश्रितौ
सर्वेषां बन्धनं कार्यं वमाङ्गुष्ठनिपीडनम्  ३४

नमस्कारेति विज्ञेया सर्वकर्मणि कारयेत्
विधिप्रपूरणार्थं तु कृत्वा मुद्रां तु देशिकाः ३५
मुद्रायालक्षणं प्रोक्तं हविष्यलक्षणं शृणु
इति मुद्रालक्षण पटलो नवमः ९

अथ हविष्यविधि पटलः
अथातः सम्प्रवक्ष्यामि हविष्यविधिमुत्तमम्
नीवारं चैव गोधूमं यवं वेणुसमुद्भवम् १
प्रधानतण्डुलं प्रोक्तन्नैवेद्यस्य शिवस्य तु
अलाभे चोक्तबीजानामथवा शालितण्डुलैः २
श्वेतशाली महाशाली रक्तशाली तथैव च
कृष्णशाली हेमशाली शालायश्च तथान्यकाः ३
शालयोर्व्रीहहयोर्वाथ तण्डुलार्थं प्रगृह्य च
वर्णगन्धरसैरुष्टास्त्वयोग्यास्तण्डुलास्तथा ४
चातुर्वर्णोद्भवानारी पतिपुत्रवतीमता
तेषामेक तमे जाता अन्या वा कृतमङ्गला ५
सा तण्डुलक्रियायास्तु युक्ताभक्तिसमन्विता
आदित्यरश्मि सन्तप्ता धान्यं प्रक्षिप्युलूखले ६
प्राङ्मुखोदुङ्मुखो वापि कुट्टने मुसलेन तु
तुषान् व्यपोह्य शूर्पेण कम्बुकां च कणान्त्यजेत् ७
अखण्डान् तण्डुलान् ग्राह्य श्वेतवर्णां स्तु निर्मलान्
द्विगुञ्जं माषकं विद्याद्धरणं माषविंशतिः ८
धरणाष्टौ पलं चैव पलंमुष्टिरिहोच्यते
चतुर्मुष्टिस्तथा पादं प्रस्थं पादचतुष्ककम् ९
आढकन्तच्चतुष्कं स्याद् द्रोणन्तस्य चतुष्ककम्
तवधामार्गमुद्दिश्य नैवेद्यन् तत् प्रकल्पयेत् १०

प्रातः साये तथा भ्यर्च्य मध्याह्ने च निवेदनम्
प्रस्थद्वयं तु तत् काले पाचयित्वा निवेदयेत् ११
एकदीपं द्विकाले च रात्रौ दीपद्वयन्त्विह
एवमुक्तप्रमाणेन क्षुद्रमध्याधमाधमम् १२
प्रातः काले च मध्याह्ने द्विप्रस्थन्तण्डुलं हविः
साये संख्यान्तमभ्यर्च्य दीपं प्राग्द्विगुणं भवेत् १३
प्रस्थद्वयं त्रिकालेषु प्रत्येकं च निवेदयेत्
दीपं चैव चतुःप्रोक्तासा ये तु द्विगुणं तथा १४
अधमन्त्रयकं चैव वाद्यध्वनिसमन्वितम्
स्नाने भोजनके याने प्रच्छन्नपटमार्जने १५
बलिदानेप्युषः काले वाद्यघोषं तु कारयेत्
मध्यमस्याधमे प्रोक्तं मध्याह्ने त्वाढकं हविः १६
प्रस्थद्वयं द्विकाले च दीपं विंशतिकं भवेत्
मध्यत्रये तु मतिमान् वाद्यध्वनि समायुतम् १७
त्रिकालं बलिलिङ्गं च बलिदानन्नयेत् ततः
मध्यमामध्यमं विद्यात् त्रिकाले ष्वाढकं हविः १८
अर्धयामे तदर्द्धं च चतुर्विं शति दीपकम्
अर्द्धरात्रे तु या पूजार्धयाममिहोच्यते १९
स्नानानि तु निवेद्यान्तं बलिहोमविवर्जितम्
वामान्तं वाथ कुर्वीत स्नात्वा वर्जितपूजितम् २०
सायङ्कालस्य यामान्ते पूजायामान्तमुच्यते
त्रिकालं च बलिः प्रोक्तं पुष्पार्घ्यं तु क्रमेण तु २१
वाद्यध्वनिसमायुक्तं शंखकाहलसंयुतम्
मध्याह्ने नित्यहोमं च शिवमन्त्रसमन्वितं २२
मध्यमस्योत्तमे चैव त्रिकाले स्वाढकत्रयम्
आढकश्चार्धयामेतु दीपसप्ततिसंयुतम् २३

त्रिकालं बलिरन्नं स्यात् द्विकालं होममाचरेत्
सर्ववाद्यसमायुक्तं षट्काले च सुघोषयेत् २४
षड्विधं यत्र कुर्वीत कालसङ्ख्या न विद्यते
उत्तमस्याधमं ज्ञेयं द्रोणेनैव त्रिसन्धिषु २५
द्रोणार्धमर्धयामे तु दीपमष्टशतं भवेत्
त्रिकाले बलिरुक्तं स्यात् त्रिकालं होमसंयुतम् २६
वादकानां चतुर्विं शत् सर्ववाद्यसमन्वितम्
गणिकाश्च चतुस्त्रिंशत् चतुर्विं शति वार्धकम् २७
रूपयौवनयुक्ताभिस्त्रिकालं नृत्तमाचरेत्
पञ्चाचार्यसमायुक्तं कालं यामसमन्वितम् २८
उत्तमं मध्यमे तस्मिन् चतुर्वर्णं हविस्त्रिषु
पायसादीन्विधाने तु प्रत्येकं द्रोणतण्डुलैः २९
द्रोणे तु चोदनं कुर्यात् पाचयित्वा पृथक् पृथक्
द्रोणान्न्यधार्धयामे तु दीपं चैव शतद्वयम् ३०
त्रिकालं बलिहोमं च शीतारिधूपमुच्यते
वाद्यकानां चतुस्त्रिंशत् पञ्चाशत् गणिकान्वितम् ३१
कालं यामं तु तस्योक्तं नृत्तं कुर्यात् त्रिसन्धिषु
घटिका द्वे भवेत् स्नानं घटिकैकार्चनं भवेत् ३२
निवेद्यार्त्थे त्रिपादं स्याद्यात्रार्थे तु त्रिपादकम्
अतः परं त्रिघटिका शंखवाद्यादिशोभनैः ३३
शेषकाले महाहव्यं भक्ष्यादीनां निवेदनम्
परिवेषं विनोदं च गेयमुक्तादिभिश्चरेत् ३४
अत्रार्धयामपूजान्ते कुर्यात् कवाटबन्धनम्
अन्यकालेन कर्तव्यं कवाटस्य तु बन्धनम् ३५
उत्तमान्मध्यमं प्रोक्तं उत्तमोत्तममध्यमे
उत्तमोत्तममुद्दिश्य हविष्यक्रममुच्यते ३६

पायसादीनि पक्वानि पञ्चद्रोणेन वै पृथक्
तदर्द्धमर्द्धयामे तु दीपं पञ्चशतं भवेत् ३७
त्रिकालं बलिहोमं च पञ्चाशद्वाद्यसंयुतम्
तण्डुलात् त्रिगुणं क्षीरं कदलीफलसंयुतम् ३८
मुद्गभिन्नं चतुर्थांशं यथा शत्यागुलान्वितम्
पायसान्नमिदं प्रोक्तं कृसरान्नन्ततः शृणु ३९
तण्डुलस्य चतुर्थां शं प्रक्षिप्य तिलचूर्णकम्
तच्चतुर्थां श शमाज्यं तु पाचयित्वा यथा विधि ४०
कृसरान्नमिदं प्रोक्तं गुलान्नमधुनोच्यते
तण्डुलात् द्विगुणं क्षीरं तदर्धां शंगुलं क्षिपेत् ४१
गुलार्धं प्रक्षिपेदाज्यं गुलान्नमिदमुच्यते
तण्डुलस्य चतुर्धां शं मुद्गजन्तत्र बुद्धिमान् ४२
नालिकेरफलैः सूक्ष्मैर्मुद्गस्यार्धं सुनिक्षिपेत्
महाहविरथो वक्ष्ये वसुद्रोणाधमाधमम् ४३
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमोत्तमम्
चतुःपञ्चषट्गुणितं मध्यमत्रितयं तथा ४४
सप्ताष्ट नवगुणितमेतदुत्तमकन्त्रयम्
उपदंशं ततो वक्ष्ये शृणु तत्त्वङ्गजानन ४५
द्वात्रिंशदंशमेव स्यात् सर्पिस्तत्र परिग्रहेत्
षोडशांशं तु गुल्माषं दद्ध्यष्टांशं तु संग्रहेत् ४६
कदलीपनसाम्रां च परिपक्वान् समर्चयेत्
तरुणाश्चोपदं शास्युः शृणु वक्ष्योपदंशकान् ४७
कदली चैव कुश्माण्डोर्वारुकं च पटोलिका
कोशातकी चरूपुष्पं वेत्राग्रं लिकुचं तथा ४८
प्रस्थस्य त्रिफलं चैव स्तुषित्वा देशिकोत्तमः
वल्लीशूलं तथान्त्रान्तं सर्वान्य न्यासमं तथा ४९

अलाबुन्नालिकेरं च सूरणंकारवल्लिका
अन्ये रसयुताः शुद्धाः कन्दमूलफलास्तथा ५०
कटुकाश्च तथा म्लाश्चतिक्ताश्च मधुरास्तथा
तथा लाभो पदंशां च पचेल्लवणसंयुतम् ५१
प्रक्षालनं ततः कृत्वा सत्कृत्वोद्भिस्तु तण्डुलान्
बीजमुख्येन मन्त्रेण शोधयित्वा विशेषतः ५२
अर्धाधिकयुतन्तोयं तण्डुलस्य प्रमाणतः
चुल्लिमध्ये न्यसेदग्निं स्वबीजेन तु चार्चयेत् ५३
तस्योपरि तथा पात्रं काष्ठैरग्निं प्रदीपयेत्
क्रिमिजुष्टैस्तथा काष्ठैर्विस्फुलिङ्गयुतेन च ५४
गन्धपुष्पादिनाभ्यर्च्य वस्त्रेणा वेष्टयेत् ततः
पिपीलिकाश्रितैश्चैव काष्ठैरग्निन्नदीपयेत् ५५
अपक्वमतिपक्वं च परिम्लानं च वर्जयेत्
पात्राणि च शरावां च बाह्यशुद्धिं विशेषतः ५६
सर्वपात्रेषु तद्बाह्ये त्रिपुण्ड्रं तु विचक्षणः
हुङ्कारेण तु मन्त्रेण सर्वमुत्थापयेत् क्रमात् ५७
मुखं वस्त्रेण वाच्छाद्य पाचकस्तान् समुद्धरेत्
अभ्युक्ष्यपरितोमार्गं छत्रपिञ्छसमायुतम् ५८
शङ्खध्वनिसमायुक्तमालयं तु प्रवेशयेत्
मण्डपस्योत्तरे भागे दक्षिणे वा निधाय च ५९
हविष्ये चोपदंशे च आज्ये नैवाभि हारयेत्
सौवर्णं रजतन्ताम्रमधवा कदलीदलम् ६०
शुद्धकांस्येन वा कार्यं पात्रं शतपलेन तु
स्थलकापादरहिता त्रिपादीकार्यमस्थिता ६१
पीठोत्सौधा महाभद्राः शुद्धकांस्यमयाः समाः
दर्वीं हस्ते समादाय सप्रमाणां सलक्षणाम् ६२

तदाज्ये नाभिचर्यादौ पात्रमन्नेन पूरयेत्
हविष्यस्य चतुर्भागं निवेद्यं स्यात् शिवस्य तु ६३
पूर्णचन्द्रमिवाकारं गुल्माषेन गुलेन च
फलेनाज्येनदध्ना वा उपदंशैः समावृतम् ६४
निवेदयेच्छिवायैवं हविष्यं सर्वसिद्धिदम्
हृदयेन तु मन्त्रेण निवेद्य विधिपूर्वकम् ६५
चतुर्भागैकभागेन परिवारे बलिन्ददेत्
चतुर्भागैकभागेन होमकर्मसमाचरेत् ६६
शेषांस्तु देशिकायैव दातव्यं भोजनं हितम्
आचमनं हृदादत्वा चण्डेशाय निवेदयेत् ६७
ताम्बूलं दापयेत् पश्चात् पत्रस्यैकफलं तथा
फलाच्चतुर्गुणं प्रत्रं तैलमिश्रं सचूर्णकम् ६८
तत्वान्यान्युपचाराणि हृदयेन तु दापयेत्
सदाशिवस्य निर्माल्यं मनुष्याणां न भोजनम् ६९
पशूनां च गजादीनां वा जले वाथ निक्षिपेत्
अथवा वह्निनादाह्य भूमौ वा खनयेत् बुधः ७०
सकलानां तु नैवेद्यं परिचारकभोजनम्
तदप्यं यजनैश्चैव भोजने त्वथदोषकृत् ७१
हविष्यलक्षणं प्रोक्तमग्निकार्य विधिं शृणु
इति हविष्यविधि पटलोदशमः १०

अथ अग्निकार्यविधि पटलः

अथातः सम्प्रवक्ष्यामि अग्निकार्यविधिक्रमम्
नित्यन्नैमित्तिकं चैव प्रतिष्ठा या मथोत्सवे १
ग्रहणे विषुसंक्रान्त्यां शत्रूणां च प्रदर्शने
शान्तिके पौष्टिके चैव दीक्षायां तु पवित्रके २

गर्भाधानादिशैवानां तेषां तु दहनादिषु
प्रायश्चित्तादिकालेषु वह्निकर्मसमाचरेत् ३
कुण्डे वा स्थण्डिले वापि द्विविधे होमकर्मणि
वर्तनाविधिनावत्स कुण्डं चेद्वर्तयेत् बुधः ४
वालुकै स्थण्डिलं चेत् तु प्रत्यग्रे हस्तविस्तृते
शोधनं क्षालनं चैव शोषणं पाचनं तथा ५
रेखात्रयं तु पूर्वाग्रं रेखैकाचोत्तरामुखा
उल्लेखनं तु चास्त्रेण अभ्युक्ष्यकवचेन तु ६
पूर्वामुखास्त्रयोरेखा ब्रह्माविष्णुश्च रुद्रकः
उत्तराभिमुखारेखा शिवा सा तु न संशयः ७
पुष्पाक्षतैः समभ्यर्च्य शिवाग्निं तत्र साधयेत्
सूर्यकान्तोद्भवं श्रेष्ठमरण्युद्भवमेव वा ८
क्षेत्रे वा श्रोत्रियागारे जातवेदसमानयेत्
ताम्रपात्रे शरावे वा सौवर्णेराजतेऽपि वा ९
नवमृण्मयपात्रे वा तदलाभे विशेषतः
अग्निं तत्रैव निक्षिप्य आग्नेये तन्त्रवित्तमः १०
शोधयेदस्त्रमन्त्रेण कवचेनावकुण्ठयेत्
बीजमुख्येन मन्त्रेण अमृतीकृत्यभावयेत् ११
क्षुरिकामर्चयेन्मंत्री गन्धपुष्पादिभिः क्रमात्
कुण्डे वा स्थण्डिले वापि दर्भेण विष्टरं न्यसेत् १२
तन्मध्ये तु सुसंस्थाप्य वागीश्वरीं विशेषतः
ऋतुस्नाता स कृच्चस्ताद्ध्याययेत् तु विचक्षणः १३
त्रिभिर्भज्याग्नि नाकुण्डं योगमार्गेण निक्षिपेत्
बीजमन्त्रेण संस्थाप्य शौचमाचमनं ददेत् १४
सद्यमन्त्रेण संस्नाप्य प्रशान्तेति त्रिधास्मरन्
गर्भाधानं कृतं ह्येवं गर्भपुंसवनन्ततः १५

वामदेवेन मन्त्रेण रुद्राण्यभ्यर्चयेत् ततः
प्रोक्तं पुंसवनं ह्येवं सीमन्तं च ततः शृणु १६
शिरसा बहुरूपेण गन्धपुष्पादिभिर्युतम्
वक्त्रेण चास्त्रमन्त्रेण जातकर्मसमाचरेत् १७
हृदयेन द्विवक्त्रं तु द्विनासी च षडक्षिकम्
त्रिमेखलं त्रिपादं च चतुश्रृङ्गं द्वयं शिरः १८
सोपवीतं जटामौलिमुक्षारूढं सिताननम्
सप्तहस्तं सुदीप्ताङ्गं सप्तजिह्वासमावृतम् १९
हिरण्याकनकारक्ता कृष्णा च सुप्रभा तथा
अतिरिक्ता बहुरूपा जिह्वा सप्तप्रकीर्तिताः २०
हिरण्यावारुणे जिह्वा कनकामध्ये व्यवस्थिताः
रक्ताचोत्तरजिह्वा स्यात् कृष्णायाम्यादिशि स्थिता २१
सुप्रभा पूर्वजिह्वा स्यादतिरक्ताग्नौ व्यवस्थिता
बहुरूपे शदिक्भागे जिह्वास्थानं प्रकीर्तिताः २२
अग्निरूपमिदं गुह्यं सर्वशान्त्यर्थमुच्यते
एवं रूपं स्मरन्नित्यं जातकर्मसमाचरेत् २३
पुरुष्टुतेन चैशेन गन्धाद्यैः सुप्रपूजयेत्
नामकर्मसमाख्यातं पञ्चसंस्कारकं स्मृतम् २४
प्रागग्रैश्चोदगग्रैश्च कुशैः कुण्डे परिस्तरेत्
त्रयः परिधयः प्रोक्ताः पश्चिमे दक्षिणोत्तरे २५
वह्नावीशे समिच्चेत् तु मेखलोपरिनिक्षिपेत्
दक्षिणे ब्रह्मणस्थानं पद्माकारं प्रकल्पयेत् २६
प्रणीतामुत्तरे स्थाप्य विष्णुस्तस्याधि दैवतम्
बीजमुख्येन मन्त्रेण ब्रह्मविष्णू च पूजयेत् २७
लोकपालास्तथा पूज्या मेखलोपरिदेशिकः
आज्यस्थालिं चरुस्थालीं प्रणीतां प्रोक्षणीं तथा २८

होमद्रव्याणि पात्राणि वामपार्श्वे विचक्षणः
दर्भोपरि तथा द्वंद्वं दैवस्य पितुरेकशः  २९
पात्राण्युद्वापयेद्विद्वान् सर्वद्रव्याणि शेषतः
इन्धनाज्यसमित् क्षीर दधीमधु चरूणि च  ३०
लाजसक्तूतिलं मुद्गमाढकीमाष एव च
सर्षपं धवनिवारौ फलापूपौ दशाष्टधा  ३१
प्रोक्तान्येतानि सर्वाणि नित्यादौ होमयेत् क्रमात्
नित्येन्धनादयः सप्त ह्यथवा होमकर्मणि  ३२
प्रणीताम्भसि सौम्ये तु सर्वतीर्थानि कल्पयेत्
दक्षिणे होमद्रव्याणि प्रोक्षणीं च न्यसेत् क्रमात्  ३३
प्राङ्मुखोदङ्मुखो वापि होमं कुर्याद् विशेषतः
आज्यशुद्धिन्ततः कुर्यात् पर्यग्नि प्लवनं क्रमात्  ३४
सम्प्लवनं कुशेनैव कुशाग्रौ तत्र निक्षिपेत्
अदितेन्वादिमन्त्रेण सर्वत्र परिषेचनः  ३५
जलेन स्पर्शनं कृत्वा वह्नौ सन्तप्प्यतं स्रवम्
पञ्चविंशद्धुनेद्धिमानग्निबीजं तु संस्मरन्  ३६
अन्नप्राशनमेवं हि अन्यकर्मणि कारयेत्
हृदयेन तु मन्त्रेण सप्तसप्ताहुतिर्जपेत्  ३७
वक्त्रक्रियादिकं सर्वं  हृदयेन तु कारयेत्
शिवाग्निजनितौ ह्येवं पश्चात् संकल्प्य विष्टरम्  ३८
अग्निमध्ये ततो मंत्री ह्यब्जं संकल्पयेत् प्रभोः
पूर्ववत् कल्पयित्वा तु तत आवाहयेच्छिवम्  ३९
आवाहनादियत् कर्म पूर्वोक्तविधिना ततः
होमं कुर्याच्छिवे नांगैर्विद्यांगैर्ब्रह्मभिस्तथा  ४०

विघ्नेशान् लोकपालांश्च अस्त्रशक्तिसमायुतान्

गन्धपूष्पादिनाभ्यर्च्य होमयेत् तु विचक्षणः ४१
शिवे दशाहुतिं हुत्वा ह्यन्येष्वेकाहुतिर्भवेत्
सर्वद्रव्यसमायुक्तं शिववक्त्रे नियोजयेत् ४२
शिवब्रह्माङ्ग विद्याङ्ग घृतादीनि हुनेत् तथा
सहस्त्रं वा तदर्धं वा तदर्धार्धमथापि वा ४३
शतमष्टोत्तरं वापि पञ्चविंशति षोडश
द्रव्यान्ते व्याहृतिं हुत्वा तदादौ परिषेचनम् ४४
एवं विधि क्रमेणैव होमयेत् साधकोत्तमः
वर्णं गन्धं ध्वनीधूमं शिखामग्नौ सुलक्षयेत् ४५
वज्रकाञ्चनरौप्याभं सिन्दूरेन्दु समप्रभम्
आदित्योदयवर्णाभं हरितालसमप्रभम् ४६
वैडूर्यद्युति संकाशं पिङ्गलं च स्वभावतः
तप्तायससुवर्णाभा दशवर्णाः प्रकीर्तिताः ४७
चन्दनागरु कर्पूरकच्चोलजाति गन्धवत्
मल्लिका पाटलीगन्धमन्दारं च सुगन्धिकम् ४८
उशीरनागपुन्नाग चम्पकं तु सुशोभनम्
शखभेर्यादिनिर्घोषं मेघदुन्दुभिनिस्वनम् ४९
सर्वसम्पत्करं घोषं धूपं चैव ततः शृणु
कुन्दपुष्पसमाकारं श्यामलाक्षाकृतिं शुभम् ५०
शुकपिञ्छनिभाकारं धूमं चाप्युत्तमं भवेत्
स्वस्त्या कृति समाकाराच्छत्राकारोर्ध्वगामिनी ५१
शिखाशिखी प्रतीकाशा कदम्बमुकुला कृतिः
यस्य होमेशिखा ह्येषा तस्य सिद्धिर्न्न संशयः ५२
एवमादि शुभं ज्ञात्वा कारयेत् तन्त्र वित्तमः
पूर्णाहुतिं ततः कृत्वा शिवमन्त्रेण देशिकः ५३
शिवं पूर्वं विसृज्यात्र पच्छादग्निं विसर्जयेत्

अग्निकार्यस्य चान्ते तु प्राणाग्निहोममाचरेत्  ५४
तत्पार्श्वे वह्निशालायां भोजनस्थानमुच्यते
तत् स्थानं गोमयालिप्तं शुद्धिं कृत्वा विशेषतः  ५५
पिष्टचूर्णैरलङ्कृत्य सवितानं सदीपकम्
तांम्रकांस्य कटल्यादि पात्रेष्वेक तमेशुभे  ५६
पात्रशेषाणि संयोज्य आत्मस्थं शिवमर्चयेत्
आत्मा हि यजमानोसौबुद्धिस्तत्पत्निका स्मृता  ५७
हृत् पुण्डरीकवेद्यां च अन्तस्थाग्नौ सुपूजयेत्
रोमदर्भान् परिस्तीर्य ह्योंकारं शिवसंयुतम्  ५८
उच्चार्य परिषिच्याथ पादावभ्युक्ष्यमन्त्रवित्
अमृतोपेति मन्त्रेण जलं पीत्वा विशेषतः  ५९
अनामिमध्यमाङ्गुष्ठ युक्ताभ्यन्नं शनिः शनैः
पञ्चप्राणाहुतिं हुत्वा प्राणमन्त्रैस्तु पञ्चभिः  ६०
तत्पात्र स्पर्शनं कृत्वा पश्चात् भुञ्जीत बुद्धिमान्
आचम्य च विधानेन आदित्याभिमुखं स्थितः  ६१
उदरं शिवमन्त्रेण दक्षिणाभिमृशेत् ततः
दक्षिणाङ्गुष्ठके नाथ पादाङ्गुष्ठे तु दक्षिणे  ६२
स्रवन्तोयं शिवं स्मृत्वा हृन्मन्त्रं तु समुच्चरन्
चुलुकोदकमेवं स्यात् स्वात्मानं पादमूलतः  ६३
प्राणाग्निहोत्रमित्येतं नित्यमेवमुदाहृतम्
आचार्यमूर्तिमास्थाय पाशौघान् कृन्ततीश्वरः  ६४
पूजां गृह्णाति लिङ्गस्थो वह्निस्थो हविराहुतिम्
अग्निकार्यमिदं प्रोक्तं शृणुत्वंकुण्डलक्षणम्  ६५
इति अग्निकार्यविधि पटल एकादशः  ११

## अथ कुण्डलक्षण पटलः

अथातः सम्प्रवक्ष्यामि कुण्डलक्षणमुत्तमम्
प्रतिष्ठाद्युत्सवे काले मण्डपङ्कारयेत् बुधः १
प्रासादपुरतो भागे प्रतिष्ठायां विशेषतः
ईशाने पार्श्वके चैन्द्रे कल्पयेत् तु विशेषतः २
महानसेन्यधाग्नेय्यां नित्याग्न्यायतनं बुधः
अनुक्तेषु च येज्ञेषु उक्तदेशे विधीयते ३
उत्तमन्दशहस्तं स्यान्मध्यमं नवहस्तकम्
अधमं सप्तहस्तं स्यान्मण्डपं त्रिविधं मतम् ४
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा
दिशश्च विदिशश्चैव नच्छिद्रं व्योमसम्पदम् ५
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
स्थलन्तालसमुत्सेधमथवा च षडङ्गुलम् ६
दर्भमालाभिरावेष्ट्य पुष्पामालोपशोभितम्
वितानैरूर्ध्वमाच्छाद्यमुक्तादामैरलङ्कृतम् ७
तत् त्रिभागैक भागेन वेदिं मध्ये प्रकल्पयेत्
हस्तमात्रसमुत्सेधं दर्पणोदरसन्निभम् ८
तत् पूर्वे चतुरश्रं स्यादाग्नेय्यां तु भगाकृतिः
अर्धचन्द्रस्तु याम्यायां नैर्ऋत्यां तु त्रिकोणकः ९
वारुण्यां वर्त्तुलं कुण्डं षट्कोणं चैव वायवे
उत्तरे पद्मकुण्डं तु ऐशान्यामष्टकोणकम् १०
ऐन्द्रशाङ्करयोर्मध्ये वृत्तकुण्डं तु कारयेत्
नित्यहोमाग्निकुण्डं तु हस्तमात्रप्रमाणतः ११
शतार्धाहुति कुण्डस्य मुष्टिमात्रप्रमाणतः
रत्निः स्याच्छतसङ्ख्यायाः सहस्रे करसंहितम् १२
द्विकरं दशसाहस्रे चतुर्हस्तं तु लक्षके
षट्करं दशलक्षे तु कोट्याहुत्यष्टहस्तकम् १३

कुण्डविस्तारमाख्यातं कुटचूर्ध्वेऽष्टकरं मतम्
अनुक्तमानाहुतयश्चोक्त कुण्डेषु होमयेत् १४
चतुरश्रस्य कुण्डस्य लक्षणं शृणु साम्प्रतम्
प्राङ्मुखानि त्रिसूत्राणि उदङ्मुखानि तथैव च १५
एवं विन्यस्यमाने स्याच्चतुरश्रं चतुष्पदम्
योन्यादि सर्वकुण्डानि चतुरश्रोद्भवानि हि १६
कोणे ग्राह्या चतुर्थां शं तद्भागेन तु वर्तयेत्
क्षेत्रस्यार्धावधिर्यावत् तथान्यं भ्रमयेत् क्रमात् १७
कर्णायामस्य सप्तांशं पूर्वायादिशिविन्यसेत्
तस्माच्च पादयेत् सूत्रौ भवेदश्वत्थ पत्रवत् १८
दशभाग कृतं क्षेत्रं द्विभागं तु व्यपोह्य च
मध्येऽष्टांशं परिग्राह्य भ्रामयेदर्धचन्द्रवत् १९
पञ्चभाग कृतं क्षेत्रं द्विभागौ पार्श्वयोर्न्यसेत्
तेन मानेन सूत्रेण द्विसूत्रं चाग्रसंयुतम् २०
तत्र सूत्रत्रयं कृत्वा तत् त्रिकोणमिहोच्यते
अष्टादशकृतं क्षेत्रमेकभागं बहिर्न्यसेत् २१
तस्मान्मध्यं गृहीत्वैव भ्राम्यतद्वर्तुलं स्मृतम्
तत् क्षेत्रमष्टधा कृत्वा भागैकं पार्श्वयोर्बहिः २२
तयोर्मध्यं गृहीत्वार्धं सूत्रेणैव पुरा तथा
षट्सूत्रं परितः कृत्वा षट्कोणन्तद्भवेदिह २३
वर्तुलं पूर्ववत् कृत्वा मध्यमेकर्न्निकान्यसेत्
षोडशंदलसंयुक्तं दलाग्रं दर्शयेद् बहिः २४
पद्मकुण्डमिदं प्रोक्तं सर्वकामार्थसाधनम्
चतुर्विं शति भागैकं बाह्ये दिक्षु व्यवस्थितम् २५
मध्यात् कोणं गृहीत्वा तु अष्टसूत्रं समर्पयेत्
अष्टकोणमिदं प्रोक्तमिति शास्त्रस्य निश्चयः २६

यावन्मात्रं तु विस्तारन्तावद् घातप्रमाणकम्
कुण्डस्ययाद्रशं रूपन्तादृशि मेखला भवेत् २७
त्रिमेखलं तु कर्तव्यमेकमेखलमेव वा
चतुरङ्गुलमुत्सेधं विस्तारं तत् प्रमाणतः २८
एकमेखलमेवं स्यात् त्रिमेखलमथ शृणु
चतुरङ्गुलं भवेदूर्ध्वं मध्यमन्त्र्यङ्गुलं भवेत् २९
अधस्तात् द्व्यङ्गुलं प्रोक्तं विस्तारोत्सेधमेव हि
अश्वत्थ पत्रवद्योनि मेखलोपरिविन्यसेत् ३०
एकाङ्गुलन्तदुत्सेधं विस्तारं चतुरङ्गुलम्
सप्ताङ्गुलं तु दैर्घ्यं स्यादेकाङ्गुलं तु नालकम् ३१
कुण्डानां लक्षणं प्रोक्तं स्थण्डिलं चेत् तु पूर्ववत्
चतुरङ्गुलमुत्सेधं दर्पणोदरसन्निभम् ३२
एकाङ्गुलन्तदुत्सेधमष्टाङ्गुल सुविस्तृतम्
प्रणिता स्थानमेवं स्यात् ब्रह्मस्थानं तथा भवेत् ३३
चतुरश्रं प्रणिताया ब्रह्मणे पद्ममेव च
विना वा केवलं स्थाप्य स्थलमात्रे यजेदुभौ ३४
सिकतैस्थण्डिलं चेत् तु स्यात् कुर्याद् धस्तमात्रकम्
हस्तमात्रस्य कुण्डस्य लक्षणं कीर्तितं क्रमात् ३५
द्विहस्तादीनि कुण्डानि कृत्वैवं मेखलादिकान्
अङ्गुलाङ्गुलवृद्ध्या तु विस्तारोत्सेधतः समान् ३६
समन्तात् सुसमान् कृत्वा ह्योष्ठ कुण्डस्य चापरि
एकाङ्गुलेन हस्तस्यान्मेखलायाः सुमध्यमे ३७
अङ्गुलाङ्गुल वृध्यातु मानाधिक्येषु कारयेत्
अथवाङ्गुलिभिः षड्भिश्चतुर्भिश्चाष्ट हस्तके ३८
कुण्डानां लक्षणं प्रोक्तं नित्योत्सवमथ शृणु
इति कुण्डलक्षण पटलोद्वादशः १२

# अथ नित्योत्सवविधि पटलः

अथातः सम्प्रवक्ष्यामि नित्योत्सव विधिक्रमम्
त्रिकालमर्चनान्ते तु क्रतोर्बलिरुदाहृतम्  १
सर्वेषां च बलिं कुर्यात् ततो बलिरिति स्मृतम्
यक्षराक्षस पैशाच भूतनागास्तथैव च  २
श्रुत्वैव तद्बलेः शब्दं सद्योगच्छन्ति बाह्यतः
तस्मात् सर्वप्रयत्नेन कुर्यान्नित्योत्सवं बुधः  ३
मण्डपाद्दक्षिणे भागे मण्डलं चतुश्रकम्
सौवर्णं राजतन्ताम्रं कांस्यं वा पात्रमुच्यते  ४
चतुस्त्रिद्वियवं पात्रघनंस्यादुत्तमादिके
विस्तारं हस्तमानं स्यादोष्ठन्नवमथाङ्गुलम्  ५
घनं नवचतुष्कं स्यात् पात्रमेध्येऽब्जमुच्यते
त्रिभागैकं तु विस्तारं पात्रं काम्स्ये न कारयेत्  ६
तस्याब्जस्योच्चंद्व्यङ्गुल्यमेकाङ्गुलमथापि वा
कर्तव्यं कर्णिका बाह्ये दलाष्टकमथार्धतः  ७
उत्सेधार्द्धं तदर्द्धं स्याद्दलाग्रं तु नवोन्नतम्
पात्रं वृत्तं प्रकर्तव्यं मध्यमे विंशदङ्गुलम्  ८
अधमे षोडशाङ्गुल्यं पात्र विस्तारमुच्यते
एवं कृत्वा बलेः पात्रं मण्डले विन्यसेत् सुधीः  ९
ततस्त्रिकालमन्नेन बलिर्लिङ्गस्य चोत्तमम्
प्रातर्मध्याह्नमन्नेन मध्यं तु विदुर्बुधाः  १०
मध्याह्ने चान्नलिङ्गं तु अधमन्तत् गजानन
पूर्वाह्ने पुष्पलिङ्गं तु सा ये तण्डुलमेव च  ११
उत्तमस्याढकं च स्यान्मध्यमस्य तदर्धकम्
अधमं पञ्चपादं तु तण्डुलं पाचयेत् क्रमात्  १२
अपक्वमति पक्वं च अत्युष्णमतिशीतलम्

बलेस्तुरसलवणं वर्जयेद् देशिकोत्तमः १३
दधिसर्पिफलैर्मिश्रं मर्दितं सुदृधं यथा
षोडशाङ्गुलमुत्सेधं मूलन्तद्विगुणं भवेत् १४
ऊर्ध्वं त्र्यङ्गुलन्नाहमानुपूर्वात् क्षयं भवेत्
मध्यमं द्वादशाङ्गुल्यमूर्ध्वं कुर्यात् द्व्याङ्गुलम् १५
अष्टाङ्गुलाधमं प्रोक्तमूर्ध्वमेकाङ्गुलं भवेत्
अस्त्रं पाशुपतन्न्यस्त्वा रूपन्तत्र विचिन्तयेत् १६
त्रिणेत्रं चतुर्भुजं रौद्रं शिखाकोटिसमुज्वलम्
वरदाभयदं हस्तं वामं सव्याक्षशूलधृत् १७
एवं पाशुपतं ध्यात्वा बलिलिङ्गं सुपूजयेत्
दर्शयेदस्त्रमुद्रां तु शास्त्रमुद्रां तु देशिकः १८
नमस्काराब्जमुद्रे च दर्शयेत् तु विशेषतः
गन्धपुष्पादिनाभ्यर्च्य तद्रूपं प्रतिमां बुधः १९
पुरस्तात् प्रतिमाङ्गच्छेदन्नादिकमनु व्रजेत्
दशायुधानि परितः सर्वालंकारसंयुतम् २०
विधिस्नानं पुराकृत्वा पुर्यष्टिपरिचारकाः
शुक्लोष्णी षोत्तरीयश्च शुक्लमाल्यानुलेपनः २१
पवित्रपाणिर्मौनी च हस्तमात्रेण दण्डधृत्
सर्वाभरणसंयुक्तः सर्वावयवसुन्दरः २२
शिरसाधारयेल्लिङ्गं प्रदक्षिण विशेषतः
पूर्वाह्ने ब्रह्मणः प्रीतिर्भवेत् बलिविधानतः २३
रक्तोष्णी षोत्तरीयश्च शुक्लमाल्यानुलेपनः
मध्याह्ने धारयेन्नित्यं मम प्रीतिकरं भवेत् २४
पीतोष्णी षोत्तरीयश्च विष्णु प्रीतिस्तु सायके
दक्षिणाभिमुखः शिष्यं सम्प्रोक्ष्य हृदयेन तु २५
गन्धं पुष्पन्तथा दत्वा पात्रं शिरसि विन्यसेत्

रंगेवाशिबिकायां वा गजारूढमथापि वा २६
अथवा पादगमनं प्रदक्षिणमथाचरेत्
पटहैर्मद्दलैश्चैव झल्लरी जयघण्टकैः २७
काहलैस्तालकैः शंखैर्वीणावेणुरवैः सह
छत्रध्वजसमायुक्त पिञ्छचामरसंयुतम् २८
धूपदीपसमायुक्तं वितानोपरिशोभितम्
नृत्तगीतसमोपेतं गणिकाभिरलंकृतम् २९
अन्यैर्भक्तजनैः सार्धं स्तोत्रध्वनिसमन्वितम्
पूर्वे तु समहस्तं स्यात् भृंगिणी पततं परम् ३०
तृतीयं कद्रुवाद्यं च चतुर्थं तु च ढक्ककम्
पञ्चमं कयटं चैव कुञ्चितालं च षष्ठकम् ३१
सप्तमं तु प्रहारं स्याद्विषमच्छिन्नचाष्टमम्
बाह्य पीठैकमावृत्य प्रासादाग्रप्रदक्षिणम् ३२
इन्द्रस्य शुभ्रतालं तु अग्नेर्बाद्धावणं भवेत्
यमस्य द्व्यगुणीतालं निर्ऋतौ मल्लतालकम् ३३
वारुण्यान्नवतालं तु वायोर्वैनागतालकम्
सोमस्य कोल्लिका प्रोक्ता ईशानस्य तु ढक्करी ३४
इत्येतैः कल्पितास्तालैः प्रासादं त्रिःप्रदक्षिणम्
कृत्वा पादौ सुसंक्षाल्यपादुकार्चनमारभेत् ३५
पाद्यैराचमनैरर्घ्यैर्गन्धैः पुष्पैः सुधूपकैः
बलिं च प्रथमं चैव पूजयेत् तु विशेषतः ३६
विदोलयं ततः पश्चाद्विन्यस्य पूर्वमण्डले
गन्धपुष्पादिनाभ्यर्च्य हृदयेन तु मन्त्रवित् ३७
प्रागुक्तेनास्त्रमन्त्रेण शिव संयोजयेत् सुधीः
सम्पूज्य देवदेवेशं नमस्काराख्यमुद्रया ३८
सव्यापसव्यमार्गेण त्रिःकृत्वा तु प्रदक्षिणम्

दराडवत् प्रणमेद्वाथ दराडाख्यमिति च स्मृतम् ३९
दराडाख्यः श्रूयते पश्चादष्टाङ्गं सन्नियोजयेत्
शिरोजानू च कर्णौ च चिबुकं बाहुकद्वयम् ४०
अष्टांगेन नमस्कुर्यात् पञ्चाङ्गोप्यत्र तं शृणु
शिरोहस्तौ द्विजानू च कृत्वा पञ्चभुवि स्थितम् ४१
इदं पञ्चाङ्गमेवं तु नमस्कारत्रयं स्मृतम्
अधमं ह्येतदाख्यातं यथा शक्त्येन कारयेत् ४२
ततोपहारपुष्पाणि चराडेशाय निवेदयेत्
अन्नलिङ्गञ्जले वापि बाह्यपीठे विनिक्षिपेत् ४३
तदन्ते कारयेन्नृन्तं तदुक्तविधिनासह
तदुपाङ्गमिति प्रोक्तमर्चनान्ते तु नित्यशः ४४
चित्रालङ्कारसंयुक्ते मराडपे समलंकृते
भेर्यादींस्तु तथा यान्ती । । ।शिवसंस्थितान् ४५
नर्त्तको मर्दकश्चैव दक्षिणे तु व्यवस्थितौ
गायकोवंशकश्चैव उत्तरे विनिवेशितम् ४६
आचार्यौ दक्षिणे देशे सौम्ये तस्याधिप स्मृतम्
सुस्नात्वा सम्यगाचम्य गन्धद्रव्यादिपूर्वकम् ४७
शुक्लवस्त्रपरिधानाः शुक्लमाल्योपशोभिता
सर्वाभरणसम्पूर्णा नृत्तगेयसुपेशला ४८
पूर्वासन्ध्यास्तु गान्धारं षाडपञ्च ततः परम्
मध्याह्ने नट्टरागं स्यात् कौशिकं च ततः परम् ४९
साये तु चेदकं प्रोक्तमर्धरात्रे तु पञ्चमम्
भरतोक्तं यथा नृत्तं सन्धिं प्रतिसुकारयेत् ५०
एवं नृत्तं कृतं यत्र सुभिक्षं लोकशान्तिकम्
दुर्निमित्तानि नश्यन्ति क्षेत्रमारोधकं नृणाम् ५१
ककाराधि पतिश्चापि भोगमोक्षप्रादायकम्

कवाटबन्धनं कृत्वा स्वगृहं सन्निवेशयेत्  ५२
एवं नित्योत्सवं प्रोक्तमुत्सवं च ततः शृणु
इति नित्योत्सवविधि पटलस्त्रयोदशः  १३

अथ शिवोत्सवविधि पटलः
अथातः सम्प्रवक्ष्यामि शिवोत्सवविधिं शृणु
नवाहमुत्तमं प्रोक्तं सप्ताहं मध्यमं स्मृतम्  १
पञ्चाहमधमं प्रोक्तमुत्सवं त्रिविधं स्मृतम्
अलाभे तु प्रकर्तव्यौ त्र्यहैकाहकौ तथा  २
आद्येषु च तृतीयेषु ध्वजारोहणमारभेत्
न ध्वजारोहणं प्रोक्तं द्वितये तु तथोत्सवे  ३
तद्दिनं त्रिगुणि कृत्य तदादौ ध्वजमुद्धरेत्
द्विगुणे तद्दिनादौ वा ध्वजमारोप्य बुद्धिमान्  ४
ध्वजारोहणपूर्वं  वा भेरीताडनपूर्वकम्
त्रिगुणे द्विगुणे काले कारयेद् देशिकोत्तमः  ५
अङ्कुरार्पण पूर्वे तु आदिरात्र्यङ्कुरार्पणम्
कृत्वा भेरीं तु सन्ताड्य ध्वजमारोपयेत् ततः  ६
उत्सवे च प्रतिष्ठायं सायादिदिनमुत्तमम्
प्रातः काले ह्यवभृथं सायङ्काले समारभेत्  ७
रात्रिः सायाह्नि वा प्रातरिति शास्त्रस्य निश्चयः
नवाहेऽष्टादशबलिं सप्ताहे तु चतुर्दश  ८
पञ्चत्रयैक ऋक्षेषु दशषड्द्वितयं बलिम्
एवं कृते तु मतिमान् लोकशान्तिकरं भवेत्  ९
कृत्तिकादिषु मासेषु कार्तिके कृत्तिकान्तकम्
मार्गशीर्षकमासेषु आर्द्रान्तं तु शिवोत्सवम्  १०
पुष्यान्तं पौष्यमासे तु मघान्तं माघमासके

फाल्गुने चोत्तरान्तं स्यात् चित्रान्तं चैत्रमासके ११
विशाखान्तं हि वैशाखे ज्येष्ठे मूलान्तकं भवेत्
उत्तराषाढमाषाढे श्रावणे श्रवणान्तकम् १२
पूर्वाभाद्रे तथा मासे पूर्वाभाद्रान्तमुच्यते
आश्वन्तमश्वयुङ्मासे उत्सवं कारयेत् बुधः १३
आर्द्रान्तं सर्वमासेषु कर्तव्यं तु शिवोत्सवम्
षष्ठ्यष्टमीह्यमावास्यान्ते वान्यत् पुण्य ऋृक्षके १४
राज्ञन्मन्य विलये युद्धारम्भे समारभेत्
विस्तारेण समं पुच्छं त्रिपुच्छं वा द्विपूच्छकम् १५
मध्ये वृषभमालिख्य स्थितं वा शयनं तु वा
दर्भमालासमायुक्तं किंकिणिवरकान्वितम् १६
ग्रामप्रदक्षिणं कृत्वा चालयं वा प्रदक्षिणम्
वेणुं वा क्रमुकं वापि चन्दनञ्जातिबिल्वकम् १७
सालस्तम्भं चखदिरं चम्पकं देवदारुकम्
नालिकेरतरुं वापि निर्णितं सुदृढध्वजम् १८
प्रासाद त्रिगुणं दैर्घ्यं द्विगुणं वा ततः समम्
शिखरग्रीवसीमान्तं वृषभस्थलसंमतम् १९
तथा द्वित्रितलान्तं वा गोपुरान्तमथापि वा
षट्त्रिंशदंगुलन्नाहं ध्वजदण्डं विधीयते २०
त्रिंशदंगुलके नाथ चतुर्विशं तु वाङ्गुलम्
उत्तमादधमन्नाहं ग्राह्यमेवं सुदण्डके २१
घटिकात्रयसंयुक्तं विस्तारेऽष्टाङ्गुलेन तु
तत् घनं चतुरङ्गुल्यं त्रिभिरङ्गुलिभिस्तु वा २२
दैर्घ्यं तु द्वादशाङ्गुल्यं षोडशाङ्गुल्यकं तु वा
दण्डे तु सुषिरं कृत्वा सुस्निग्धं तु यथा तथा २३
घटिकात्रयकं न्यस्य तेष्वन्तस्थं सवैणवम्

दण्डाग्रेण समं कुर्यादग्रं वेणवकस्य तु २४
दण्डं चाप्यथवा कुर्यात् घटयन्तस्थं सुनिश्चलम्
वैणवस्य तु दैर्घ्यं तु द्वादशन्तालमुच्यते २५
अथवा षोडशन्तालं चतुर्दशन्तालमेव वा
दशतालं तु वा ग्राह्यं द्वादशाङ्गुल नाहकम् २६
तस्यार्धार्धश्च मात्रे तु वलयन्त्वायसेन तु
यन्त्रार्थं बन्धयेद्धीमानलाभे दारुणा भवेत् २७
तदन्ते रज्जुसंवेश्य द्विगुणं मूलमाश्रितम्
मध्यमाङ्गुलिनाहं तु तन्तुना सुदृढं कृतम् २८
पीठगोपुरयोर्मध्ये वृषभस्याग्रतोऽपि वा
कलयेन्मध्यहारायां मध्यादेर्मध्यमेपि वा २९
भूमिं खात्वोरुमात्रं तु हैमन्तत्रैव निक्षिपेत्
दण्डं संस्थाप्य पूर्वं तु दर्भमालासमावृतम् ३०
चतुस्तालं तु विस्तारादुत्सेधं द्वितलान्तकम्
दर्पणोदर संकाशं ध्वजपीठं विधीयते ३१
पञ्चतालं तु विस्तारमुत्सेधं तु त्रितालकम्
उत्तमोत्तमपीठस्य मध्यमस्योर्ध्वमुलतः ३२
तयोर्मध्येऽष्टधाभज्यध्वजपीठानव स्मृताः
ध्वजमारोपयेत् तत्र रज्जुयन्त्रेण बुद्धिमान् ३३
प्रासादाभिमुखं स्थित्वाप्य घोरास्त्रेण मन्त्रतः
ध्वजदण्डेन सम्बध्वा रोपयेद्विधिपूर्वकम् ३४
प्रासादस्याग्रतः कुर्यात् मण्डपं चतुरश्रकम्
स्थण्डिलन्तत्र कुर्वीत शालिभिर्विमलैस्तथा ३५
सर्वदेवमयं शूलं स्थण्डिलोपरिविन्यसेत्
मध्यपत्रे भवेद् रुद्रो ब्रह्मादक्षिण पत्रके ३६
वामपत्रे ततो विष्णुस्त्रिपत्रस्याधिदैवतम्

वामे ज्येष्ठां तु रौद्रीं तु शूलमूले प्रकल्पयेत् ३७
फलकास्कन्ददैवत्या कुम्भन्तत्रैव वारुणम्
स्थली चैवाग्निदैवत्यं दण्डस्य तु सरस्वती ३८
पीठस्य पार्वती प्रोक्ता भूमिभागे वसुन्धरा
गन्धादिभिः समभ्यर्च्य तदग्रे कलशान्न्यसेत् ३९
विद्येश्वरसमायुक्तां मध्ये वृषभदैवतम्
सकूर्चान् सा पिधानांश्च सहास्त्रान् स हिरण्यकान् ४०
गन्धादिनार्चयित्वा तु स्वैस्वैर्नामभिरेव तु
तदग्रे स्थण्डिले स्थाप्य भेरीं वस्त्रेण वेष्टिताम् ४१
पटहं विष्णुदैवत्यं सुषिरं वायुदैवतम्
शब्दन्तत् ब्रह्मरूपं स्याद् रूपाभावस्तथैश्वरम् ४२
वासुकी चर्मसूत्रं तु वलयौरविचन्द्रकौ
मातरः सप्तकीलास्तु प्रहारास्कन्ददैवतम् ४३
अर्चयित्वा सुगन्धाद्यैर्हृदयेन विचक्षणम्
आचार्यं पूजयेत् पूर्वं वादकं तदनन्तरम् ४४
आचार्यो वाममन्त्रेण सन्ताड्यस्त्रिप्रकारतः
वादकस्ताडयेत् पश्चात् बलितालं विशेषतः ४५
गेयनृत्तादिसंयुक्तं दिशितालं तु वादयेत्
तीक्ष्ण शृङ्गाय विद्महे वेदपादाय धीमहि ४६
तन्नो वृषभः प्रचोदयात् । । । । । । ।
इमं मन्त्रमनुस्मृत्य रवन्दत्वा विशेषतः ४७
तन्मूलेकलशैः स्नाप्यमुद्गान्नं तु निवेदयेत्
पुण्याहन्तत्र कर्तव्यं भेर्यारवमथाचरेत् ४८
शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तसमाकुलम्
सर्वालङ्कारसंयुक्तं त्रिशूलेन समन्वितम् ४९
ग्रामप्रदक्षिणे काले सन्धिदेवान् समर्चयेत्

आवाह्य लोकपालांश्च बलिन्दत्वा विशेषतः ५०
श्रावयेत् तीर्थदिवसानाचर्य प्रीतमानसः
त्रिशूलं च ध्वजन्नित्यं सम्पूज्य हविषान्वितम् ५१
उत्सवारम्भ पूर्वे तु रथादीन् कारयेत् क्रमात्
यन्त्र डोलांदृढां चित्र यन्त्र रंगांस्तथैव च ५२
यन्त्र देवालयांश्चैव मन्त्रमण्डपिकां तथा
भ्रमत् गजांश्चयन्त्रांश्च सिंहयन्त्रान्तथैव च ५३
वृषभं यंत्रिकांश्चैव कारयेत् सुविशेषतः
नानापिच्छान्विताञ्छत्रां नानाव्यजनमेव च ५४
नानाच्छत्रध्वजांश्चैव चामराण्यपि कारयेत्
देवालयमलङ्कृत्य बाह्यमभ्यन्तरं ततः ५५
द्वारतोरणविन्यासं कदली क्रमुकान्वितम्
देवालयस्य पुरतः प्रपाङ्कृत्वाति सुन्दराम् ५६
वितानो परिसञ्छन्नां मुक्तादामैरलङ्कृताम्
पुष्पमालासमायुक्तामलङ्कृत्य प्रपां क्रमात् ५७
स्तम्भानावेष्ट्य वस्त्रैश्च फलपुष्प ध्वजान्वितान्
यागशालां ततः कुर्यात् पूर्वोत्खातस्य पार्श्वयोः ५८
उत्तरे वाथ कर्तव्यमैशान्यां पावके तथा
मण्डपे वा दृढं कार्यं षोडशस्तम्भसंयुतम् ५९
नवभागैकभागे तु मध्ये वेदीं प्रकल्पयेत्
हस्तमात्रसमुत्सेधां दर्पणोदरसन्निभाम् ६०
कुण्डानि परितः कुर्यादेककुण्डमथापि वा
गोमयेनोपलिप्यात्र नानापुष्पैः प्रकीर्य च ६१
सूक्ष्मैस्तण्डुल चूर्णैस्तु नानावर्णसुचूर्णकैः
वज्राङ्कुशं त्रिशूलं च चक्रं तत्र तथैव च ६२
पद्मं चैवोत्पलाङ्कं च नन्द्यावर्तकमेव च

कुम्भाभं मध्यचन्द्राभं वृक्षाकारांश्च लाञ्छयेत् ६३
वामां वा नगरादीं वा ह्यलङ्कृत्य विशेषतः
वीधयश्चोपवीध्यश्च निम्नोन्नतविवर्जिताः ६४
शोधयित्वा समाम्भूमिञ्जलसेकोपलेपनैः
पताकाभिर्ध्वजैश्चापि तथा काशद्ध्वजैरपि ६५
कदलीभिर्धूपदीपैर्द्वारकुम्भैरथान्यकैः
साङ्कुरैच्छिद्र कुम्भैश्च पालिकाभिः समन्ततः ६६
वस्त्रैश्च गन्धमाल्यैश्च भवनं प्रतिभूषयेत्
ततोङ्कुरार्पणङ्कुर्यादुत्सवस्य दिनादितः ६७
यथाङ्कुरार्पणे प्रोक्ता तथा कुर्याद् विशेषतः
वेदिमध्ये ततः कृत्वा स्थण्डिलं शालिकामयम् ६८
षड्द्रोणैः पञ्चद्रोणैर्वा चतुद्रोणैस्तु वा पुनः
तण्डुलैः समलंकृत्य तिलैर्दर्भैस्ततोपरि ६९
ससूत्रं कुर्चवस्त्राढ्यं पञ्चरत्नसमन्वितम्
शिवकुम्भं न्यसेन्मध्ये वर्धनं तस्य वामतः ७०
वस्त्रकूर्च्च समायुक्तं हेमयुक्तं प्रकल्पयेत्
ध्यात्वा सदाशिवं देवं शिवकुम्भे निवेशयेत् ७१
मनोन्मनींस्तु सञ्चिन्त्य वर्धन्यां विन्यसेत् सुधीः
परितोऽष्टौ घटां न्यस्य विद्येश्वरसमन्वितान् ७२
सकूर्चान्वस्त्रसंयुक्तान् सहेमान्वारिपूरितान्
कलशाधिपतींस्तत्र स्वैस्वैर्मन्त्रैः सुपूजयेत् ७३
लोहादिदारुवर्णहनि आयुधानि दशक्रमात्
वक्ष्यमाणोक्तविधिना कारयेत् प्रतिमाकृति ७४
वेदिकायास्तु परितस्त्वायुधानि प्रपूजयेत्
वज्रादीन् स्थापयेद् विद्वान् पूर्वादिषु प्रदक्षिणम् ७५
वामे संस्थाप्य चक्रं तु दक्षिणे पद्ममेव च

अष्टमङ्गलरूपाणि वेदिबाह्ये प्रपूजयेत्  ७६
शूलास्त्रं विन्यसेत् तत्र उत्सवे योगधामनि
अग्निकार्यन्ततः कृत्वा नवपञ्चैक वा पुनः  ७७
एकाग्नेर्वेदिका पूर्वे ह्युत्तरे पश्चिमेऽथवा
वृत्तं वा चतुरश्रं वा सर्वकुण्डानि कारयेत्  ७८
पर्यग्निकरणं कृत्वा यागशालां विशेषतः
यवं हृदयमन्त्रेण सिद्धार्थं सद्यमन्त्रतः  ७९
तिलमीशानमन्त्रेण हुत्वामुद्गं तु नेत्रतः
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिं तु मूलतः  ८०
पूजावसाने विद्वान्वै वह्निकार्योक्तमाचरेत्
अर्चनं विधिनावत्स सायं प्रातर्दिने दिने  ८१
होमान्ते तु बलिं दद्यात् बल्यन्ते चोत्सवं बुधः
प्रथमं विश्वरात्रं तु द्वितीयं भूतरात्रकम्  ८२
तृतीयमृषिरात्रं स्याच्चतुर्थं चेन्द्ररात्रकम्
पञ्चमं ब्रह्मरात्रं तु षष्ठं वै विष्णुरात्रकम्  ८३
सप्तमं रुद्ररात्रं स्यादष्टमं चैश्वरस्य तु
सदाशिवस्य नवमन्नवाहेष्वधिदेवताः  ८४
ऋषिरात्रं समारभ्य सदाशिवदिनान्तकम्
सप्ताहे तु प्रयोक्तव्यं ब्राह्म्यात् सदाशिवान्तकम्  ८५
पञ्चाहे तु प्रयोक्तव्यं रुद्रात्सदाशिवान्तकम्
त्रयहे त्विति चैकाहे सदाशिवपदान्तिकम्  ८६
त्रयहे त्विति चैकाहे सदाशिवदिनं भवेत्
हविर्भिर्दीपकैश्चैव दिनेष्वेतेषु नित्यशः  ८७
विशेषात् पूजनं कुर्यात् विभवस्यानुरूपतः
ग्रामाधिदैवतांश्चैव पूजयेत् तु विशेषतः  ८८
शुद्धान्नन्दधिसंमिश्रं लड्डुकापूपसंयुतम्

फलं च गुलसम्मिश्रं गणेशस्य प्रियन्त्विदम् ८९
बलयोरजनी पूर्णं घृतान्नन्दधिसक्तुकम्
भूत क्रूरबलिः प्रोक्तस्तेन भूतबलिं हरेत् ९०
पञ्चमूलङ्कुशाग्रं च शाल्यनं चाज्यमिश्रकम्
कदलीफलसंयुक्तमृषीणां बलिरुच्यते ९१
इन्द्रवल्ली हरिद्रा च प्रियङ्गु घृतसंयुतम्
चतुर्थे हनिदातव्यमिन्द्रस्य बलिरुत्तमम् ९२
पद्मपुष्पं स रजनी पायसंलाजसंयुतम्
पञ्चमे हनिदातव्यं ब्रह्मणोबलिरुच्यते ९३
गुलोदनं घृतोपेतं बृहतीफलसंयुतम्
षष्ठे हनि च दातव्यं विष्णु प्रीतिकरं परम् ९४
साज्यं तु कृसरान्नं वै नालीकेरफलैर्युतम्
सप्तमे हनिदातव्यं रुद्रप्रीतिकरं भवेत् ९५
वेणुकन्दधिसंयुक्तं कदलीफलसंयुतम्
अष्टमे हनिदातव्यमीश्वरस्य बलिस्तथा ९६
शुद्धान्नं दधिसंयुक्तं लाजापूपसमायुतम्
कदलीपनसोपेतं गुलखण्डसमिश्रितम् ९७
नवमे हनिदातव्यं सादाख्यस्य शिवस्य तु
सर्वेषामपि शुद्धान्नमाज्ययुक्तं दधिप्लुतम् ९८
दापयेद् वा विशेषेण तत्तन्मन्त्रेण देशिकः
द्रोणं वापि तदर्धं वा तदर्धं वापि पाचयेत् ९९
कपित्थफलमात्रेण बलिं दत्वा पृथक् पृथक्
उत्सवस्य पुरस्तात्तु दद्यात् ग्रामबलिं तथा १००
वाद्यध्वनिसमायुक्तं धूपदीपसमायुतम्
ध्वजैः पिञ्छैः समायुक्तं स्तोत्रमङ्गलवाचकैः १०१
यज्ञपिठोपरिस्थाप्य त्रिशूलं चान्नलिङ्गकम्

दशायुधानि परितः स्थापयेद् देशिकोत्तमः १०२
यज्ञाभावे तु तत् सर्वं व्रजेयुः शिरसाधृताः
आचार्यः शिष्य संयुक्तः सर्वाभरणभूषितः १०३
सर्वालङ्कारसंयुक्तः सोष्णीषः सोत्तरीयकः
आदिशैवः प्रसन्नात्मा श्रद्धाभक्तिसमन्वितः १०४
ब्रह्मादीशानपर्यन्तमिंद्रादीशान्तमेव वा
बलिं दत्वा तु तत् ग्रामे देवैश्चैवं विशेषतः १०५
सायं प्रातर्बलिं दद्यात् होमान्ते तु विशेषतः
उत्सवं प्रारभेदन्ते सर्वालङ्कारसंयुतम् १०६
नानाप्रहरणोपेताः सगजाश्चाग्रतस्ततः
तदन्ते तुरगारूढास्तदन्ते गजवाहनाः १०७
यन्त्ररङ्गास्तदन्ते तु दिव्यस्त्री परिभूषिताः
तदन्ते शाश्वयन्त्राश्च डोलायन्त्राश्च मण्डपाः १०८
यन्त्र देवालयं पश्चान्नृत्तगेयसमन्विताः
आद्यं सुखासनं प्रोक्तं द्वितीयमुमयासह १०९
वृषारूढं तृतीयं तु त्रिपुरघ्नं चतुर्थकम्
नृत्ताख्यं पञ्चमं प्रोक्तं षष्ठ वै चन्द्रशेखरम् ११०
सप्तमं त्वर्धनारीशं हरिरर्धं तु चाष्टमम्
भिक्षाटनं च नवमं दशमङ्कालनाशनम् १११
दशैकं कामदहनं ततो लिङ्गं पुराणकम्
द्वादश प्रतिमास्त्वेते सर्वालङ्कारसंयुताः ११२
रङ्गे वा शिबिकायां वा रथेवारोप्य भक्तितः
आदिशैवानुशैवाश्च देवानामनुगा स्मृताः ११३
पशुपतास्तदन्ते तु महावृतधरास्त्वनु
कालामुखास्तदन्ते तु तदन्ते ब्राह्मणाः क्रमात् ११४
तदग्रे रुद्र गणिकाः सर्वालङ्कारसंयुताः

तदन्ते गायकाः प्रोक्तास्तदन्ते नर्तका व्रजेत् ११५
ईश्वरः शक्तिसहितस्ततो गच्छेच्छनैः क्रमात्
योषिद्भिः सत्रिशूलादि यन्त्रदीपैर्विशेषतः ११६
अस्त्रदीपैर्यष्टिदीपैः सर्वत्र परिशोभितः
वितानैच्छिद्र दीपैश्च पताकाभिश्च शोभितः ११७
सर्वेषां पृष्ठतो गच्छेच्चण्डेशः समलङ्कृतः
तदग्रे घोषयेत् सम्यक् सर्वातोद्यान् क्रमेण तु ११८
पटहैर्मद्दलैस्तालैर्भेरीपणवडुण्डुभैः
जर्झरी झल्लरी मोन्तैर्वीणावेणुरवैस्तथा ११९
अग्रतः पृठतश्चैव घोषयेत् सविशेषतः
तदन्ते वैश्य शूद्राद्यागच्छेयुर्भक्तिसंयुताः १२०
सर्वे वर्णास्तदन्ते तु व्रजेयुः क्रमशस्ततः
ये देवमनुगच्छन्ति तद्गतेनान्तरात्मना १२१
पदे पदेऽश्वमेधस्य प्राप्नुवन्ति फलं नराः
वृद्धबालयुवानश्च स्त्रियश्च पुरुषास्तथा १२२
सर्वपापाद्विमुच्यन्ते सर्वत्रैव समन्विताः
एवं प्रदक्षिणं कुर्यात् ग्रामं वा नगरं तु वा १२३
शनैर्देवालयङ्गच्छेत् बलिपीठे बलिं क्षिपेत्
पादप्रक्षालनङ्कृत्वा प्रविशेदालयं प्रति १२४
प्रपाङ्कृत्वा स्थितं देवं सर्वदेवगणैः सह
मृदङ्गादिमहाशब्दं शिवस्य पुरतस्थितम् १२५
नमकश्चमकश्चैव दक्षिणे तु व्यवस्थितौ
गान्धर्वकोवं शकश्च उत्तरे तु व्यवस्थितौ १२६
आचार्यो दक्षिणे भागे नृपस्तस्यैव चोत्तरे
उभयोरपि पार्श्वाभ्यां देवस्य गणिका स्मृताः १२७
देवस्याग्रे विशेषेण नृत्तं कुर्यात्सगेयकम्

नीराञ्जनं कर्तव्यं देवदेवस्य चोत्सवे १२८
भस्मपुष्पं च दीपं च पात्रेषु च विनिक्षिपेत्
पुरादत्वा त्वाचमनं पुष्पं शिरसि विन्यसेत् १२९
अच्युतं मूर्ध्नि विन्यस्य गन्धं दद्याद् विशेषतः
पुनराचमनं दद्याद् धूपदीपं प्रदापयेत् १३०
पिष्टे विन्यस्त दीपेन भ्रामयेच्छिवमूर्धनि
तदन्ते दापयेत् भस्मदर्पणं दर्शयेत् पुनः १३१
गणिकाभिर्वहित्वा तु वाद्यध्वनि समायुतम्
पीठाग्रे वा विनिक्षिप्य प्राकाराणां बहिः क्षिपेत् १३२
कारयेत् साधकेन्द्रेण एतत् साये तु रक्षयेत्
वस्त्रादिनि प्रदातव्यं भक्तानां च विशेषतः १३३
परिवेष क्रमं ह्येवं दर्शनादघनाशनम्
यावद् देवोत्सवं कुर्यात् तावदेव दिने दिने १३४
अनाद्यं सर्ववर्णानां दद्याद् देवस्य तुष्टये
तत स्तीर्थदिनात् पूर्वे मृगयात्रां समारभेत् १३५
युद्धारम्भ प्रभावेन ग्रामङ्गत्वा प्रदक्षिणम्
कौतुकं बन्धयेद् धीमान् तस्मिन्रात्रौ विशेषतः १३६
सौवर्णं रजतं सूत्रं अथ कार्पासमेव वा
स्थण्डिलोपरिसंस्थाप्य त्रिशूलं स्थण्डिलोपरि १३७
याग मण्डपमध्ये तु शूले कौतुकबन्धनम्
हृदये नैव कृत्वा तु पुण्याहन्तत्र कारयेत् १३८
उत्सवप्रतिमां बध्वा कौतुकं हृदयेन तु
स्थण्डिलोपरिसंस्थाप्य कलशान्नवसङ्ख्यया १३९
पिधानकूर्चवस्त्राढ्याञ्छिव विद्येश्वरान्वितान्
गन्धादिभिः समभ्यर्च्य शूलन्तैः स्नानमाचरेत् १४०
नद्यां वाप्यां तटाके वा हृदे स्नानं समाचरेत्

अथ नद्यादिषु स्नानं विना वा शेषमाचरेत् १४१
होमबल्युत्सवान् प्रातः कृत्वा चूर्णोत्सवन्ततः
प्रासादस्याग्रतो वापि याम्ये वा पावकेऽथवा १४२
गोमयालेपनं कृत्वा धूपदीपैः समन्वितम्
पालिकाद्यैरलङ्कृत्य स्थण्डिलन्तत्र कारयेत् १४३
शूलं पश्चिमतः स्थाप्यो लूखलं मुसलं ततः
वस्त्रेणो लूखले वेष्ट्यदर्भैरावेष्टयेत् पुनः १४४
गन्धाद्यैरर्चयित्वा तु त्रिशूलं लूखलं ततः
घृतं शिरोर्पणङ्कृत्वा हेमदूर्वाङ्कुराक्षतैः १४५
सुशुष्कां रजनीं पूर्वं चूर्णे चूर्णे तु लूखले
हृदा प्रक्षिप्य चास्त्रेण कुट्टयेद् देशिकस्त्रिभिः १४६
ततो भक्तजनैः सार्धं चूर्णयेद् देशिकोत्तमः
संस्नाप्य लिङ्गं चूर्णेन पञ्चब्रह्मसमुच्चरन् १४७
स्नापयेत् कौतुकं शूलं हृन्मन्त्रेण सतैलकम्
आचार्यं पूजयेत् तत्र वस्त्र हेमाङ्गुलीयकैः १४८
ग्रामं वा नगरं वापि शीघ्रङ्गच्छेत् प्रदक्षिणम्
नदीतटाकतीरे वा स्थण्डिले द्वितये कृते १४९
शूलन्तत्रैव संस्थाप्य तत्पूर्वे कलशां न्यसेत्
अर्चयेत् स्वस्वमन्त्रेण शूलं वै कलशांस्तथा १५०
गङ्गा च यमुना चैव नर्ददा च सरस्वती
सिन्धुर्गोदावरी चैव कावेरी चैव सप्तकान् १५१
आवाह्य मध्यकलशे गन्धतोय सुपूरिते
अनन्तादि शिखण्ड्यन्तान् कलशेष्वभितो न्यसेत् १५२
पुण्याहं वाच्यशूलास्त्र देवानभ्यर्च्य पूजयेत्
स्नापयेत् कलशैः पश्चात् स्नानं तीर्थे समाचरेत् १५३
त्रिशूलेन सहैवात्र ये तीर्थं कुर्वते नराः

मुच्यते सर्वपापेभ्यो निर्मोकादिव पन्नगाः १५४
याग गेहे शिवाग्नौ तु दद्यात् पूर्णाहुतिं पुनः
होमोपरिष्टात् तत्रस्थं शास्त्रोक्तं सुसमाचरेत् १५५
यागेशं पूजयेत् पश्चात् गन्धपुष्पादिभिः शुभैः
साधितैः कलशैस्तत्र स्नपनं कारयेच्छिवम् १५६
भक्तानां परिचाराणां वस्त्रादिभिः प्रदापयेत्
ध्वजावरोहणं कुर्यात् तत्रादौ तु विशेषतः १५७
त्रयाहे वापि पञ्चाहे सप्ताहे वा वरोहयेत्
स्नपनं तु ततः कृत्वा मूललिङ्गे विशेषतः १५८
उत्सव प्रतिमाश्चापि त्रिशूलं च ध्वजस्तथा
स्नपनङ्कारयेत् तत्र स्तोत्रमङ्गलवाचकैः १५९
हरिद्रानथ शुद्धान्नं सो पदंशं बलिं क्षिपेत्
ध्वजावरोहणङ्कृत्वा पूजान्ते तु विचक्षणः १६०
प्रदक्षिणं ततः कृत्वा सन्धिदेवां विसर्जयेत्
यागोपयुक्त द्रव्याणि देशिकाय प्रदापयेत् १६१
एवं यः कुरुते मर्त्त्य उत्सवं च शिवस्य तु
कुलैकविंशदुत्तार्य शिवलोकमवास्यति १६२
शिवोत्सवमिदं प्रोक्तं स्नपनं च ततः शृणु
इति शिवोत्सवविधि पटलश्चतुदर्शः १४

## अथ स्नपनविधि पटलः

अथातः सम्प्रवक्ष्यामि स्नपनस्य विधिक्रमम्
पञ्चम्यां च नवम्यां च चतुर्दश्यां तु पर्वणोः १
संक्रान्तौ विषुवे चैव अयने ग्रहणे तथा
पञ्चम्यादि ग्रहणान्तं दशवृद्ध्युत्तरं वरम् २
दीक्षान्ते च प्रतिष्ठान्ते प्रोक्षणे चोत्सवान्तके

यागान्ते च सुनक्षत्रे कृत्तिकादीपकर्मणि ३
कर्तव्यं जन्मनक्षत्रे मङ्गले मन्त्रसाधने
राजाभिषेक समये मरणान्तेथ जन्मनि ४
अतिवृष्टावनावृष्टौ दुर्भिक्षे दुर्निमित्तके
भूमिकम्पे दिशान्दाहे ज्वरमार्यादि पीडने ५
सर्वरोगसमुत्पन्ने शत्रुभिः पीडनेपि च
प्रायश्चित्तादिकालेषु शिवं संस्नापयेत् गुरुः ६
नवधा स्नपनं तत्र संक्षेपेण शृणु क्रमात्
पञ्चभिः पञ्चभिश्चैव पञ्चविंशतिभिस्तथा ७
अन्यस्य त्रितयन्त्वेषु शृणु मध्यमकत्रयम्
पञ्चाशन्न्यूनमेकं तु एकाशितिस्ततः परम् ८
शतमष्टोत्तरं ज्ञेयं मध्यमत्रितयं त्विह
षोडशद्विशतं चैव अष्टोत्तरशतत्रयम् ९
अष्टाधिकसहस्रं तु उत्तमादिशिवाधिकम्
उत्तमं त्रीणिविख्यातं सर्वेषां स्नपनं शृणु १०
प्रासादस्याग्रतः कुर्यात् मण्डपं चतुरश्रकम्
विंशश्च तिथिहस्तं च भानुदिक्करमेव च ११
नवाष्ट सप्तषट्पञ्चहस्तैर्नवविधं स्मृतम्
अष्टसाहस्रकं पादं नवानां मण्डपा स्मृताः १२
षट्त्रिंशत् गात्रसंयुक्तमुत्तमानां विधीयते
षोडशस्तम्भसंयुक्तं मध्यमानां तु कारयेत् १३
द्वादशस्तम्भसंयुक्तमधमानां प्रकल्पयेत्
कूटं वा मण्डपं वापि कारयेत् स्वप्रमाणतः १४
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
वितानध्वजसंयुक्तं दर्भमालोपशोभितम् १५
वक्ष्यमाणविधानेन कर्तव्यं चाङ्कुरार्पणम्

कलशानि ततो ग्राह्य साधयेद् आदिशैवकः १६
सौवर्णं रजतं वापि तथा ताम्रमयैरपि
शङ्खैर्वा शुक्तिकैर्वापि गवां शृङ्गैरथापि वा १७
अथवा मृन्मयैर्वापि सर्वलक्षणसंयुतैः
सुपक्वैः सुस्वरैः स्निग्धैर्बिम्ब प्रभसमन्वितैः १८
एतैर्ल्लक्षणसंयुक्तैः स्नापयेत् परमेश्वरः
उत्तमं द्रोणसम्पूर्णं मध्यमं तु तदर्धकम् १९
अधमं चाढकं प्रोक्तं सर्वेषामाढकं तु वा
शङ्खशुक्ति विशृङ्गाणां स्वप्रमाणेन पूरयेत् २०
सूत्रेण वेष्टयित्वा तु कालयित्वाधिवासयेत्
गोमयालेपनङ्कृत्वा विष्टसूत्राणि पातयेत् २१
सूत्राणां चाप्य धर्मादीन् गात्राणान्धर्मपूर्वकान्
स्थण्डिलन्तत्र कुर्वित् शालिभिर्विमलैस्तथा २२
आढकं च तदर्धं वा कलशानां पृथक् पृथक्
तदर्धं तण्डुलैर्भूष्य तदर्धन्तिलसंयुतम् २३
नवधा स्नपनन्तेषु चाद्यसप्तविधिं शृणु
मण्डपान्तश्चतुष्पत्र युक्ताब्जं कर्णिकान्वितम् २४
पञ्चकुम्भस्य विख्यातं महादिदलशोभितम्
प्रागुदक्भ्यां चतुःसूत्रं मार्गैर्न्नवपदं विदुः २५
अष्टसूत्रं समङ्कृत्वा प्राङ्मुखोदङ्मुखं क्रमात्
मध्ये नवपदं ग्राह्यं बहिरेका वृतिन्त्यज्येत् २६
ऐन्द्रादिषु चतुर्दिक्षु पदमेकं परिग्रहेत्
अग्नेय्यादीशपर्यन्तन्तिसृभिस्त्रिः पदं भवेत् २७
महादिक्पदपार्श्वाभ्यां द्वारार्थं द्विपदं त्यजेत्
पञ्चविंशत्पदङ्कृत्वा स्थापयेदधमत्रयम् २८
पादानान्तालमात्रं स्यात् सूत्रद्वादशकल्पितम्

उदक्सूत्रं तथा कल्प्य ह्यष्टद्वाराणि योजयेत् २९
मध्यमे पञ्चविंशच्च द्विपदंत्वावृतं त्यजेत्
पञ्चत्रिंशत्पदं कृत्वा तेष्वेकं गृह्ययत्नतः ३०
इदमेकोनपञ्चाशदेकाशीति पदं शृणु
पदमेकं समावृत्त्य द्वारादिषु पदा त्यजेत् ३१
एकाशीति पदं ह्येवं मध्यमान्मध्यमं शृणु
प्रागग्रं षोडशं सूत्रमुदगग्रं तथैव च ३२
पञ्चविंशत् पदन्तेषु मध्यसङ्ग्राह्ययत्नतः
विदिक्षुनवकङ्ग्राह्यं द्वारत्वात् द्विपदं त्यज्येत् ३३
चतुर्दिक् तिथिकोष्ठेषु तृतीये सन्त्यजेत् त्रयम्
एवङ्कृते पदा सम्यक् शिवाधिक्यं शताष्टकम् ३४
विंशत् सूत्रं प्रकर्तव्यं प्राङ्मुखोदङ्मुखं क्रमात्
तन्मध्ये पञ्चविंशच्च संग्राह्य परितोद्वयम् ३५
त्यजेत् द्वाराष्टकोपेतं गोमयेन तु वारिणा
दिशश्च विदिशश्चैव पञ्चविंशत् पदं क्रमात् ३६
मध्यमव्यूहमध्यस्थं नवन्त्यक्त्वाब्जमालिखेत्
एवङ्कुर्याद् विधानज्ञः षोडशद्विशतं भवेत् ३७
नवधा स्नपनं प्रोक्तं तेषां द्रव्यन्ततः शृणु
वज्रं मरतकं चैव वैडूर्यं च प्रवालकम् ३८
मौक्तिकं पञ्चरत्नानि शिवकुम्भे तु विन्यसेत्
रत्नाभावे ततो हेमं नवानां हेममेव च ३९
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरं दधिघृतं चैव प्रथमावरणं विदुः ४०
प्रस्थपादं घृतं प्रोक्तं द्विपादन्दधिरुच्यते
त्रिपादं क्षीरमित्युक्तं प्रस्थं चैव तु गोमयम् ४१
षड्गुणं चैव गोमूत्रं पञ्चगव्यमिति स्मृतम्

मधु इक्षुरसं चैव पनसाम्रफलौ तथा ४२
कदली नालिकेरौ च सर्षपं च तिलं तथा
विल्वं च मातुलुङ्गं च नारङ्गद्वयमेव च ४३
यवनी वारलाजं च तस्य चूर्णाङ्गुलन्तथा
चन्दनं लघुकुष्ठौ च कच्चोलं पुष्पपत्रकम् ४४
कर्पूरं हिमबेरं च जटामांसिमुरन्त्रणम्
शमीदूर्वा च श्वेतार्कं बिल्वपत्रं च चम्पकम् ४५
शङ्खपुष्पंत्वपामार्गं विष्णुक्रान्ति च धुर्तुरम्
नन्द्यावर्तं श्वेतपद्मं पुन्नागं चातिपाटलि ४६
सह देवी शतपत्री लक्ष्मीस्थलारविन्दकम्
धातकी तुलसी चैव करवीराकृष्णमल्लिका ४७
मल्लिका च शतावेरी गोक्षुराज कृताञ्जली
महाद्रोणं च द्रोणं च भद्री च मधुमद्रिका ४८
इन्द्रवल्लीरुद्रपाणी धात्री चैव हरिद्रकी
व्याघ्र नवी च माञ्जिष्ठी सरलं भद्रकाषुकम् ४९
नवनीतं द्राविलं च सञ्जन्तक्कोलमेव च
बला चाति बला चैव सिंही प्रियङ्गुलोद्धृता ५०
नागकेसरजम्बूका कपित्थाश्वत्थ गुग्गुलु
एला च जीरकं चैव कृष्णजीरकमेव च ५१
सुतैलं कुङ्कुमं मेघमगरुङ्कृष्णलोचना
श्रीवेष्टकं गन्धरसं पिप्पलीहस्तपिप्पली ५२
कृष्णागरुञ्चतगरं मनःशिलारक्तचन्दनम्
लवङ्गं रजनी चूर्णं कषायं मार्जनान्तकम् ५३
पिप्पलोदुम्बर प्लक्ष वटत्वग्भिः कषायकम्
द्रव्यं तिलकुशाग्राणि तथा मार्जव्यमादिशेत् ५४
द्रव्याण्येतानि चोक्तानि द्विविधं स्नानमार्जनम्

रसद्रव्याणि सर्वाणि स्नानद्रव्याणि संविदुः ५५
फलचूर्णौषधीत्यादि मार्जनद्रव्यकाणिते
रसादन्यानि सर्वाणि तोयैः सम्पूरयेत् सुधीः ५६
रसाश्च पञ्चगव्याक्ताः पञ्चकुम्भेषु कीर्तिताः
आज्यान्ता नवकुम्भानां वत्वन्ताः पञ्चकुम्भके ५७
गुलादिपुन्नागान्ताश्च चत्वारिंशन्नवाधिके
द्रव्यादिजात्यलान्ताश्च एकाशीतिर्विशेषतः ५८
पाद्यादिमार्जनान्तास्तु अष्टोत्तरं शतं भवेत्
अधर्माद्यादि । । । दिग्विदिग्व्यूह संज्ञकाः ५९
मध्यमस्य शिवव्यूहो नवव्यूहा प्रकीर्तिताः
गन्धपुष्पादिनाभ्यर्च्य दर्भैश्चैव परिस्तरेत् ६०
मध्यमे शिवकुम्भं तु शिवमन्त्रेण विन्यसेत्
द्वात्रिंशद् वा चतुर्विं शत् षोडशप्रस्थपूरितः ६१
शिवकुम्भमिदं प्रोक्तं वर्धन्यास्तु तदर्धकम्
पञ्चरत्नसमायुक्तं सकूर्चं वस्त्रवेष्टितम् ६२
शिवव्यूहस्य मध्ये तु विन्यस्य शिवकुम्भकम्
तस्य व्यूहस्य सुम्ये तु तन्मध्ये वा शिवोत्तरे ६३
सकूर्चां वस्त्रसंयुक्तां वर्धनीं हेमसंयुताम्
मनोन्मनीं तु संस्थाप्य बीजमन्त्रमनुस्मरन् ६४
गन्धपुष्पादिभिः पूज्य हृदयेन विचक्षणः
पाद्यारभ्य घृतान्तानामष्ट विद्येश्वराधिपाः ६५
मध्वादिमार्जनान्तानां शतरुद्राधिदैवताः
एकैकमर्चयेत् सर्वानेकैकं वस्त्रकं ददेत् ६६
स्वस्वनाम चतुर्थ्यन्तैर्गन्धपुष्पादिभिर्यजेत्
षोडश द्विशतं चैव पूर्ववत् स्थापयेत् क्रमात् ६७
पूर्वोक्तानीहद्रव्याणि प्रधानानि सुकीर्तिताः

उशीरागरुकर्पूर चन्दनैश्च सुपुष्पितम्  ६८
शुद्धतो येन सम्मिश्रमुपस्नानोदकं स्मृतम्
उपस्नानानि तत् सङ्ख्या सप्ततीर्थानि यानि तु  ६९
अधमाधममारभ्य उत्तमादधमान्तकम्
उक्तं सर्वं  विशेषेण देवता द्रव्यसंयुतम्  ७०
उत्तमान्मध्यमं चैव उत्तमोत्तममेव च
स्नपनं चैव द्रव्यांश्च किञ्चित् भेदं गजानन  ७१
षट्सूत्रं प्राङ्मुखं तत्र उदक्सूत्रकमेव च
पञ्चतालप्रमाणेन पदवीसारविस्मृता  ७२
अतः परं समावृत्य पदमष्टौ परित्यजेत्
चत्वारिवीधयः प्रोक्ता महादिक्षु चतुष्पदाः  ७३
द्वादशानि पदानिह चतुष्कोणेषु सङ्ग्रहेत्
तेषु द्वादशकोष्ठेषु प्रत्येकं पञ्चविंशतिः  ७४
मध्यव्यूहविशेषेण कृत्वा नवपदन्ततः
षडावरणमार्गेण स्थापयेत् स्थापकोत्तमः  ७५
स्थापयेन्मध्यतो व्यूहे नवकुम्भानि पूर्ववत्
वर्धनीं तस्य वामे तु प्राग्वत्संस्कृत्य मन्त्रवित्  ७६
पञ्चपङ्क्तिक्रमं वक्ष्ये पञ्चमावरणान्तिकम्
प्रथमे चैव बीजानि लोहान्येव द्वितीयके  ७७
तृतीये चैव रत्नानि धातूंश्चैव चतुर्थके
पञ्चमे पञ्चगव्यं तु तिंशदष्टोत्तरं त्विदम्  ७८
यवनी वारमुद्गांश्च तिलं सर्षपमेव च
श्वेतशाली महाशाली रक्तशाली तथैव च  ७९
सौगन्धी हेमशाली च दशबीजमिति स्मृतम्
द्वाविंशत् कलशेपूर्य प्रथमावरणे न्यसेत्  ८०
उपस्नानादिनीतानि तावत् सङ्ख्यानि विन्यसेत्

चत्वारिंशच्च चत्वारि कलशानि समन्ततः ८१
अर्चयित्वा विधानेन बीजमन्त्रमनुस्मरन्
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ८१
चामीकरं तथा हेमं शातकुम्भमतः परम्
जाम्बूनदं च तप्तं च जाति सप्तादिमिश्रितम् ८२
षड्विंशत् कलशे सूत्रमुदकैः सहविन्यसेत्
तावत् सङ्ख्या भवेत् तेषु कलशेष्वन्तरोदकम् ८३
कलशानि द्विपञ्चाशच्चतुष्कोणेषु चैव हि
द्वितीयावरणे न्यस्त्वा ब्रह्ममन्त्रैश्च देशिकः ८४
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु
पद्मरागं च वैडूर्यं वज्रं पुष्यन्तथैव च ८५
स्फटिकं मौक्तिकं निलमिन्द्रनीलं प्रवालकम्
एतेषु नवरत्नाम्बु त्रिंशत् सुकलशेषु वै ८६
तावत् सङ्ख्या भवेत् तानि कलशेष्वन्तरोदकम्
कलशानि भवेत् षष्टिश्चार्चयित्वाङ्ग विद्यया ८७
तृतीयावरणं प्रोक्तं चतुर्थावरणं शृणु
हरितालं तथा माञ्जिमञ्जनं च मनःशिला ८८
रोध्रं च सीसकं चैव गैरिकं तु ततः परम्
चतुस्त्रींशत्सुकुम्भेषु सप्तधात्वम्बुना सह ८९
तावत् ग्राह्यो भवेत्तानि कलशेष्वन्तरोदकम्
अष्टोत्तरं तथा षष्टिः कलशानां विशेषतः ९०
प्रत्येकमर्चयेत्तानि विद्यांगैश्च विशेषतः
पञ्चमावरणे पञ्चगव्याधानमतः शृणु ९१
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्
गोमूत्रादिषडेतैस्तु अष्टत्रिंशत् घटे न्यसेत् ९२
विन्यसेत् ब्रह्मपञ्चानामष्टत्रिंशत् कला क्रमात्

यावत् सङ्ख्या भवेत्तानि प्रत्येकं चान्तरोदकम् ९३
द्रव्यान् कुम्भेषु संयोज्य शतरुद्रान्विशेषतः
शतत्रयेषु कुम्भेषु विन्यसेत् तु पृथक् पृथक् ९४
संस्नाप्याभ्यर्च्य विधिना स्वैस्वैर्नामभिरेव च
त्रिशताष्टममेवोक्तमुत्तमस्योत्तमं शृणु ९५
प्रागग्रं द्वादशं सूत्रं उदगग्रं तथैव च
एकविंशच्छतं कृत्वा पदन्तत्र विनायक ९६
चतुष्कोणेषु मतिमांश्चतुः सूत्राणि विन्यसेत्
आग्नेयादिसमारभ्य पदैकान्तरितं यथा ९७
षट्त्रिंशत् गात्रसंयुक्तं गात्रस्थाना वृतन्त्यजेत्
द्वारे द्वेद्वेपदन्त्यक्त्वा चत्वारिंशत् पदं स्थितम् ९८
तेषां मध्यमकोष्ठं तु कृत्वा नवपदन्ततः
एकैकं पदमध्ये तु पञ्चविंशति सङ्ख्यया ९९
कलशानि ततोप्यष्ट सहस्रैकादशावृतौ
विद्येशोमा शिवाख्यांश्च कुम्भान्विन्यस्य पूर्ववत् १००
विद्येशावरणान्त्यक्त्वा तच्छृणुष्वदशावृतान्
प्रथमे चैव बीजानि लोहान्येव द्वितीयके १०१
तृतीये चैव रत्नानि धातूंश्चैव चतुर्थके
पञ्चमे पञ्चगव्यानि षष्ठे चैव फलोदकान् १०२
गन्धाश्चौषधयः सर्वे सप्तमे च तथा भवेत्
अष्ट मृच्चाष्टमे चैव कषाया नवमावृतौ १०३
दशमे चैव पुष्पाणि एकैकं तु शृणु क्रमात्
बीजानि पञ्चगव्यान्तं पूर्ववत् स्थापयेत् बुधः १०४
पञ्चमावरणं प्रोक्तं षष्ठमावरणं शृणु
कदली बिल्वचूतांश्च मातुलुङ्गं च डाडिमी १०५
नालिकेरं च नारङ्गं लिकुचं पनसं तथा

फलोदकानि तानीहद्वेषष्टीत्यभीधीयते १०६
प्रत्येकं विन्यसेत् तानि कलशेष्वन्तरोदकम्
कलशानि शतानीह चतुर्विं शति चोत्तरम् १०७
प्रत्येकमर्च्चयेत् तानि प्रशान्तायेतिमन्त्रतः
गन्धैरोषधिभिश्चैव सप्तमावरणं शृणु १०८
उशीरं चन्दनं चैव कर्पूरञ्जातिरेव च
शङ्खपुष्पं च श्रीदेवी विष्णुक्रान्तीशतावरी १०९
गन्धांश्चाष्टौ च धातूंश्च षष्ट्युत्तरषडेव च
तावत् सङ्ख्या तु विज्ञेया ह्युप स्नानविशेषतः ११०
द्वात्रिंशदुत्तरं प्रोक्तं शतमेकं समासतः
ओषधीनां लतानां च वृक्षाणां च समासतः १११
फलानां कुसुमानां च मूलादीनां समाहरेत्
सप्तमावरणं प्रोक्तमष्टमावरणं शृणु ११२
दर्भाधोनागदन्ताग्रे वराहस्य च कर्षणे
वल्मीके वृषशृंगाग्रे नद्यां वै पर्वतेऽपि च ११३
समुद्रे चैव मेधावी मृदं ग्राह्य विशोधयेत्
प्रत्येकं कलशेष्वेवं सप्ततिः परिसङ्ख्यया ११४
उदकेन समापूर्य तत् सङ्ख्या चान्तरोदकम्
चत्वारिंशत् समायुक्तं शतमेकं प्रकीर्तितम् ११५
अर्चयेत् पार्थिवार्णेन नवमावरणं शृणु
आम्रोथपनसश्चैव न्यग्रोधोदुम्बरस्तथा ११६
अश्वत्थं च शिरीषं च मधुकोथपलाशकः
अष्टवृक्षत्व चश्चूर्णं विन्यसेद् वारिणासह ११७
प्रत्येकं पूरयित्वा तु सप्ततिश्चतुरुत्तरम्
तावत् सङ्ख्या भवेत् तानि उपस्नानोदकानि च ११८
चत्वारिंशत् तथा चाष्टौ शतैकेन समायुतम्

अर्चयेच्छिखयाधीमान् गन्धपुष्पादिभिः क्रमात् ११९
दशमावरणे प्रोक्तं पुष्पाणि च ततः शृणु
पङ्कजांश्च पलाशांश्च नन्द्यावर्तां श्च मल्लिकाः १२०
करवीरं चम्पकं च नीलोत्पलं तथाष्टकम्
कलशेषु विनिक्षिप्य सप्तत्यष्टाधिक स्मृताः १२१
पुष्पाणि कलशेष्वेव निक्षिप्याद्भिः प्रपूर्य च
तावत् सङ्ख्या भवेत् तानि उपस्नानानि विन्यसेत् १२२
एवं दशावृतान् स्थाप्य गन्धपुष्पाक्षतैर्युतम्
प्रत्येकं कलशान् सर्वान्वस्त्रैरावेष्ट्य यत्नतः १२३
द्रव्येषु शतरुद्रांश्च अप्सुतीर्थानि कल्पयेत्
नवधा स्थापनं प्रोक्तं तत्र मुद्रां प्रदर्शयेत् १२४
आद्यन्ते च नमस्कारां मध्ये बीजांमनोराम्
एवं तु स्थापयेद् विद्वानासनावाहनादिकम् १२५
कृत्वा प्रागुक्तवद्धिमानभिषेकं समाचरेत्
पुण्याहं तु विशेषेण कृत्वा कुम्भान् प्रपूजयेत् १२६
शैवन्तत्र विधानज्ञमादिशैव कुलोद्भवम्
एकन्तत्र विधानज्ञमाचार्यं पूजयेत् क्रमात् १२७
वस्त्रैराभरणैः पुष्पैरङ्गुलीयकयज्ञकैः
शिवकुम्भं समुत्थाप्य हस्तेन शिरसाथवा १२८
संवाह्य गर्भगेहं तु उत्तराभिमुखस्थितः
स्थापयेद् देवदेवेशं मूलमन्त्रेण मन्त्रवित् १२९
गणाम्बिकेन मन्त्रेण वर्धन्या स्थाप्यपिण्डिकाः
तत् तत् स्थाने पुनस्थाप्य पूर्ववच्च यथा क्रमम् १३०
स्नाप्यद्रव्यं यथा न्यायमुत्थानं च तथैव च
स्थापिते नैव मन्त्रेण स्नापयेत् तु सदाशिवम् १३१
कलशं वा महेस्ते तु विन्यस्त्वा दक्षिणेन तु

गोशृंगाग्र प्रमाणेन संस्थाप्यच्छिन्नधारया १३२
स्थापितान्युपयुक्तानि कलशानि विसर्जयेत्
स्नपनानां च सर्वेषामन्ते हारिद्रचूर्णकैः १३३
संस्नाप्याभ्यर्चयेद् विद्वान् प्रभूतहविषं कुरु
बीजानामप्यलाभे तु निवारं वायवं तु वा १३४
लोहानामप्यलाभे तु निक्षिपेत् तप्तकाञ्चनम्
रत्नानामप्यलाभे तु मौत्तिकं ग्राह्य देशिकः १३५
धातूनामप्यलाभे तु हरितालं विशेषतः
पुष्पाणामप्यलाभे तु पद्मसङ्ग्राह्य देशिकः १३६
एवं यः कुरुते मर्त्यः भक्तियुक्तस्तथैव च
शशिवत् क्रीडते नित्यं शिवलोके महीयते १३७
स्वेच्छयैव समागत्य पृथिव्यामेकराट् भवेत्
नवधा स्नपनं प्रोक्तं शीतकुम्भविधिं शृणु १३८
इति स्नपनविधि पटलः पञ्चदशः १५

अथ शीतकुम्भविधि पटलः
अथातः सम्प्रवक्ष्यामि शीतकुम्भस्य लक्षणम्
अनावृष्टेश्च दुर्भिक्षे परराष्ट्रप्रवेशने १
ज्वरापस्मारनाशाय वसूरिनासनार्थकम्
सर्वरोगविनाशार्थं शीतकुम्भं तु कारयेत् २
द्वात्रिंशत् प्रस्थसम्पूर्णं बिम्ब प्रभसमन्वितम्
त्रिसूत्रैर्वेष्टयित्वा तु यवान्तं वाथवाङ्गुलम् ३
शिवाग्रे स्थण्डिलं कृत्वा या वदष्टौ सकर्णिकम्
तण्डुलैः सोभितं कृत्वा तिलैर्दर्भैः परिस्तरेत् ४
अष्टद्रोणेन शालीनं तदर्धैस्तण्डुलैर्युतम्
तण्डुलार्धतिलैर्युक्तं कारयेत् तु विचक्षणः ५

वस्त्रपूतेन तोयेन शिवकुम्भं तु पूरयेत्
सर्वगन्धसमायुक्तं पञ्चरत्नसमन्वितम् ६
स वस्त्रं सापिधानं च सकूर्चं हेमसंयुतम्
स्थण्डिले विन्यसेत् कुम्भं गन्धपुष्पादिभिर्युतम् ७
पूर्वेद्युरधिवासं स्याद्रात्रौ जागरमाचरेत्
दिशास्वध्ययनं कार्यं कुम्भं स्पृष्ट्वा विशेषतः ८
शान्ति होमं प्रकर्तव्यं तस्याग्रे तु विशेषतः
प्रभाते देवदेवस्य मूर्ध्निमध्ये सुषिरङ्कृतम् ९
वस्त्रैरावेष्ट्यगात्राणि पुष्पमाल्यैर्विभूषयेत्
कुम्भं विन्यस्य तन्मध्ये तत् पृष्ठे सुषिरं न्यसेत् १०
लोहसूच्याग्रमानेन नालं हेममयं भवेत्
द्विगुणं क्षीरदातारं मधूनि त्रिगुणं भवेत् ११
हृदयेन तु मन्त्रेण कुम्भमारोप्ययत्नतः
उपकुम्भं तु संस्थाप्य स्थण्डिले पूर्ववत् बुधः १२
एकविंशद्दिनं वापि चतुर्दशदिनं तु वा
सप्ताहं वाथ पञ्चाहं त्रियहं वा विशेषतः १३
सन्ततं श्रावयेन्मूर्ध्नि कृत्वाशान्तिकरं स्मृतौ
नित्यपूजाविशेषेण काले काले विचक्षणः १४
द्विगुणं पूजयेत् तत्र यावच्छक्यमथापि वा
उपकुम्भात् तु निक्षिप्य जलादुत्थाय पूर्ववत् १५
कुम्भावरोहणं यावत् तावद्धोमं समाचरेत्
आचार्यं पूजयेत् तत्र वस्त्राङ्गुलीयकादिभिः १६
दक्षिणां देशिकायैव दापयेत् तु विशेषतः
अन्ते कुम्भं परित्यज्य वक्त्रमन्त्रेण मन्त्रवित् १७
प्रभूतहविषन्दत्वा पूर्वोक्त विधिना सह
अन्यान् भक्तजनांश्चापि अन्नपानेन पूजयेत् १८

शीतकुम्भमिदं प्रोक्तं नवनैवेद्यकं शृणु
इति शीतकुम्भविधि पटलःषोडशः १६

## अथ नवनैवेद्य विधि पटलः

अथातः सम्प्रवक्ष्यामि नवनैवेद्यलक्षणम्
अग्रयानां हि नाम्ना तत् कृते तस्माज्ञयं भवेत् १
सुमुहूर्त्ते सुलग्ने च नक्षत्र करणान्विते
वाद्यध्वनिसमायुक्तं त्रिशूलेन समन्वितम् २
सर्वालङ्कारसंयुक्तं ततो भक्तजनैर्युतम्
स्वक्षेत्रं सम्प्रविश्याथ ऐशान्यां दिक्समाश्रिताः ३
तत् क्षेत्र रक्षकानां तु दध्योदन बलिं क्षिपेत्
शूकं दात्रेन निक्षिप्य हृदयेन तु बुद्धिमान् ४
विशुद्ध तण्डुलोपेतं शूकं सर्वोपदंशकैः
ग्रामं वा नगरं वापि प्रदक्षिणमथाचरेत् ५
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम्
तद्भागाश्च गजाश्चैव तया चैवाग्रतो नयेत् ६
शूकभारान्ततो नीत्वा व्रीहिभारानन्तरे
उपदंशान्ततो नीत्वा तत स्तण्डुलभारकान् ७
वादका गणिकाश्चैव व्रजेयुः सर्वभूषिताः
सर्वेषां पृष्ठतोभागे संव्रजेत् प्रतिमां शनैः ८
ततो भक्तजनाः सर्वे व्रजेयुः क्रमशः पुनः
प्रविश्य भवनं मंत्री शूकभारां निवेश्य वै ९
आदित्य करसन्तप्तान् व्रीहीन् संक्षिप्यलूखले
तुर्यग्रमण्डलं कृत्वा पिष्टचूर्णैर्विचित्रितैः १०
शालिभि स्थण्डिलङ्कृत्वा लूखलं तत्र विन्यसेत्
वस्त्रेण लूखलं बध्वा मूसलं च ततोर्चयेत् ११

संक्षुभ्यबीजमुख्येन तराडुलङ्गाह्ययत्नतः
नालिकेरगुलोपेतं मरीची जीरकान्वितम् १२
हृदयेन तु मन्त्रेण दद्याद् देवस्य भक्तितः
अन्येषां प्रतिमानां तु दापयित्वा हृदापुनः १३
परिवारबलिन्दत्वा चराडेशाय निवेदयेत्
ताम्बूलं तु विशेषेण दत्वा तत्र हृदाणुना १४
प्रभूतहविषं दत्वा पूर्वोक्तविधिनान्वितः
ततो भक्तजनान्सर्वां नवान्नेन तु भोजयेत् १५
प्रोक्तं तु नवनैवेद्यं कृत्तिकादीपकं शृणु
इति नवनैवेद्यविधि पटलः सप्तदशः १७

अथ कृत्तिकादीपविधि पटलः

अथातः सम्प्रवक्ष्यामि कृत्तिकादीपलक्षणम्
कार्तिके कृत्तिकामासे दीपकर्मसमाचरेत् १
देवालयमलङ्कृत्वा दीपसाधन सङ्ग्रहम्
स्नपनन्तत्र कुर्वीत यजमानेच्छयान्वितम् २
प्रासादाग्रस्य परितच्छाष्टदिक्षुविशेषतः
कूटागाराणि कृत्वा तु चतुर्गात्रान्वितानि वै ३
कूटबन्धेषु सर्वत्र मृदं विन्यस्य तत्र वै
दीपानि विन्यसेत् तेषु दीपस्तं भांस्तु विन्यसेत् ४
खदिरन्नालिकेरं वा पात्रमानं प्रकीर्तितम्
घृतं पात्रे समानीय शोधितं तैलमेव वा ५
कार्पासबीजसंयुक्तं वाससच्छिन्नसंयुतम्
घृतमध्ये सुविन्यस्य स्तम्भमूर्ध्निसुदीपयेत् ६
प्रासादमिह सर्वत्र दीपमाल्यैरलङ्करोत्
क्षुद्रनास्यां महानास्यां कुम्भे चैव कपोतके ७

पालिका सुगुहा स्वत्र दीपयन्त्रैः सुदीपयेत्
प्रासादमूर्ध्नि देशेषु मराडपे गोपुरे तथा ८
प्राकारेषु विशेषेण दीपं सर्वत्र योजयेत्
स्तम्भेषु घटिका योज्यास्तेषु दीपसमावृतम् ९
अघोरास्त्रेण मन्त्रेण दीपदराडेऽधिरोपयेत्
उत्तमं कूटदीपं स्यान्मध्यमं स्तम्भदीपकम् १०
दीपं बाहुल्या मात्रं यदधमं परिचक्षते
भवानीं कारयेत् पश्चात् देवदेवं त्रिशूलिनम् ११
उत्सवं वा प्रकर्तव्यमेकाहं विधिवत् सुधीः
केवले भवने नैव बल्यादि क्रममाचरेत् १२
ग्रामं वा नगरादिं वा आलयं वा प्रदक्षिणम्
दीपेन भूषयित्वा तु भक्तियुक्तानरोत्तमाः १३
ईदृग्गुण विशेषाढ्यं ग्रामं कृत्वा प्रदक्षिणम्
आलयं सम्प्रविश्याथ परिवेषक्रमं चरेत् १४
प्रभूतहविषङ्कृत्वा देवदेवस्य भक्तितः
स्तुत्यैरध्ययनैर्भक्तैर्वाद्यै नृत्तादिकैरपि १५
परितोष्य च देवेशं क्रियां सम्यक् समाचरेत्
कृत्तिका दीपमत्रोक्तं पूरकर्म ततः शृणु १६

इति कृत्तिकादीपविधि पटलोऽष्टादशः १८

अथ आषाढपूरकर्मविधि पटलः

आषाढपूर्वनक्षत्रे पूर्वेद्युरधिवास्य च
रात्रौ होमं प्रकर्तव्यं बलिं प्रक्षिप्ययत्नतः १
रात्रौ प्रतिसरं बध्वा आचार्यं पूजयेत् ततः
प्रभाते देवदेवेशं विशेषात् पूजनं तथा २
बलिन्तत्रैव निक्षिप्य कृत्वा ग्रामप्रदक्षिणम्

लाजचूर्णादि सङ्ग्राह्य स्नानार्थं तु शिवस्य तु ३
जलतिरे प्रपाङ्कृत्वा सर्वालङ्कारसंयुताम्
तन्मध्ये तु स्थितं देवमभ्यर्च्य हृदयेन तु ४
लाजचूर्णसमायुक्तं गुलं चाम्रफलैर्युतम्
कदलीपनसोपेतमपूपं च विशेषतः ५
सङ्ग्राह्यमृद्घटे शुद्धे प्रत्येकं भक्तिपूर्वकम्
भक्ष्यानि वेदयित्वा तु हृन्मन्त्रेण विचक्षणः ६
लाजचूर्णं विसृज्याथ हृदयेन शिवाग्रतः
नवोदकेन तन्मध्ये शूलं संस्नाप्यदेशिकः ७
आलयं तु पुनर्गत्वा ततः स्नपनमाचरेत्
प्रभूतहविषं दत्वा हृदयेन शिवाग्रतः ८
प्रभूतहविषं दत्वा शिवस्य च विशेषतः
अन्येषां प्रतिमाणां च हविषं तु निवेदयेत् ९
एवं समासतः प्रोक्तं फलपाकविधिं शृणु
इति आषाढपूरकर्मविधि पटल एकोनविंशतिः १९

## अथ फलपाकविधि पटलः

अथातः सम्प्रवक्ष्यामि फलपाकविधिं परम्
दूरतस्तु शिवं दृष्ट्वा नमस्कृत्वा तु यो नरः १
मुच्यते सर्वपापेभ्यो निर्मोकादिव पन्नगाः
दूराध्वश्रमविक्लान्तः सुधीः कृत्वा प्रदक्षिणम् २
मार्ग क्लेशोऽप्यथेशाय भवेत् पापानि नश्यति
जनैः पृष्ठानु यातोऽत्र भूलोके तु स जीवति ३
उत्सवे बलिकाले तु यथा कुर्वन् प्रदक्षिणम्
पदे पदेऽश्वमेऽथस्य फलं प्राप्नोति मानवः ४
यथा कृत्वा नमस्कारं तथा लोके सुपूजितः

जलपुष्पं सुपुष्पं वा देवमुद्दिश्य निक्षिपेत् ५
नानापुष्पैरलङ्कृत्य नानाभोगं समश्नुते
आरामं देवदेवस्य यो नरः कृतवान् भुवि ६
स एव धनवान् च्छ्रीमानिह लोके सुपूजितः
अयुतं योगवान् दद्यात् श्रोत्रिये वेदपारगे ७
गोशृङ्गे नाधिकं देवं क्षीरस्नानस्य तत्समम्
कपिलापञ्चगव्येन कुशवारियुतेन च ८
स्नापयेद् देवदेवेशं गवाङ्कोटिफलैः समम्
नवधा स्नपनं कुर्वन्यो नरो भक्तिसंयुतः ९
नानाभोगसमायुक्तः शिवलोके महीयते
नवमार्गे तु यत् कर्म भोगोऽपि नवधा भवेत् १०
नवधा हविषं कृत्वा नवधा भोगमश्नुते
घण्टामणिं च यो दद्यात् ख्यातिर्भूतिर्विशिष्यते ११
वस्त्राण्याभरणादीनि देवदेवस्य योजयन्
नानावस्त्रैः सुसम्पूर्णैर्नाना चा भरणैस्तथा १२
पूजितस्त्विह देवैस्तु पृथिव्यामेकराट् भवेत्
दीपं तु देवदेवस्य सकृत् काले प्रदापयन् १३
लोके तु दीपवत् सोऽपि सर्ववित्तावृतस्मृतः
मनसा कर्मणा वाचा शिवमुद्दिश्य यो नरः १४
सर्वारम्भप्रयोगे वा । । । । । भात् पुनः
सर्वदानतपोयज्ञैः प्राप्यते यत् फलं महत् १५
तस्मादतिशयं स्वर्गे तत्फलं महमाप्नुयात्
कर्षणे च मते लोकान् सप्तसर्वान् जयिष्यति १६
इष्टकाशैल लोहैर्वायः कुर्याद् भवनन्नरः
काञ्चनेन विमानेन शिवलोके महीयते १७
संसिद्धे तु विमाने तु स्थापनं विधिमार्गतः

शिवलोकमवाप्नोति पूज्यमानः सदामरैः १८
शिवलिङ्गे कृते पश्चात् फलं सामीप्यमाप्नुयात्
यद्रूपं स्थापितं बिम्बन्तद्रूपोथ भविष्यति १९
रूपैर्हरवपुर्भूत्वा ईशेन सहितः सुवी
तस्य लोके च रन्धिमान् यथा कामन्तथेशवत् २०
शिवाय निहिता यानि पुष्पाणि च दलानि च
फलानि चैव बीजानि धान्यादीनि विशेषतः २१
यजमानस्य पूर्वे तु शिवलोके व्रजन्ति हि
शिवयज्ञे समाप्ते तु तत् प्रयोगेन देहिनः २२
एवं विंशदतीतानां गुरूणां तस्य वंशिनाम्
दशपूर्वान् समृच्छन्ति समासेन दशापरान् २३
मातृपक्षे प्रसूतानां तल्लोके स्थानमिष्यते
शुश्रूषकाणां दाराणां पुत्रभ्रातृसमन्वितम् २४
शिवलोके निवासं स्याद् यन्नलभ्यं सुदेवतैः
भुक्त्वा तु विपुलान् भोगान् प्रलये समुपस्थिते २५
ज्ञानयोगं समासाद्य स तत्रैव विमुच्यते
प्राकारमण्डपान् कुर्वन्यधेऽष्टं स्वर्गमाप्नुयात् २६
वापी कुपतटाकांश्च देवमुद्दिश्ययत्नतः
यः कुर्वन्बहुधनाढ्यस्तदन्ते शिवमाप्नुयात् २७
कार्यकर्मण्य शक्तस्तु स्मरन्नित्यं तु यः पुमान्
तत्रैव मृयते चैव तस्य स्वर्गं न संशयः २८
आसनासनि सद्भावं ज्ञात्वा सम्पूजयेच्छिवम्
सा लोक्यं चैव सामीप्यं सा रूप्यं प्राप्नुयात् क्रमात् २९
अग्निपूजा च सा लोक्यं बलिना वै तथा भवेत्
उत्सवे नैव सामीप्यं सा रूप्यं रुद्रचिन्तया ३०
शिवनिन्दां च यो मूढः कुर्यादज्ञानमोहितः

स याति नरकं घोरं त्रिसप्तति च संयुतः ३१
तं हन्यादसमर्थश्चेत् गच्छेद् वाथ ततो बहिः
यस्तु प्राणपरित्यागं कुर्याच्छिवनिमित्ततः ३२
तस्यैव फलसम्पत्तिं मयावक्तुन्न शक्यते
तावत् तु शिव सा युज्यं प्राप्नुयान्नात्र संशयः ३३
भक्तिः स्वाभाविकी चैव कृत्रिमा चेति वै द्विधा
स्वभाविका तु या भक्तिः पूर्वजन्मविवर्त्तिता ३४
सहजा चेति सा ज्ञेया इहामुत्र सुखप्रदा
कृत्रिमा वै कृतानाम सा परत्र सुखप्रदा ३५
सहजा वै कृता चैव या सा भक्तिर्न नश्वरी
स पुनः शिव एवेति चिन्तयेत् तच्छिवं नरम् ३६
लिङ्गाद्धस्तं शतं वार्धं शिवक्षेत्रं समन्ततः
यस्य तत्रैव वासत्वं शिवलोकस्य कारणम् ३७
यत्र तत्रैव पञ्चत्वं शिवलोकस्य कारणम्
यत् तु मानुषकं लिङ्गं क्षेत्रमानमिदं स्मृतम् ३८
स्वयम्भूते सहस्रं स्यादार्षे चैव तदर्धकम्
आरामवापि सर्वाणि स्थावराणि तराणि च ३९
दिव्यं प्रयान्त्य सन्देहं प्रभावात् परमेष्ठिनः
तस्मादावसथं कार्यं शिवक्षेत्रसमीपतः ४०
आत्मार्थं पूजयेत् सर्वे सोपहारं शिवस्य तु
तस्मात् पत्रफलैः पुष्पैरम्भसा मनसा बुधः ४१
चित्तं शिवात्मकङ्कृत्वा शिवमाराधयेत् सदा
शिवधर्मात्परोधर्मो न भूतो न भविष्यति ४२
अन्येषु पशुधर्मेषु स्वर्ग एव फलं हि तत्
एतद्धि शिवशास्त्रेषु भुक्तिमुक्तिप्रदायकम् ४३
सर्वशास्त्रं समुत्सृज्य शिवशास्त्रेषु योजयेत्

फलपाकविधिः प्रोक्तमाचार्यलक्षणं शृणु ४४
इति फलपाकविधि पटलो विंशतिः २०

अथ आचार्यलक्षण पटलः

अथातः सम्प्रवक्ष्यामि आचार्यस्य तु लक्षणम्
फलपाकविधिं श्रुत्वा शिवभक्तिर्भवेद्यथा १
तदा प्रवर्तते पुंसो लिङ्गसंस्थापने रतिः
आचार्यं पूर्वमन्वेष्य मूर्तिपांस्तदनन्तरम् २
आदिशैव कुलोद्भूतः पञ्चगोचरसंस्थितः
सर्वशास्त्रार्थ तत्वज्ञः शिवज्ञानविशारदः ३
शिवसिद्धान्त तत्वज्ञः शिवाग्निगुरुपूजकः
सर्वावयवसम्पूर्णः सर्वलक्षणसंयुतः ४
वयः षोडशकादूर्ध्वं सप्ततेरध उच्यते
शिखी वा बद्धकेशश्च कृतज्ञः प्रियदर्शनः ५
गृहस्थश्चोत्तमो ज्ञेयो भौतिक ब्रह्मचार्यपि
क्रियादि ज्ञानपर्यन्त शास्त्रेषु कृतनिश्चयः ६
क्रियापादे तु निपुणश्चर्या पादानुवर्तकम्
योगपादे क्रियाभ्यासो ज्ञानपादानुरञ्जकः ७
हेयो पादेय तत्वज्ञस्तत्वार्थे संव्यवस्थितः
परं भाव विद श्रेष्ठं पञ्चधा वा परं विदुः ८
देहबन्धनिमित्तं च विधिवद्दीक्षितो बुधः
शिवज्ञानामृतानन्दस्तूहापोह विधानवित् ९
ईदृक् भूतस्तु यो विद्वान् स्थापनादीनि कारयेत्
स एव स्थापको वत्सनेतरः सर्वदा विभोः १०
अनुशैवादिभिर्नैव स्थापनादीनि कारयेत्
कण्वादिरादि शैवैस्तु कर्तव्यं स्थापनान्तकम् ११

अन्यथा तु कृते राज्ञस्त्वाभिचारश्च देवताः
नतं गृह्णीत देवेशो न फलञ्जायते ततः १२
यदि मोहेन कुर्वीत सान्निद्ध्यं न कदाचन
मूर्तिपांस्तु ततो वक्ष्ये आदिशैव कुलोद्भवान् १३
आचार्यारम्भशास्त्रे तु तस्मिन्विगत संशयान्
तदभि प्रायतत्व ज्ञानाचार्यस्यानुकूलकान् १४
मूर्तिं च मूर्तिधारांश्च ज्ञातान् सम्यक् समाहितान्
एभिर्गुणैः समायुक्तान् गृह्णीयातान्विचक्षणः १५
वामनांश्च ततो ज्ञात्वा वर्जयेत् तान् प्रयत्नतः
स्वशास्त्रसमयद्वेक्षी त्वङ्गप्रत्यङ्गहीनकः १६
नास्तिको मत्सरो रोगी बधिरो वृद्धिजीवकः
भिषक् शास्त्रोपजीवी च तथा रंगोपजीवकः १७
पिशुनः क्रूरकर्मस्थश्च पलः पारदारिकः
सभीपुरोधसोगर्वीनिः सत्यश्च कृतघ्नकः १८
सन्यासीतार्किको भ्रष्टः कृशाङ्गः शल्यजीवकः
परापवादशीलश्च नैष्ठिकश्च कपालिकः १९
अति ह्रस्वस्त्वति स्थूलो अतिदीर्घो कुदर्शकः
विकटदन्तः कुनवीमधु वै खलतिस्तथा २०
शिपिविष्टो व्रणोपेतश्मश्रुभ्रू चक्षुपिङ्गलाः
गुल्मी चैव बृहद्वीजीत्वर्शसादीनि पीडितः २१
प्रतिष्ठा तन्त्र किञ्चित् ज्ञः पशुशास्त्रानुरञ्जितः
तन्वोपदेश हीनश्च विमनस्कामनस्ककः २२
न्यूनाङ्गी चातिरिक्ताङ्गी शठः पण्योपजीवकः
षण्डश्च गुह्यकश्चैव नैर्गकः श्वापदन्तकः २३
ईदृशान्वर्जयेद् विद्वान् सर्वकर्मबहिष्कृतान्
यदि मोहेन कुर्वीत सान्निध्यं न कदाचन २४

आचार्यमूर्तिपांश्चैव पूर्वोक्तान् सम्प्रगृह्य च
ततश्चापेक्षयेद् वत्स शिल्पिनं सुकुलोद्भवम् २५
स्थपतिं सूत्र गृहिणं वर्धकं तक्षकं तथा
स्थापकेनोदितं सर्वं शिल्पशास्त्रेण निर्दिशेत् २६
प्रासादादि प्रकर्ताथ सोऽपि हस्तपतिः स्मृतः
सूत्रग्राही च मानज्ञो द्रुमाभिख्यो च वर्द्धकी २७
तनूकरणयोग्यो यस्त्वसौ तक्षक उच्यते
च्छेद्यांश्च च्छेदयेत् सर्वान् भेद्ये तु द्रव्यभेदकः २८
वेद्ये तु वेदयेद् द्रव्यां च्छिल्पिकर्मस्त्रिधा भवेत्
स्थपतिः सूत्रग्राही च प्रासादान् प्रतिमादिकान् २९
कुर्यात् तदक्षिमोक्षादीन् तक्षकेन समाचरेत्
शेषे तु वर्जयेत् तत्र मन्त्रकर्मसु सर्वदा ३०
तेषां तु शिल्पिकार्येऽपि स्थपतेस्तु नियोगतः
स्थपतिः शिल्पकार्येषु स्थापकस्यानुसारतः ३१
स्थपतिः शास्त्रकर्मज्ञः कृतकर्माभिजात्यवान्
न हीनाङ्गोऽतिरिक्ताङ्गो धर्मिष्ठः सत्यवाचकः ३२
शल्य ज्ञानान्वितः साधु दृढबन्धुरतन्द्रितः
ईदृशं शिल्पिनङ्ग्राह्य प्रारभेत् सर्वकर्मकम् ३३
आचार्यलक्षणं प्रोक्तं करणानां विधिं शृणु
इति आचार्यलक्षण पटल एकविंशतितमः २१

## अथ करणाधिकारलक्षण पटलः

अथातः सम्प्रवक्ष्यामि करणानां तु लक्षणम्
यागोपकरणं यस्मात् तस्मात् तत् करणं विदुः १
दर्भाणां लक्षणं चैव पवित्राणां विशेषतः
कूर्चानां दर्भमालाया विष्टराणां च लक्षणम् २

आज्यस्थाल्याश्चरुस्थाल्याः कलशानां तु लक्षणम्
हविः पात्रपिधानं च जलद्रोण्याश्च लक्षणम् ३
धूपघण्टाविकल्पं च स्थालिकायाश्च लक्षणम्
प्रमाणं दीपदण्डानां यंत्रिकायाश्च लक्षणम् ४
बलिपात्र त्रिपादीनां दर्वीणां लक्षणं तथा
वितान ध्वजवस्त्राणां पृच्छं न पटलक्षणम् ५
तथोष्णीषोत्तरीयाणां खट्गायाश्च सनस्य च
रथस्य लक्षणं चैव शिबिकापर्यङ्कयोस्तथा ६
सिंहासनोपयानानां स्तम्भाच्छादनरङ्गयोः
पादुकादर्शनानां तु व्यजनं चामरस्य च ७
सितात पत्र पत्राणां पिञ्छानां चैव लक्षणम्
मङ्गलानामधात्राणां तोरणद्वयलक्षणम् ८
सुवर्णपट्टपुष्पाणां गोलकायाश्च लक्षणम्
मकुटानाङ्कुण्डलानां हारकेयूरयोश्च वै ९
कटकङ्कटिसूत्राणां नूपुरस्य च लक्षणम्
जठरोपरिबन्धानां स्त्रीणां भूषणलक्षणम् १०
क्षुराणां कर्तरीणां तु मार्जनस्य प्रमाणकम्
एतेषां लक्षणं वक्ष्ये ह्यानुपूर्वात् गजानन ११
अशुष्कच्छिन्नभिन्ना ग्राह्यदर्भा खण्डितास्तथा
कोमला श्यामला स्निग्धा जीर्णाः शुभ्राः शुभावहाः १२
मृदुश्यामाश्च स्त्रीलिङ्गाः पुल्लिङ्गाः कोमला स्थिराः
अकोमला स्थिराश्चैव अनुग्राह्या नपुंसकाः १३
दर्भाणां लक्षणं प्रोक्तं पवित्राणां ततः शृणु
कुशादर्भाश्च गोवालाः पवित्रङ्कनकास्तथा १४
सप्तपञ्च त्रियुक्तो वा ह्यग्रं तु द्व्यङ्गुलं भवेत्
द्व्यङ्गुलं तस्य नालं तु ग्रन्धिरेकाङ्गुलं भवेत् १५

दक्षिणावर्तग्रथितं पवित्रमिहशोभनम्
अनाम्यङ्गुलविस्तारं ताराष्टैकाम्शहीनकम् १६
तप्तचामीकरेणैव पवित्रं कनकाख्यकम्
दशपञ्चाधिकैर्दर्भैर्दशैकादशकैस्तु वा १७
दशभिर्न बभिर्वापि सप्तभिः पञ्चभिस्तु वा
दर्भसङ्ख्याङ्गुलायामादर्भाणां नवकोर्ध्वके १८
नवाङ्गुलं तु तद्दैर्घ्यं दर्भाणां सप्तपञ्चके
दक्षिणावर्त ग्रथितं ग्रन्थिरेकाङ्गुलं भवेत् १९
कूर्चाग्रं चतुरङ्गुल्यं कूर्चमेवं विधीयते
दशपञ्चाधिकं यत् तु शिवकुम्भस्य विन्यसेत् २०
द्वादशैश्चैव विन्यस्य शेषैः शेषेषु विन्यसेत्
ऊर्ध्वग्रन्थ्या ह्यतोग्रं तु पूर्वाग्रं तु यथा न्यसेत् २१
कूर्चानां लक्षणं प्रोक्तं दर्भमालां ततः शृणु
द्विवृतादक्षिणावर्ता द्वित्रिकैः पञ्चभिस्तु वा २२
दर्भान्तरं वै द्व्यङ्गुल्यं हस्तमानेन लम्बयेत्
कनिष्ठाङ्गुलिनाहेन रज्जुङ्कुर्यान् मनोरमम् २३
लम्बमानास्तु दर्भाणां शस्तास्ता इति संस्मृताः
जपहोमार्चनं तस्य मध्ये वीथ्यत्वमागताः २४
प्रासादयज्ञशालायां परिवेष्ट्य च यत्नतः
विष्टरं पञ्चदर्भैस्तु ग्रन्थिरेकाङ्गुलं भवेत् २५
मुलाग्रौ च दशाङ्गुल्यौ विष्टरं तु विधीयते
सप्तविंशति दर्भैर्वा ह्येकविंशतिरेव वा २६
दशपञ्चभिरेवाथ कूर्चं कुर्वीत बुद्धिमान्
ग्रन्थिस्तद्व्यङ्गुलं प्रोक्तं अग्रं तु द्विगुणं भवेत् २७
नालमेकोनविंशत् तु दर्भेण व्रतबन्धनम्
एषा वै प्रोक्षणी प्रोक्ता परिस्तरणकं शृणु २८

एकविंशति दर्भाभिः कला ग्रन्थिस्तु बन्धयेत्
मेखला मध्यमायाममूलाग्रोदयमिष्यते २९
परिस्तरणकं प्रोक्तं ततः परिधयः शृणु
यैर्मानैः समिथं प्रोक्तं तैरेव परिधिर्भवेत् ३०
आयामं हस्तमानेन कनिष्ठाङ्गुलिनाहकम्
तिस्रः परिधयः प्रोक्ताः पश्चिमे दक्षिणोत्तरे ३१
परिधेर्लक्षणं प्रोक्तं समिधालक्षणं शृणु
न स्फोटिकान सुषिरा ऋजवोग्रन्थि वर्जिताः ३२
द्वादशाङ्गुलिकायामा कनिष्ठाङ्गुलिनाहकाः
समिधालक्षणं प्रोक्तं मेक्षणं तत् प्रमाणतः ३३
ततः सृक्लक्षणं वक्ष्ये शृणु मुग्धविनायक
खदिरश्च शमीविल्वपलाशाः प्लक्षचन्दनौ ३४
तथा च यज्ञ वृक्षेषु यथा सम्भवतः कुरु
त्रिंशदङ्गुलमायाममष्टाङ्गुल सुविस्तृतः ३५
तदर्धं तु घनं प्रोक्तं सूत्रेण समितं ततः
षडङ्गुलं भवेदाभ्यं सप्ताङ्गुलं तु विस्तृतम् ३६
तदग्रं तु त्रिधा कृत्वा तस्मात् कुर्यात् त्रिकोणवत्
गजोष्ठ सदृशाकारन्निम्नं स्याद्यवमानकम् ३७
तद्बहिः पट्टकाङ्कुर्याद्यवाद्यवसुविस्तृतम्
अष्टाङ्गुलसुविस्तारा वेदिकाष्टाङ्गुलायता ३९
तन्मध्ये कारयेत् गर्तन्तच्चत्र्यङ्गुलविस्तृतम्
खातं स्यात् तत् प्रमाणेन तद्बहिर्यवमानका ४०
पट्टिका तु प्रकर्तव्या तद्बहिर्यवनिम्नगा
बिलबाह्ये तु परितः पट्टिकार्द्धाङ्गुलेन तु ४१
श्वभ्रस्य परितः कार्यं पद्ममष्टदलंशुभम्
श्वभ्रारभ्यमुखान्तं यत् कनिष्ठाङ्गुलमानतः ४२

खातं स्यात् कृत धारार्थं निम्नोन्नतविवर्जितम्
दण्डोर्ध्वे वेदिकाधस्तात् त्र्यङ्गुलेन त्रिखण्डिका ४३
अर्धाङ्गुलविवृध्या तु वृत्ता वा चतुरश्रका
दण्डं नवाङ्गुलायामन्तस्य नाभं षडङ्गुलम् ४४
दण्डाधोमुकलङ्कार्यं तदायामं तु द्व्यङ्गुलम्
नाभमष्टाङ्गुलं प्रोक्तं मानमेवं विधीयते ४५
वेदिका परभागब्जे पृष्ठाकारं तुलाञ्चयेत्
तन्मध्ये कर्णिकाकारं पादतारं च त्र्यङ्गुलम् ४६
अङ्गुलं तु तदुत्सेधं स्रवमेवं प्रकल्पयेत्
अरत्निमात्रमायामं तदग्रे बिलसंयुतम् ४७
मूलं षडङ्गुलन्नाहं तदर्धं कण्ठनाहकम्
पुष्करं मूलनाहं तु द्विपुटं नासिकासमम् ४८
माषमग्नं तु निम्नं स्यात् बिलद्वयसमन्वितम्
गोपुच्छसदृशं दण्डं प्रोक्तं तत् स्रवलक्षणम् ४९
सौवर्णं रजतन्ताम्रं मृन्मयं वाथ कारयेत्
अष्टाङ्गुल सुविस्तीर्णन्निम्नं प्रस्थेन पूरितम् ५०
घनमानाङ्गुलं प्रोक्तं द्रव्यपात्रं विधीयते
होमकाले तु द्रव्याणां प्रमाणं लक्ष्यतेऽधुना ५१
घृतेषु गव्यं तच्छेषु स्रवं पूर्णप्रमाणतः
सक्तुमुष्टिमिदं वासमधु वै घृतवत् भवेत् ५२
करपूर्णं तु लाजस्य चाक्षमात्रङ्गुलस्य तु
समिदौषधकं दानां फलानां स्वप्रमाणतः ५३
अन्नमक्षप्रमाणं स्यात् पूर्णाहुत्यास्तु सृङ्गति
तिलसर्षपयोश्चैव शुक्तिमात्रं विधीयते ५४
दध्नाक्षीरस्यमानं तु घृतवत् परिकीर्तितम्
यववेणु कुलुत्थानां शुक्तिमात्रेण होमयेत् ५५

अपूपस्य चतुर्निष्कन्धान्यानां मुष्टिमात्रकम्
एवं प्रमाणं द्रव्याणामाज्यस्थालीन्ततः शृणु ५६
आज्यस्थाल्या प्रणीतायाः प्रमाणं द्रव्यपात्रवत्
आस्यं षडङ्गुलन्तारमोष्ठमेकाङ्गुलं भवेत् ५७
कर्णमेकाङ्गुलं प्रोक्तं जठरं द्वादशाङ्गुलम्
विस्तारेण समाख्यातं शेषं बुद्ध्या प्रकल्पयेत् ५८
चरुस्थालिन्तथैवापि कलशानां विधिं शृणु
द्वादशाङ्गुलविस्तारमुदरं समुदाहृतम् ५९
वर्तितं त्रिगुणन्तेन नाहन्तस्य विधीयते
कर्णं द्वियङ्गुलोत्सेधं विस्तारं चतुरङ्गुलम् ६०
ओष्ठं तु द्व्यङ्गुलोत्सेधं द्व्यङ्गुलन्निर्गमं स्मृतम्
एवमेव हि वृद्ध्या तु कर्तव्यौ मध्यमाधमौ ६१
अनुसारं यथा बुध्या कल्पयेत् कल्पवित्तमः
आच्छादनं शरावाणां मुखमानेन विस्तरम् ६२
त्र्यङ्गुलं तु तदुत्सेधं मध्ये निम्नं द्वयाङ्गुलम्
एवं प्रमाणमुद्दिष्टं शृणुष्व घटलक्षणम् ६३
यद्वद्वैकलशाकरं तद्वदेव । । स्मृतम्
चतुर्गुणविवृध्या तु घटमेवं विधीयते ६४
चरुस्थाली यथा रूपं हविः पात्रन्तथैव च
यावत् तण्डुलसम्पत्तिस्तावत् ब्रह्मणमुच्यते ६५
आस्यतुल्यं पिधानं तु मध्ये तु वलयं तथा
मिश्रतम्रेण ताम्रेण हविः पात्रं प्रकीर्तितम् ६६
सौवर्णं रजतं वापि ताम्रजाम्रन्मया तु वा
जलद्रोणी प्रकर्तव्या वृत्ता वा चतुरश्रका ६७
दशद्रोणैरथाद्भिस्तु पूर्णितं ग्रीववर्जितम्
अष्टद्रोणेन पूर्णं वा षड्भिर्वाद्रोणपञ्चकैः ६८

चतुर्भिर्वा त्रिभिः कार्यं वर्धनीं च ततः शृणु
तस्यास्यं चतुरङ्गुल्यमोष्ठद्वयसमायुतम् ६९
तत् पार्श्वं सुषिरान्तस्थं नाली स्याच्चतुरङ्गुलम्
बृहोदरं तनुग्रीवं समयुक्तिमथाचरेत् ७०
कमण्डलुश्च तद्वत् स्यान्मुखमध्योर्ध्वनालके
ओष्ठं च सुषिरं कृत्वा प्रष्ठे पादं प्रलम्बितम् ७१
अङ्गुलं तु च तन्मानं सुषिरं पार्श्वतस्तथा
ऊर्ध्वे पिप्पलमानं स्यादक्षिरं मुखनालकम् ७२
एवं कमण्डलुङ्कुर्यात् सर्वलक्षणसंयुतम्
कलुषं कृमिशैवालमशुचिस्थानसंश्रितम् ७३
गन्धवर्णरसैर्जुष्टं सूर्यरश्मिविवर्जितम्
पङ्काश्मदूषितं चैव क्षारोदं पल्वलोदकम् ७४
अग्राह्यमुदकङ्ग्राह्यमेभिर्दोषैर्विवर्जितम्
अष्टद्रोणैरथाद्भिस्तु स्नानं कन्यसमुच्यते ७५
अभिषेकमथाद्भिस्तु द्विगुणैर्मध्यमं स्मृतम्
उत्तमं त्रिगुणैरद्भिः पुष्पपात्रमथ शृणु ७६
विंशत्यङ्गुलविस्तारं त्रिगुणन्नाहमुच्यते
तदन्तर्नाहमेवं तु पुष्पपात्रं विधीयते ७७
तदर्धमर्घ्यपात्रं तु तन्नालेन विहीनकम्
शरा वा कृतिरग्रे तु द्विपात्रं तदविस्थितम् ७८
शराव पृष्ठनालं तु अष्टाङ्गुलसुदैर्घ्यकम्
तिर्यक् कृत्वा यथा भोगं तदन्ते चैकपायुवत् ७९
पिधानं मुकुलाकारमनेकसुषिरैर्युतम्
धूपपात्रं समाख्यातमुरुघण्टामथ शृणु ८०
द्वादशाङ्गुलमुत्सेधं त्रिगुणन्नालमेव च
जिह्वा च द्वादशाङ्गुल्यं तदर्धं शिखरं भवेत् ८१

तन्मध्ये वै तु सुषिरं वलयेन समन्वितम्
तद्धनं त्रिगुणेनैव तदास्योष्ठघनं स्मृतम् ८२
कण्ठं तु त्र्यङ्गुलोत्सेधमधमस्य तु लक्षणम्
द्विगुणं त्रिगुणं प्रोक्तं धूपघण्टामथ शृणु ८३
घण्टां कुर्वीत कांस्येन चतुरङ्गुलमुच्यते
विस्तारन्तत् प्रमाणं तु शिखरं तु तदर्धकम् ८४
अष्टाङ्गुलेन घण्टा स्यात् जिह्वा च चतुरङ्गुला
तत् घनं त्रिगुणे नैव तदास्योष्ठ घनं भवेत् ८५
अधमन्त्वेतदुद्दिष्टं पञ्चाङ्गुलं तु मध्यमम्
ज्येष्ठं षडङ्गुलं प्रोक्तमन्यत्सर्वं समंविदुः ८६
तत् समन्नालमूर्ध्वं तु शूलन्तच्छिरविन्यसेत्
पात्रं वा शंखचक्रं वा वृषं वा मूर्ध्नि विन्यसेत् ८७
धूपकाले प्रयोक्तव्यं घण्टानादसमन्वितम्
घण्टायास्तु ध्वनिं श्रुत्वा सर्वपापैः प्रमुच्यते ८८
स्थलिकापाद रहितं रक्तिमात्रं सुविस्तृतम्
सौवर्णं रजतन्ताम्रं कांस्ये नैवाथ कारयेत् ८९
ओष्ठमेकाङ्गुलोन्नत्या तद्धनं द्विगुणेन तु
अर्धाधिकं च द्विगुणं प्रोक्तं वै मध्यमोत्तमे ९०
स्थलिकालक्षणं प्रोक्तं दीपदण्डं ततः शृणु
एकहस्तं समारभ्य नवहस्तान्तमेव च ९१
उत्सेधादष्टभागैक दण्डनाहं प्रकीर्तितम्
तदुच्चैः पञ्चभागे तु द्विभागं पादविस्तरम् ९२
पदान्ताद्धस्तमानेन तद्वदूर्ध्वे तु विस्तरम्
नानागणिकया युक्तं नानाकुम्भैः समन्वितम् ९३
तदूर्ध्वे मुकुलाकारं नालं ग्रन्थिसमायुतम्
दीपदण्डं तव प्रोक्तं दीपमालां ततः शृणु ९४

ताम्रेण वायसेनाथ दारुभिर्वाथ कारयेत्
द्वारे तु द्वारवत् कृत्वा प्रभाकारं तु पृष्ठके ९५
शूलवच्छूल देवांश्च चक्रं च चक्रदीपवत्
धुर्तूरपुष्पवन् मूर्ध्नि एकधारक दीपिका ९६
दीपदेहा इमे प्रोक्ता यंत्रिकांश्च ततः शृणु
आयसेन प्रकर्तव्यं नालं वै मध्यमाङ्गुलम् ९७
कवाटार्गल सम्बन्धं यथा युक्तं भवेदिह
द्विवक्त्रं च ततः कृत्वा पूर्वपश्चिमसंयुतम् ९८
मूले वलयसंयुक्तं सुस्निग्धं च भवेदिह
यंत्रिका च तथा प्रोक्ता बलिपात्रमतः शृणु ९९
आयसेन प्रहैमेन अथवा ताम्रकेण वा
चतुस्त्रिद्वयतालं वा विस्तारं समुदाहृतम् १००
दलाष्टकसमायुक्तं कर्णिकामध्यमे न्यसेत्
भक्तिद्वयङ्गुलोत्सेधं त्रिभागैकेन कर्णिकाः १०१
चतुर्विधा त्रिपादी स्याच्छंख पादीत्रिपादिका
यवनी पादमेवं स्यात् स्थलिका पादमेव च १०२
षडङ्गुलन्तदुत्सेधं तदर्धं मुखविस्तरम्
कनिष्ठाङ्गुल नाहं तु शङ्खपादं प्रकीर्तितः १०३
द्विगुणं च त्रिपादी च पादं वक्त्रेण संयुतम्
शरावा कृतिमूले तु शेषं बुध्या प्रकल्पयेत् १०४
त्रिपाद त्रिगुणं वत्सयवन्याः पादमुच्यते
पीठोत्सेधसमं विद्यात् स्थलिका पादमेव च १०५
त्रिपादलक्षणं प्रोक्तं दर्व्यालक्षणकं शृणु
रत्निमात्रं तदायामं भुजङ्गस्य फणोपमम् १०६
अष्टाङ्गुलसुविस्तीर्णं तदर्धं पादमेव च
तदर्धं मध्यमस्योक्तमुक्तं दर्व्यास्तु लक्षणम् १०७

पञ्चहस्त प्रमाणेन विस्तारायामतः समम्
वस्त्रयुग्मसमायुक्तं सुश्लक्ष्णं सुदृढं सितम् १०८
नानावर्ण विचित्राङ्गं तथा सर्वं तु कारयेत्
एवं वितानमुक्तं तु ध्वजलक्षणमुच्यते १०९
क्षौमपट्टदुकूलैर्वा कार्पास सममेव वा
हस्तमात्र सुविस्तारमायामं द्विगुणं भवेत् ११०
चतुस्त्रिद्वयपुच्छं वा ध्वजार्धशिरपुच्छकम्
पताकायाः प्रमाणं तु प्रागुक्तद्विगुणायतम् १११
अन्यत् समानमत्रैव जललक्षणमुच्यते
पट्टदेवाङ्गनेत्रैर्वा कार्पासैः शुक्लवाससा ११२
पीठोत्सेधस्य चार्धार्धं वस्त्रविस्तारमुच्यते
विस्ताराष्टगुणायामं सदशन्तु सलक्षणम् ११३
आखुदष्टाग्नि दग्धं च जीर्णं चापि विसर्जयेत्
वस्त्रमेवं समाख्यातं पृच्छन्न पटमुच्यते ११४
द्वारादध्यर्ध विस्तारमायामं द्विगुणं भवेत्
पापक्रूर परिभ्रष्टैर्नास्तिकैः श्रुतिदूरकैः ११५
गोरसक्रयकैश्चैव पतितैश्च द्विजन्मभिः
वेदविक्रयकैश्चापि शास्त्रविक्रयकैरपि ११६
अदृष्टार्थं प्रकर्तव्यं दृष्टे पूजा तु निष्फला
विसर्जने तु निर्माल्ये पुष्पालङ्कारकर्मणि ११७
निवेद्यकाले सन्दिग्धे पृच्छन्न पटमुच्यते
उष्णीषं चोत्तरीयं च श्वेतसूक्ष्म सुवाससा ११८
उष्णीषं चोत्तरीयं च नवहस्तप्रमाणतः
खट्गपादसमुत्सेध रत्निद्वयसमायुतम् ११९
अथवा हस्तमात्रं स्यात् पादद्विगुणविस्तरम्
विस्तारद्विगुणायामं कक्ष्याभिर्बन्धयेत् ततः १२०

खट्गायालक्षणं प्रोक्तमासनं शृणु सुव्रत
चतुः सिह्मसमायुक्तं हस्तमात्रोच्छ्रयं भवेत्  १२१
द्विरत्निविस्तृतं कार्यं  वृत्तं च चतुरश्रकम्
आच्छाद्यतरुभिच्छोर्ध्वन्निघृणं सुदृढं क्रमात्  १२२
हंसा कारेण वा पादं भूतपादमथापि वा
गजाकारं वृषाकारं पादङ्कुर्याद् विशेषतः  १२३
कपोतनासिका युक्तं नानारत्नैर्विभूषितम्
हाटकं रजतं वापि यथा दारुमयं तु वा  १२४
आसनं त्विदमाख्यातं ततः पद्मासनं शृणु
ऊर्ध्वाधोदलसंयुक्तं वृत्तमब्जासनं स्मृतम्  १२५
खट्गाकारैर्युतं पीठं समं वा चतुरायतम्
फलकापादहिनं च ततो रथमिहोच्यते  १२६
चतुश्चक्रसमायुक्तं चक्र पोततरुद्वयम्
तदूर्ध्वे वेदिकायुक्तमुत्तरं तु निवेशयेत्  १२७
तदूर्ध्वे पद्मपट्टं च क्षूद्रपट्टं ततो न्यसेत्
कापोत नासिकायुक्तं फलकोपरि विन्यसेत्  १२८
द्वादशक्षुद्र पादाः स्युरष्टौ वा षोडशापि वा
विंशतिर्वा समाख्याता नासिकास्तद्वदेव हि  १२९
प्रत्यग्रे मुकुलं कार्यं  तस्य नालं त्रिवक्रकम्
वृषभौ पार्श्वयोर्न्यस्त्वा तयोर्मध्ये पितामहः  १३०
यष्टिरज्जु समायुक्तस्त्वग्रभागे प्रतिष्ठितः
प्रासादवत्तदुपरि मण्टपन्तोरणं हि वा  १३१
रथं समासतः प्रोक्तं रङ्गं चैव ततः शृणु
रथाधिष्ठानवत् कृत्वा ब्रह्माणं मुकुलन् त्यजेत्  १३२
रङ्गमण्टपवत् कृत्वा ह्यधप्रासादवत् कृतम्
दारुणा द्वितलङ्कृत्वा तदूर्ध्वे तु रगंमयः  १३३

चतुर्वापि गजोमध्ये वृषसिंहद्रुमोऽथवा
तलोर्ध्वैयं त्रिडोलांश्च अन्यदुक्तं तु कारयेत् १३४
एवं तु रङ्गमाख्यातं शिबिकां च तत शृणु
शिबिका चैव मौरण्डी च शेखरी च त्रिधा भवेत् १३५
उत्तमं सप्ततालं तु पञ्चतालं तु मध्यमम्
अधमं तु चतुस्तालं विस्तारं त्रिविधं स्मृतम् १३६
विस्तार द्विगुणायामं पादो न द्विगुणं तु वा
दन्तैर्वा दारुसारैर्वा काञ्चनाद्यैरलङ्कृतम् १३७
पद्मपट्टिकया युक्तं फलकादि दृढान्तरम्
पद्मपत्रं षडङ्गुल्यं फलकाङ्गुलि हीनकम् १३८
षोडशाङ्गुलमुत्सेधं भित्तेरुच्छ्रयमुत्तमम्
एकैकाङ्गुलिहीना स्युर्मध्यमस्याधमस्य तु १३९
पट्टिका विस्तरं शस्तमथाष्टाङ्गुलमुत्तमम्
अङ्गुलाङ्गुलिहीनं तु मध्यकन्यसयोस्तथा १४०
मध्ये पट्टिकया युक्तं फलकाञ्जालकान्वितम्
भित्तिपादाश्रितं कीलमायसेन तु कारयेत् १४१
नानारूपसमायुक्तं नानानटसमायुतम्
मध्यपट्टसमं प्रोक्तमग्रभित्तेः समुन्नतम् १४२
भित्यग्रे सिम्हकौ तिर्यक् मकरे तच्छिरोपरि
पालिका सदृशाः पादाः सप्तवाष्टाङ्गुलोन्नताः १४३
एवं वै शिबिकाप्रोक्ता मौरण्डी शेखरयोः शृणु
विस्तारस्य समं प्रोक्तं भित्तेरुच्छ्रयमेव तु १४४
शलाकृति यथा रूपं मौरण्ड्याकारं विधीयते
शेखरे शिखरैर्युक्तं कापोतैः पादसंयुतम् १४५
एवं तु शिबिका प्रोक्ता ह्यण्डजादीं ततः शृणु
अण्डजं मुण्डजं चैव रोमजं चर्मजं तथा १४६

वामजं शयनं पञ्च कल्पास्त्वेते विशेषतः
अण्डजं चात्र बोधव्यं पक्षिपिञ्छसमुद्भवम् १४७
कार्पासेन कृतं यत्तु मुण्डजं च प्रकीर्तितम्
आविकादि मृगाणां तु रोमजं रोमजं स्मृतम् १४८
चर्मजं व्याघ्र सिंहयोः कौशेयं वामजं स्मृतम्
पट्टं वापि प्रकर्तव्यं स देशेन समन्वितम् १४९
अण्डजं श्वेतरूपं स्यान्मुण्डजं पीतवर्णकम्
रोमजं कृष्णवर्णं तु रक्तवर्णं तु चर्मजम् १५०
वामजं सितवर्णं तु शुक्लरूपं तु पट्टकम्
यथार्हकं तथा कृत्वा ह्युपधानं तथा भवेत् १५१
नवद्वादशकैर्वापि दशपञ्चाधिकैस्तु वा
नानावर्णैः सवर्णैश्च नानारूपसमायुतैः १५२
एतैर्वस्त्रैस्तु सम्प्रोक्तं तरङ्गमिह शोभनम्
स्तम्भायाम समायुक्तं स्तम्भवेष्ट न मुच्यते १५३
शुद्धकांस्येन कर्तव्यं विस्तारं रत्निमात्रकम्
षोडशाङ्गुलविस्तारमथवा द्वादशाङ्गुलम् १५४
तारार्धं वा तु तुङ्गं स्यात् कुर्याद् देवस्य दर्पणम्
तत्र तु द्वादशाङ्गुल्यं पादुकं स्वप्रमाणतः १५५
आयामार्धं तु विस्तारं विस्तारार्धं समुच्छ्रतम्
लोहे नैव तु कर्तव्यं पादुकाद्वयमुत्तमम् १५६
चामरव्यजनादीनां लक्षणं वक्ष्यतेऽधुना
मायूरव्यजनं कुर्याच्चमर्या चामरं तथा १५७
हेमरत्नमयं दण्डं रौप्यन्ताम्रमयं तु वा
दन्तैर्वा दारुसारैर्वा दण्डं कुर्याद् विशेषतः १५८
श्वेतच्छत्रस्य पिञ्छस्य वक्ष्येऽहं लक्षणं शृणु
सप्त षट्तालतारं वा ह्यधवा पञ्चतालकम् १५९

वस्त्रैरावेष्ट्य सर्वत्र मौक्तिकैश्च विभूषयेत्
मयूरपिञ्छकैः पिञ्छमथोद्युगं तु कल्पयेत् १६०
सौवर्णं रजतं वापि ताम्रं वा मकुटं भवेत्
नवाष्ट सप्तषड्ढस्तैः पञ्चहस्तैश्चतुष्ककैः १६१
त्रिहस्तैर्वा यथा लाभन्तेषां दण्डस्य दैर्घ्यकम्
तालञ्छत्रं तु कर्तव्यं तत् प्रमाणं तु बुद्धिमान् १६२
छत्रं पिञ्छं तथा प्रोक्तमष्टमङ्गलमुच्यते
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम् १६३
श्रिवत्सं स्वस्तिकं शङ्कं दीपो देवाष्टमङ्गलम्
स्त्रीणां शिरोपरिन्यस्त्वा मङ्गलानि विशेषतः १६४
रत्निमात्रं समुत्सेधं मन्वङ्गुल सुविस्तृतम्
दर्पणादिनी रूपाणि कृत्वा वै शिरसि न्यसेत् १६५
सर्वधा शुक्लवर्णाः स्युः सर्वाभरणसंयुतान्
यन्मानं दिव्यनारीणां तन्माने नैव कारयेत् १६६
हृदयें जलिसंयुक्ताः पद्मपीठोपरि स्थिताः
लोकैर्वा दारुभिर्वापि कारयेद् देशिकोत्तमः १६७
स्वनाम्नैव च सम्पूज्य सर्वमङ्गलकर्मसु
अथवाष्टाङ्गुलन्तारमायामं षोडशाङ्गुलम् १६८
अधस्तात् पद्मपीठं तु तच्चतुर्थां शमानतः
पद्मोर्ध्वे दर्पणादीनि कारयेद् अथ लेखयेत् १६९
देवाष्टमङ्गलं प्रोक्तमस्त्राणां लक्षणं शृणु
शूलं परशु वज्रं च खट्गं पाशं तथाङ्कुशम् १७०
घण्टानागं च वह्निं च क्षुरिका च दशायुधम्
एकतालप्रमाणं तु भूतानामुपरि स्थितम् १७१
विंशत्यङ्गुलमायामं भूतानां तु प्रकीर्तितम्
भूतवत् भूतमानेन कारयेत् सर्वमानकैः १७२

यद्वर्णमायुधस्योक्तं तद्वर्णं नामतद्भवेत्
भागेन कारयेच्छूलं गण्डिकाभागमेव च १७३
शूलस्य लक्षणं प्रोक्तं परशोर्ल्लक्षणं शृणु
गण्डिकाशूलपादाभ्यां कालमानेन वै बुधः १७४
भागन्नालं तथा ग्रन्थि चतुरास्य समायुतम्
एवं वै परशु प्रोक्तं वज्रलक्षणमुच्यते १७५
तालमात्रं तथा यामं विस्तारोऽष्टाङ्गुलं मतम्
तन्मध्ये गण्डिकां कुर्यात् चतुरङ्गुलमानतः १७६
शेषैरष्टाङ्गुलैरेव अधश्चोर्ध्वं त्रिशूलवत्
पार्श्व पत्रद्वयं चक्रं मध्यमत्र ऋजुस्थितम् १७७
एवं वज्रं समाख्यातं खट्गलक्षणमुच्यते
एकाङ्गुलं तु विस्तारमधस्तात् कञ्चुकं भवेत् १७८
चतुरङ्गुलविस्तारा फलका चतुरश्रका
त्रियङ्गुलं भवेत् कर्णं तस्य नाहं द्वयाङ्गुलम् १७९
कर्णोर्ध्वे पालिकां कुर्यात् फलकोक्तार्धमानतः
तदूर्ध्वोङ्गुलविस्तारमर्धाङ्गुलमथायतम् १८०
ऋजुङ्कृत्वा कृतिर्वक्त्रमेवं खड्गस्य लक्षणम्
फणद्वयसमायुक्तः पाशः प्रोक्तो भुजङ्गमः १८१
पूर्वोक्तविधिना कार्या घण्टा लक्षणसंयुताः
नागं हीनाङ्गवत् कृत्वा फणयुक्तं सजिह्वकम् १८२
अग्निज्वालासमायुक्तो नालमर्धमिदं भवेत्
क्षुरिकान्तालमात्रोच्चान्तस्य मूलं तु खट्गवत् १८३
ऋजुतीष्णास्य संयुक्तां सूक्ष्माग्रेण समायुताम्
एवं दशायुधं प्रोक्तं सदाशिवकरेधृतम् १८४
सर्वमङ्गलकार्येषु उत्सवे यागकर्मणि
पूजयेत् सुविशेषेण लोकपालायुधांच्छृणु १८५

वज्रं शक्तिं च दराडं च खट्गं पाशांकुशौ गदाम्
त्रिशूलं चक्रं पद्मं च दशायुधमिति स्मृतम् १८६
प्राक् दशास्त्रोक्तमानेन लोकशास्त्राणि कारयेत्
पूर्ववद् वज्रमुक्तं तु शक्तिलक्षणमुच्यते १८७
मूले गरिडकयायुक्तं भवेदेकैकमङ्गुलम्
एकैकाङ्गुल वृध्या तु विस्तरं गरिडकात्रयम् १८८
चतुरङ्गुलं तु तन्मूलं नाहन्तस्य षडङ्गुलम्
तदूर्ध्वे गरिडकायुक्तं कुम्भं चैव तदूर्ध्वतः १८९
दराडमेवं समाख्यातं खट्गं पाशं तु पूर्ववत्
दराडाग्रे गरिडकायुक्ता जिह्वा श्वेद्बालचन्द्रवत् १९०
अङ्कुशं त्विति विख्यातं गदालक्षणमुच्यते
गदायास्तु प्रकर्तव्यं कुम्भाधस्तात् तु पूर्ववत् १९१
कुम्भधारा समायुक्त गदा वै दराडवत् स्मृतौ
प्रागुक्ता वयवोपेतं शूलं पूर्ववदेव हि १९२
चक्रस्य शूलवन्मानं द्वादशारसमन्वितम्
मध्ये नाभि समायुक्तं परितः पत्रसंयुतम् १९३
एवं चक्रं समाख्यातं पद्मलक्षणमुच्यते
अष्टाङ्गुलं तु मुकुलं दलाष्टकसमन्वितम् १९४
चतुरङ्गुलनालं तु कुर्यात् पद्मं स लक्षणम्
सौवर्णं रजतं वापि ताम्रा यासन्तु दारुवत् १९५
तेषां रत्निसमुत्सेधं कृत्वा पुरुषमानतः
किञ्चिदत्र विशेषोऽस्ति शक्तिस्त्रीरुपया भवेत् १९६
शेषाश्च पुरुषाकारा सर्वाभरणभूषिताः
अस्त्राणि शिरसाधार्या नमस्कृत्वा कृताञ्जलिः १९७
अस्त्रवर्णास्तु पूर्वाः स्युर्नाम तन्नाम एव तु
अस्त्राणां लक्षणं प्रोक्तं तोरणानां शृणु क्रमात् १९८

पलाशखदिराश्वत्थैः शमीबिल्वशिरीषकैः
कारयेत् तोरणान् सम्यक् यथा वा याज्ञिकैः पुनः १९९
सप्तषट्पञ्चहस्तोच्चं विस्तारं स्यात् तदर्धकम्
एकहस्तप्रमाणेन मध्ये शूलसमायुतम् २००
तोरणानां विधिः प्रोक्ता भद्रं तोरणमुच्यते
द्वारेषु गोपुराणां च विन्यसेच्छुभ कर्मणि २०१
द्वारात् पादाधिकं दैर्घ्यं विस्तारं द्वारतः समम्
कुम्भगण्डयुतं स्तम्भं विष्कम्भं रत्निविस्तृतम् २०२
अश्वत्थ पत्रवलयैरष्टमङ्गलकैर्युतम्
त्रिशूलमुपरि न्यस्त्वा हस्तमात्रप्रमाणकम् २०३
भद्रतोरणमेवोक्तं सुवर्णकुसुमं शृणु
द्वादशाङ्गुलविस्तारं वसुभागार्धमेव वा २०४
मध्यमे कर्णिकायुक्ते दलाष्टकसमन्वितम्
पुष्पमेवं समाख्यातं पट्टं च गोलकां शृणु २०५
पट्टं च भागविस्तारं लिङ्गनाहं च दैर्घ्यकम्
गोलका किञ्चिदाविधं लिङ्गमानेन कारयेत् २०६
जटामकुटमीशस्य शक्तिनां तु किरीटकम्
मकुटं कुण्डलं चैव हारकेयूरकं तथा २०७
कटकं कटिसूत्रं च पादनूपुरकं तथा
कुर्यादुदर बन्धं च स्त्रीणां वै रत्नभूषणम् २०८
यथा हि प्रतिमानां तु तथा तत्रैव बुद्धिमान्
एवमाभरणं प्रोक्तं क्षुरकर्तरिकां शृणु २०९
अष्टाङ्गुलमयि वामं तदर्द्धं विस्तृतं तथा
आयसेन तु कर्तव्यं तन्नालं चतुरङ्गुलम् २१०
द्वादशाङ्गुलमानेन विवक्रमरसंयुतम्
क्षुरकर्तरिकौ प्रोक्तौ दीक्षाकर्मणि योजयेत् २११

द्वादशाङ्गुलमानेन ऊर्मिजालेनमार्जनम्
नालिकेरस्य पत्राणां सारान् बहुलसंयुतान् २१२
अरत्निमात्रमायामन्तं मूले रज्जुबन्धनम्
द्विविधामार्जनी प्रोक्ताह्यंयं मार्जनकर्मणि २१३
मृत्पात्राणीह सर्वाणि मासादूर्ध्वं परित्यजेत्
लोहदार्वादिकरणं तल्लयान्तं परिग्रहेत् २१४
एवं समासतः प्रोक्तं ग्रमादीनां ततः शृणु
इति करणाधिकारलक्षणपटल द्वाविंशतितमः २२

## अथ ग्रामादिलक्षण पटलः

अथातः सम्प्रवक्ष्यामि ग्रामादीनां तु लक्षणम्
देवानां पूजनार्थं तु ग्रामादिविन्यसेत् क्रमात् १
ग्रामं च नगरं चैव पत्तनं खर्पटं परम्
खेटकं कुटिकं चैव शिबिरं राजधानिकम् २
सेनामुखं दशैतानि कीर्तितानि क्रमेण वै
विप्राणां च ससत्यानां वासोग्राम इति स्मृतम् ३
स एव विप्रमुख्यानामग्रहार इति स्मृतम्
अनेकजातिसम्बाधं नानाशिल्पजनैर्युतम् ४
क्रयविक्रयकैः कीर्णं सर्वदेवैः समायुतम्
नगरं त्विति विख्यातं पत्तनं शृणु साम्प्रतम् ५
दीपान्तरगतद्रव्यं विक्रयक्रयकैर्युतम्
पत्तनं त्वब्धितीरे तु तयोर्मिश्रं तु खर्पटम् ६
क्रयविक्रयकैर्युक्त नानाजातिसमायुतम्
तन्तु वायैः समायुक्तं तत्पुरं त्विति संस्मृतम् ७
शूद्रैरधिष्ठितं यत्तत् खेटकं त्विति कीर्तितम्
तेषां समान्तरे येषां वा संकुटिकमुच्यते ८

राजसेना च मूनान्तु निवेशं शिबिरं स्मृतम्
चतुरङ्गसमाकीर्णं नृपभूतिसमायुतम् ९
राजवेश्मसमायुक्तं राजधानीति चोच्यते
सर्वजातिसमाकीर्णं नृपवेश्मसमायुतम् १०
बहुरक्षासमायुक्तं सेनामुखमिति स्मृतम्
ग्रामद्वादश साहस्रैर्दशसाहस्रकैरथ ११
सहस्राष्टकसङ्ग्याभिः कर्तव्यं चोत्तमत्रयम्
सप्तषट्पञ्चसाहस्रैर्मध्यमत्रयमेव हि १२
चतुस्त्रिद्विसहस्रैस्तु कन्यसत्रयमाश्रयेत्
एवं नवविधं प्रोक्तमथक्षुद्राणि चोच्यते १३
सहस्रमर्धमर्धं च क्षुद्रेषु वरमुच्यते
द्विशतं त्वर्धमर्धं च क्षुद्रमध्यममेव च १४
चत्वारिंशदथ त्रिंशद्विंशत् क्षुद्रावरं स्मृतम्
अष्टादशविधन्तेषु यथा शक्तं तु कारयेत् १५
विद्याचारगुणैर्युक्तान् पत्न्यग्नि गुरुपुत्रकान्
दरिद्रां वेदशास्त्रज्ञानाहू या भ्यर्चयेत् क्रमात् १६
विप्रनामादिकं गोत्रैस्ताम्र पत्रतलेऽर्पयेत्
ग्रामबीजां विनिच्छित्य तथा प्रत्यकरेणुना १७
प्रमाणैर्निश्चितं भूमिं दद्यादुदकपूर्वकम्
एवमेव कृते पश्चात् ग्रामविन्यासमारभेत् १८
भूमिं समतलङ्कृत्वा खातकर्षणसंयुतम्
पञ्चसाहस्र दण्डेन कल्पयेदुत्तमस्य तु १९
सहस्रदण्डमानेन मध्यमस्य तु बुद्धिमान्
तदर्धदण्डमानेन कर्तव्यं त्वधमस्य तु २०
वृत्तं वा चतुरश्रं वा पूर्वायाममथापि वा
दक्षिणाय तमेवाथ कल्पयेत् तन्त्रवित्तमः २१

तन्मध्ये नैर्ऋतिभागे दराडमानेन विस्तृतम्
शङ्कुमराडलमास्तीर्य मध्ये शङ्कुं स लक्षराम् २२
खदिरं चन्दनं वापि सालयाज्ञकवृक्षजम्
द्वादशाङ्गुलमुत्सेधं नाहङ्कृत्वा तदर्धतः २३
मूलात् षोडश हीनाग्रं सुदृढमृजुमव्रराम्
शङ्कुप्रमाणाद् द्विगुणं त्रिगुणं मराडलत्रयम् २४
ब्रह्माणं मनसाध्यात्वा शङ्कुराडलमध्यमे
न्यस्त्वाच्छायाग्रपतनं दृष्ट्वा संलक्ष्यसुचिना २५
पूर्वाह्णे वा पराह्णे वा सूत्रं तत्र प्रसारयेत्
एवं पाचीं तु सङ्कल्प्य मत्स्ये नोदीचिकम्बुधः २६
एकाशीति पदन्तत्र सूत्रमानेन कल्पयेत्
तत्रस्थ देवान् सङ्कल्प्य गन्धपुष्पादिभिः क्रमात् २७
ईशानश्चाथ पर्जन्यो जयन्तश्च महेन्द्रकः
आदित्यः सत्य अभ्रंशा वन्तरिक्षश्च पूर्वगाः २८
अग्निः पूषा च वितथोग्रहक्षतयमौ तथा
गन्धर्वो भृंगराजस्तु मृगश्चिव तु दक्षिणे २९
निर्ऋति द्वौ वारिकश्चैव सुग्रीवं पुष्पदन्तकः
वरुणश्चासुरः शोषः पापयक्ष्मा च पश्चिमे ३०
वायुर्नागस्तथा मुख्यो भल्लाटः सोम एव च
ऋगोदध्ययनश्चैव द्वात्रिंशत् बाह्यदेवताः ३१
मरीचिको विवस्वांश्च मित्रश्च पृथिवीतरः
आपश्चैवापवत्सश्च सविता सावित्र एव च ३२
इन्द्र इन्द्र जयश्चैव रुद्रोरुद्र जयस्तथा
। । । । । । । । । । । । । । कल्पयेत् ३३
तत् समंद्वा । । । । । । । । । । । ।
। । । । । । । । तद्वामूक्तपदेषु वै ३४

तदर्धं क्षुद्रविधिना दक्षिणोत्तरमार्गतः
ग्रहारम्भस्य पूर्वे तु देवानामालयं पृथक् ३५
श्रीवत्सन्नाभिवर्तं च पार्श्वयुक्तं तु पद्मकम्
नन्द्यावर्तं च भद्रं च स्वस्तिकं च प्रकीर्णकम् ३६
ग्रामा ग्रहारयोर्न्यासमेवं प्रोक्तं विशेषतः
कुम्भवेदिक सिंहाख्या स्त्रिधासेना निवेशनम् ३७
दण्डकन् त्विति विख्यातं नागरादिप्रकल्पयेत्
वीधयः प्राङ्मुखस्तिस्त्रः सप्तपञ्च उदङ्मुखाः ३८
अष्टद्वारं तु विन्यासं श्रीवत्सं तु प्रगद्यते
ता एव विधयः प्रोक्ता नाभियुक्तं च मध्यमे ३९
पार्श्वयो राजवीथी च नाभिवर्तस्य चोच्यते
अनाभिः पूर्ववत् प्रोक्तं पार्श्वयुक्तमिति स्मृतम् ४०
अष्टद्वारसमायुक्तं प्राङ्मुखं पञ्चवीथिकाः
शेषाणि पूर्ववत् कृत्वा नन्द्यावर्तमुदाहृतम् ४१
द्वारवीथिं यदि प्रोक्ष्य द्रुममध्यमसंस्पृशेत्
भद्रकं नामनामेति स्वस्तिकं च ततः शृणु ४२
तिर्यग्वीथिरयुग्माश्च प्राङ्मुखाश्चतुरत्थ्यया
स्वस्तिकं च इति प्रोक्तं पद्मकं च ततः शृणु ४३
नाभिमङ्गलवीथीभ्यामयुग्माः क्षुद्रविधयः
परिवेष्टिं च तद्वारमेतत् पद्मकमुच्यते ४४
तथा स्वस्तिकवत् कृत्वा कोणमध्ये च द्वारकौ
एतत् तु कर्णिका पद्मं पद्मावर्तमथ शृणु ४५
पद्मवत् प्रोतरत्थ्यान्तं पद्मावर्तमिति स्मृतम्
स्वमध्ये नाभियुक्तं तु तद्युक्ता चान्तवीथिका ४६
प्रकीर्णकमिति प्रोक्तं कुम्भकं च ततः शृणु
आवृतं चोक्तरत्थ्या च कुम्भकं चेति कथ्यते ४७

पञ्च । । । । । । । । । । । । । । । ।
। । । । । । । । । कल्पयेदुत्तरस्य ४८
सहस्रदण्डमानेन मध्यमस्य तु बुद्धिमान्
तदर्धदण्डमानेन कर्तव्यं त्वधमस्य तु ४९
यथेष्टायतरत्थ्येक द्वारद्वयसमन्वितम्
तद्दण्डकमिति प्रोक्तमेतत् ग्रामादिनामतः ५०
नाभिप्रोक्तं दण्डछेदं सूत्रछेदं न कारयेत्
सगर्भा सर्व ऋृद्धिः स्यादगर्भा सर्वनाशिनी ५१
तस्मादादौ प्रकर्तव्या सगर्भा पृथिवी ततः
शतद्वयपलैस्ताम्रैस्तदर्धैर्वा तदर्धकैः ५२
पलैः फेला प्रकर्तव्या हस्तमात्रप्रमाणतः
नवकोष्ठसमायुक्तं सपिधाना समादृढा ५३
रत्नबीज सम्रध्या तु लोहकन्दानि चैव हि
फेलामध्ये यथा न्यस्त्वा सुमुहूर्ते तु विन्यसेत् ५४
ग्राममध्ये सभास्थाने द्वारदक्षिणपार्श्वके
देवालये तथा रामे तटाकस्य तु तीरके ५५
एवं गर्भं सुविन्यस्य ग्रहश्रेणी समारभेत्
त्रिदण्डं पञ्चदण्डं वा सप्तदण्डाधमत्रयम् ५६
नवैकादशदशकं मध्यमत्रितयं विदुः
दशपञ्चाधिकं सप्तदशचैकोनविंशतिः ५७
उत्तम त्रितयद्वत्र एषामेकतमं बुधः
विस्ताराभद्विगुणाधिक्यं दण्डैकमधिकं यथा ५८
विस्तारादर्द्धमायामं द्विगुणं त्रिगुणायतम्
पुरुषस्य प्रधानं हि वासं दक्षिणमुच्यते ५९
उत्तरे रङ्गमेवं स्यात् स्त्रीणां चेद्विपरीतकम्
ईशे महासनं प्रोक्तं मांहेन्द्रे द्वारवेशनम् ६०

नैर्ऋते कल्पयेद् धान्यं पर्जन्ये जलनिर्गमम्
विधेरभिमुखद्वारं ग्रहाणां तद्विधीयते ६१
सप्तविंशति दण्डं वा महावीथि प्रमाणतः
तत् समन्द्वारमाख्यातं तद्वास्तूक्त पदेषु वै ६२
तदर्धं क्षुद्र विधिना दक्षिणोत्तरमार्गतः
ग्रहारम्भस्य पूर्वे तु देवानामालयं पृथक् ६३
ईशाने चेश्वर स्थानं सोमेशानान्तरेऽथवा
तथैन्द्राशान योर्मध्ये कल्पयेत् तु विचक्षणः ६४
सहस्रभूसुरादूर्ध्वे ब्रह्मेशो वायुदेशके
पञ्चमूर्ति विधानेन स्थापयेद् वै जनार्दनम् ६५
ऐन्द्रे तु भास्करस्थानं महामोट्यास्तु पावके
दुर्गस्थानं तु याम्यायां महेशि तुश्च नैर्ऋते ६६
विष्णु स्थानं तु वारुण्यां सुब्रह्मण्यं तु वायवे
विनायक स मातृणां स्थानं सम्यक् तथोत्तरे ६७
प्राकार परिखाबाह्ये मातृणां स्थानमिष्यते
तासां वै चोत्तरद्वारं ग्रामादीनां हिताय वै ६८
सूर्यस्य पश्चिमद्वारमन्येषां पूर्वतोमुखम्
तटाकस्य तु तीरे तु ज्येष्ठा देवीं प्रकल्पयेत् ६९
बाह्ये चाभ्यन्तरेवापि देवागारं पृथक् पृथक्
शिवस्य वास्तु बाह्ये तु प्रासादं प्रोक्तदेशके ७०
सन्धिमर्मेषु वीथ्यग्रे देवानामालयन्न हि
ग्रामायामस्य पञ्चांशं परितः कल्पयेत् पृथक् ७१
पैशाचमिति विख्यातं तत्र देवालयं स्मृतम्
शिवस्याराधनं नित्यं भुक्तिमुक्तिप्रदायकम् ७२
अन्येषां पूजनन्नित्यं ग्राम ऋद्धिकरं भवेत्
देवस्थानं विनायत्र एककालं न वासयेत् ७३

नित्यपूजाविहीने तु क्रुद्धं पीडां करोति हि
तत् पूजकास्तु तत् पार्श्वे तस्यालयसमीपतः ७४
आवासं सम्प्रकल्प्यैव न्यसेयुर्निरुपद्रवाः
ग्रामादीनां तु परितः शूद्राणां तु निवासकम् ७५
वारिजां पश्चिमे भागे अथवा दक्षिणे दिशि
प्राच्यां चैव कुलालानां पश्चिमे वा विशेषतः ७६
पश्चिमे मांसवृत्तीनां वायव्ये मत्स्यजीविनाम्
दक्षिणे तैल वृत्तीनामुत्तरे पुष्पजीविनाम् ७७
आग्नेय्यां नापितानां तु नैर्ऋत्यान्तं तु वायकान्
परितः परिघातन्तत् बाह्ये चाप्यन्त्यजनान् पृथक् ७८
पूर्वे वा पश्चिमे वापि कर्मकारान् प्रकल्पयेत्
कारुकाणान्ततो बाह्ये चण्डालानान्ततो बहिः ७९
ग्रामात् क्रोशमतिक्रम्य नगराणान्तदर्धतः
ग्रामस्यैशान दिक्भागे श्मशानं तु विधीयते ८०
नद्यास्तीरेऽथवा सोमे कञ्चिद्दूरं समाश्रितम्
चतुर्दिक्षु तटाकं च कोणे वापि प्रकल्पयेत् ८१
एवं समासतः प्रोक्तं ग्रामादीनां तु लक्षणम्
शृणु त्वमेव मनसा विभवस्य तु निश्चयम् ८२
इति ग्रामादिलक्षणपटलस्त्रयोविंशतितमः २३

## अथ विभवनिश्चय पटलः

अथातः सम्प्रवक्ष्यामि विभवस्य विनिश्चयम्
साम्रतं हारकं चैव द्विविधं मार्गमुच्यते १
शिवं साम्रमिति प्रोक्तमन्येषां हारकं स्मृतम्
अशक्तः साम्रतं कर्तुं हारकेण समारभेत् २
समाप्ति पूर्वं यत् कर्मसाम्रतं ह्यभिधीयते

पश्चात् कर्मसमाप्तिः स्यात् हारकं मार्गमुच्यते ३
नवधा कल्पयेद् विद्वान् यज्ञोपस्करमादरात्
आदिशैवांस्तपोयुक्तां विधिज्ञान् मन्त्रसंयुतान् ४
शिवव्रतधरान्मुख्यान् शैववेद विशारदान्
यस्मिन् सञ्जायते भक्तिस्तस्मिन्नाहूयशास्त्रतः ५
सर्वशास्त्राश्रितं शास्त्रं सर्वज्ञानेषु दुर्ल्लभम्
सर्वपूजा क्रियायुक्तं तन्त्रं सर्वार्थसाधनम् ६
इदं शास्त्रं परं दिव्यं तमसामिव भास्करः
तस्माच्छैवमिदं श्रेष्ठं रत्नानामिव भास्करः ७
शैवरत्नमतं दिव्यं शैवशास्त्रार्थ पारगाः
जङ्गमा इवमूर्तिस्थाः शिवस्येव विशेषतः ८
नमस्कृत्वा यथा न्यायं पप्रच्छेत् सविधानतः
अनुज्ञाप्य स्वदेशस्थान् भक्तियुक्तान् दृढवृतान् ९
यूयं दासाः शिवे मुख्या युष्माकमिह मुख्यतः
भक्तस्य मम दासस्य युष्मद् भक्तिपरस्य च १०
अनुमान्यो भवद्भिश्च पूजा सम्प्रतिग्रह्यताम्
अहं दीक्षां करीष्यामि येषु यज्ञपरं परम् ११
समाप्यतां च युष्माभिर्दीर्घ सत्रं विशिष्यते
अरिष्टानां च शान्त्यर्थं यूयमेव प्रगृह्यताम् १२
तत् पुनर्महदत्यन्तं युष्माकं प्रक्षिपाम्यहम्
शतमष्टोत्तरं वापि आदिशैवान् प्रगृह्य च १३
एत देवं च कर्तव्यं मयायज्ञसमाप्तिकम्
युष्मच्छासनमार्गेण प्रयताम विशेषतः १४
हविषामध्यमे तावदर्चनाभोगमेव तु
गन्धपुष्पार्थमेतावद् धूपस्य च तथैव च १५
स्नपनार्थं तथा चैव उत्सवार्थं तथैव च

एतावत् परिचाराणामुद्धूतिकसमन्वितम् १६
प्रायच्छित्तार्थमेतावत् कृत्तिकादीपकाय वै
आश्रायणार्थमेतावत् प्रभूतहविरत्थकम् १७
न्यूनातिरिक्त वस्त्वेश्च सर्वेषाङ्कुरवे तथा
तन्त्र संरक्षकस्यैव एतावल्लेखकस्य च १८
श्रोतृणां चैव वक्तुश्च दैवज्ञस्य तथैव हि
शुश्रूषकाणामेतावत् भोगमेतावदेव तु १९
शैवातिथ्यर्थमेतावत् भक्तानामपि चैव हि
वाद्यकानां हि वै तावत् तथा वै तक्षकस्य तु २०
यथार्हकं तथा स्मृत्वा स्मृत्वा चैव तु कारयेत्
इति सञ्चिन्त्य सर्वस्वं परिकल्प्य यथा क्रमम् २१
भूमिभागेन वै ह्येषां भृत्त्यर्थं परिकल्पयेत्
यद्यन्तरेऽभि ह्रियते तत् समाप्तिफलं भवेत् २२
अक्षीणं कल्पयेत् तेषां यथा शुद्धां न भोजनम्
अक्लेशवस्त्रा जीवन्ति नित्यं गन्धादिवासिताः २३
ग्रहस्थान् स्थापयेद् धीमान् सर्वोपकरणानि तु
सुपुष्टभोगङ्कृत्वा तु सुस्थिरं शासनान्वितम् २४
कृत वा नल्पभोगं यः क्लेशेन परिचारकान्
सतमेव हि देवेशः क्लेशयत्य चलात्मकः २५
न तिष्ठेद्यदि वा तिष्ठेत् नतमाढ्यं प्रकल्पयेत्
स्वयत्नतः फलंदातु रदा तुश्चाप्यफं व्रजेत् २६
सहैकविंशत् पूर्वैस्तु स्वकुलैश्च तथानुजैः
वित्तशाठ्येन यः कुर्यात् धर्मशाठ्येन वा नरः २७
न तत्फलमवाप्नोति प्रलोभा क्रान्तमानसः
तस्मात् त्रिभागं वित्तस्य जीवनार्थमथात्मनः २८
भागद्वयं च धर्मार्थमनित्यं जीवितं यतः

साधयित्वा च तत् पूर्णन्ताम्रपात्र तलेर्पितम्  २६
निश्चयं विभवस्योक्तं कर्षणं शृणु सुव्रत
इति विभवनिश्चयपटलश्चतुर्विं शतितमः  २४

अथ कर्षण पटलः
अथातः सम्प्रवक्ष्यामि प्रासादार्थं तु कर्षणम्
सुमुहूर्ते सुलग्ने च देशिकः शिल्पिभिः सह  १
उत्तरायणकाले तु कर्षणादीन् समारभेत्
शिशिरश्च वसन्तश्च ग्रीष्म प्रावृट् तथैव च  २
शरच्चैव तु हेमन्तो ऋतवः षट्प्रकीर्तिताः
तपस्तपस्य शिशिरस्तौ मासौमाखफाल्गुनौ  ३
वसन्तश्चैत्र वैशाखौ मासौ तौमधुमाधवौ
ज्येष्ठाषाढाव्रतु ग्रीस्मोमासौ शुक्लशुचिस्मितौ  ४
प्रावृट्च्छ्रावण भाद्राख्यौ नभोनभस्य संज्ञितौ
मासौ शरदिषोर्जौ तु तावाश्वयुजकार्तिकौ  ५
सहः सहस्यौ हेमन्तौ मार्गपुष्यौ तु तौ स्मृतौ
दक्षिणं शर्वरी ज्ञेया देवानामुत्तरोत्तमौ  ६
दिनौ तदुत्तरायणे दक्षिणे त्वरिते मतम्
मार्गशीर्षं तथा षाढं प्रोष्ठं माखं विवर्जयेत्  ७
सर्वे मासाग्रहीतव्याः शिवेन परिभाषिताः
तत्रापि सर्वमासेषु वसन्तश्रेष्ठ उच्यते  ८
श्रेष्ठं मध्यममेवोक्तं अधमं दक्षिणायनम्
नक्षत्रपक्षवाराश्च पूर्वमेव सुभाषिताः  ९
कृत्तिका वह्निदैवत्यं रोहिणी च प्रजापतिः
मृगशीर्षः सोमदेवत्यमार्द्रायां तु शिवं स्मृतम्  १०
पुनर्वसोस्त्वदित्याश्च तिष्यस्य च बृहस्पतिः

आश्लेषस्य हिनागः स्यान्मखस्य पितरस्तथा ११
भोगो हि फाल्गुने चैव ह्यर्यमोत्तर फाल्गुनः
हस्तं सावित्रमित्युक्तं सर्वकार्येषु पूजितम् १२
त्वष्टा चैव तु चित्ताया स्वातेर्वै वायुदैवतम्
इन्द्राग्नी च विशाख्यस्य त्वनूराधस्य मिश्रकम् १३
ज्योष्ठायाश्चैव चेन्द्रस्तु मूलस्य निर्ऋतिस्तथा
पूर्वाषाढाम्भ इत्युक्ता स्थपनेष्वहितं त्विदम् १४
विश्वे देवोत्तराषाढं ब्रह्मात्माभिजितस्तथा
श्रवणस्य हरिश्चैव श्रविष्ठावसवस्तथा १५
वरुणः शतभिषजस्त्वजः प्रोष्ठपदस्य तु
उत्तरप्रोष्ठ पादस्य त्वहिर्बुद्ध्निश्च कीर्तितम् १६
पूषा चैव तु रेवत्याश्चाश्विन्याश्वयुजस्तथा
यमश्चैव भरण्याश्च दिनानामधिदैवताः १७
तिष्यश्रवणहस्तार्द्रामैत्रादित्यमखास्तथा
प्राजापत्याश्वयुक् स्वाति सौम्यपौष्णयत्रिरुत्तराः १८
द्वितीया च तृतीया च पञ्चमी षष्ठ सप्तमी
दशम्येकादशी चैव प्रतिपच्च त्रयोदशी १९
पौर्णमासी च तिथयः शुक्लपक्षे विशेषतः
राशयश्चरवर्ज्यास्तु शेषाग्राह्याधनुर्विना २०
बुधः शुक्रेन्दु जीवश्च वाराश्रेष्ठास्तु नेतराः
द्रेक्काणांशकहोराश्च एकादर्शनमिष्यते २१
त्यक्त्वा सोमोदयं तत्र चान्येषामुदयं शुभम्
व्याधि पीडां करोत्यत्र क्रूरैर्जुष्टदिनं त्विह २२
सोमसूर्यौ च भुञ्जाश्च त्रिषष्ठाय स्थिताः शुभाः
त एव लग्नगाः कुर्याव्याधिशोक भयानि तु २३
अष्टमस्थाग्रहाः सर्वे कर्तुः कुर्वन्ति दुस्थितम्

एकादश गताः सर्वे क्षेमारोग्यसमृद्धिदाः २४
भयकृत् भार्गवः प्रोक्तः सट्सप्तदशम स्थितः
नवद्विसप्त पञ्चस्थो गुरुः शोभनकृत् तथा २५
सोमोति सौख्यकृत् प्रोक्तो द्वितीये पञ्चमेऽपि च
रविवारः शुभो युक्तः पौष्णहस्तत्रिरुत्तरैः २६
सौरिवारः शुभः प्रोक्तस्वातीरोहिणी योगतः
बुधयुक्ता द्वितीया च गुरुः षष्ठिसमायुतः २७
इन्दुरेकादशी युक्तः प्राणपीडां करोति हि
पौष्णस्तु सप्तमीयुक्त प्रजान्दहति वह्निवत् २८
अशुभः सोमवारस्तु उत्तराषाढसंयुतः
विष्ठिस्त्रणान्त नक्षत्रखण्डांश्च गुलिकांस्त्यजेत् २९
दुर्दिने च दिशादाहे भूकम्पे चण्डमारुते
अशनि ध्वनिसंयुक्त दिवसे चाशुभं स्मृतम् ३०
संक्रान्तौ ग्रहणे चैव अयने विषुवे तथा
उत्सवे शान्तिकाले वा षडशीतिमुखेऽपि च ३१
यदि मोहेन कुर्याच्चेत् कर्तुर्वै वस्तुनाशनम्
एवं परीक्ष्य बध्नियात् यदीश्चेच्छ्रियमात्मनः ३२
पर्वतेषु च रम्येषु ग्रामे च नगरेऽथवा
इन्द्रेशाने त्वथेशाने सोमेशानेऽथवा पुनः ३३
यस्मिं देशे मनोज्ञे तु तत्र प्रासादमारभेत्
अथभूमिं परिक्ष्यादौ कर्षणन्तदनन्तरम् ३४
श्वेतारक्ता तथा पीता कृष्णाभू ब्राह्मणादयः
मोक्षदा ब्राह्मणी भूमिर्जयदाक्षत्रिया तथा ३५
वैश्या भूमिस्तु धनदावृषला पुत्रदायिका
ऊषरां क्रिमिभिर्जुष्टां वल्मीकायां विवर्जयेत् ३६
जानुमात्रं खनेद्भूमिं तन्मृदापूर्यचावटम्

उत्तमात्वधिकाभूमिस्तत् समं चेत्तु मध्यमा ३७
न्यूनेवर्ज्या प्रयत्नेन तत्रस्थां देवतां न्यसेत्
भूतप्रेत पिशाचानां बलिन्दत्वा विशेषतः ३८
एतत् तु देवदेवस्य स्थानं कर्तुं महीतले
बलिं पूजां च संग्राह्य शीघ्रं गच्छेद् यथा सुखम् ३९
एवमुक्त्वा ततो देवानुद्वास्याथ प्रकर्षणम्
पिङ्गलौ पालितौ रक्तौ वृषौ वै नाङ्गहीनकौ ४०
अन्यवर्णं न कर्तव्यं न बालौ न च वृत्तकौ
हेमशृङ्गखुरौ न्यस्त्वा वृषमन्त्रेण पूजयेत् ४१
युगं च सहलं बध्वा याज्ञकैर्वृक्षसम्भवैः
शमिबिल्वं च खदिरो पनसस्तम्बकस्तथा ४२
तक्षकेन तथा कृत्वा यन्त्रयित्वा सलोहकम्
हलं युगेन सम्बध्वा गोचर्मकृतरज्जुना ४३
आचार्यस्त्वादिशैवस्तु सकलीकृत विग्रहः
पुण्याहं वाचयित्वा तु सम्प्रोक्ष्य पञ्चगव्यकैः ४४
कर्षयेच्छिवमन्त्रेण प्रागुदक् प्रणवां महीम्
आचार्यं पूजयित्वा तु दद्यात् तु सहलौ वृषौ ४५
तिलसर्षपमुद्गांश्च शालीबीजांश्च वापयेत्
पञ्चरात्र्यां त्वङ्कुरिता ग्राह्यान्या तु विवर्जिता ४६
तेषु पक्षेषु कालेषु गोगणानां निवेदयेत्
एवं परीक्ष्य वसुधां संग्राह्यो देशिकोत्तमः ४७
विसृज्यमेष वृषभं गते सूर्ये दिने शुभे
शङ्कुच्छाया गृहीतव्या मण्डलन्तत्र कारयेत् ४८
कृत्वा समतलं तत्र गोमयेनानुलिप्य च
द्वादशाङ्गुलमायामं स्वायामन्नाहमेव तु ४९
अष्टांशैकं परित्यज्य सप्तांशमूर्ध्वनाहकम्

शमीबिल्व पलाशैर्वा याज्ञिकैर्वा विशेषतः ५०
शंकुन्न्यस्त्वा तु तन्मध्ये भ्रामयेन्मण्डलत्रयम्
शंङ्कुच्छायां च संलक्ष्य पूर्वाह्णे वा पराह्णके ५१
तन्मध्ये पातयेत् प्राचीं सूत्रमार्गेण देशिकः
प्राचीसूत्रप्रमाणेन मत्स्यन्तत्र प्रकल्प्य च ५२
भवेत् सूत्रमुदक् चैवं संकल्प्य चतुरश्रकम्
प्रासादमण्डपानां च प्राकाराणां च विस्तृतः ५३
सङ्ग्राह्य सुविशेषेण पुण्याहं वाचयेत् बुधः
मूलस्थानं गृहीत्वा तु बालस्थानं तु कारयेत् ५४
कर्षणाया विधिः प्रोक्तो बालस्थान विधिं शृणु
इति कर्षणविधिपटलः पञ्चविंशतितमः २५

## अथ तरुणालयलक्षण पटलः

अथातः सम्प्रवक्ष्यामि तरुणालयलक्षणम्
आद्यं द्वितीयमेवं तु द्विविधं तरुणालयम् १
मूलस्थानस्य यत् पूर्वन्तदाद्यन्तरुणालयम्
पूनः प्रासादकरणे भिन्ने च्छिन्नेन वीकृते २
यत् कृतन्तत् द्वितीयाख्यन्तरुणालयमुत्तमम्
अन्यानि सर्वकर्माणि समानमिति भाषितम् ३
मूलस्थानं विनिश्चित्य बालस्थानं तु कारयेत्
बाललिङ्गं प्रतिष्ठाप्य पश्चान्मूलं प्रतिष्ठयेत् ४
बालस्थानं विनापूर्वं मूलस्थानं न कारयेत्
बालस्थानं विना यत्र पुत्रपौत्र विनाशनम् ५
तस्मात् सर्वप्रयत्नेन बालस्थानं तु कारयेत्
यस्मिन् काले यदा क्षेत्रे कृते भूमिपरिग्रहे ६
तस्याग्रे चोत्तरेवापि अग्रे वामे प्रदक्षिणे

ईशाने वापि शेषेण कारयेत् तरुणालयम् ७
पञ्चसप्त नवाहे वा रात्रौ कृत्वाङ्कुरार्पणम्
लोहजं शैलजं लिङ्गं दारुजं मृन्मयं तु वा ८
कारयेत् तु विशेषेण लक्षणोक्तेन देशिकः
शमीबिल्वमधूकैश्च अश्वत्थोदुम्बरैस्तहा ९
बाललिङ्गं प्रकर्तव्यं मृन्मयं चेत् सुपक्वकम्
द्वादशाङ्गुलमुत्सेधमुत्तमं परिकीर्तितम् १०
सप्ताङ्गुलमधोत्सेधमधमामधमेव हि
तस्मात् द्व्यङ्गुल वृध्या तु बाललिङ्गा नवस्मृताः ११
स्वधामकुण्डली भूतं सर्ववृत्तमिहोच्यते
छत्राकारं शिरः कुर्याल्लक्षणोद्धारणं विना १२
स्वयोनिं कारयेत् पीठमथवा चेष्टकामयम्
सप्तपञ्च त्रिहस्तं वा कर्तव्यन्तरुणालयम् १३
एवमाद्यं समाख्यातं द्वितीये तरुणालये
पूजाभागसमायामं त्रिपादं वार्द्धमेव वा १४
आयाम सदृशन्नाहं लक्षणो धारणं विना
नतौ विष्णु विरिञ्चांशौ तश्चिरोन्मूललिङ्गवत् १५
लिङ्गमेवं समापाद्य मूलगर्भार्धमानतः
त्रियंशं वा चतुर्थांशं प्रोक्तं बालग्रहं त्विह १६
बालगेहान्तरे पीठं बाललिङ्गसमोन्नतम्
उच्छ्रायसमविस्तारं सावटं सप्रणालकम् १७
लिङ्गायामं त्रिधा कृत्वा भागं पीठे निवेशयेत्
वृत्तं वा चतुरश्रं वा षोडशांशेन योजितम् १८
रत्नन्यासं न कर्तव्यं पादशैलानि कानि च
प्रतिलिङ्गं न कर्तव्यं सूत्रं चैव तथा भवेत् १९
तद्विमानाग्र भागे तु मण्डपं सुविशेषतः

दशाष्ट नवहस्तं वा सप्तहस्तमथापि वा २०
षोडशस्तम्भसंयुक्तं सर्वालङ्कारसंयुतम्
तन्मध्ये वेदिकां कुर्यात् नवभागैक भागतः २१
हस्तमात्रसमुत्सेधां दर्पणोदरवत् समाम्
गोमयालेपनङ्कृत्वा ब्राह्मणान् भोजयेत् ततः २२
पुण्याहन्तत्र कर्तव्यं वास्तुहोमं विशेषतः
तद्धोमं विधिवत् कृत्वा पर्यग्निकरणं तथा २३
वस्त्रैः सशालिभिर्युक्तं सदर्भैः पुष्पसंयुतम्
पीठस्य मध्यमे न्यस्त्वा कण्ठमात्रे जले तथा २४
उषितं लिङ्गमुत्थाप्य स्नानवेद्युपरिन्यसेत्
सौवर्णं राजतं वापि क्षौमङ्कार्पासमेव वा २५
कौतुकं हृदये नैव कृत्वा घृतशिरोऽर्पणम्
शयने शाययेल्लिङ्गं प्राक् शिरस्कं सयोनिकम् २६
गन्धपुष्पाक्षतैश्चैव सम्पूज्य शयनोपरि
वस्त्रेणाच्छादनङ्कृत्वा हृदिना पुष्पदर्भकैः २७
सर्वलक्षणसंयुक्तं शयनं सम्प्रकल्पयेत्
त्रिरात्रमेकरात्रं वा जले चैवाधिवास्य च २८
वस्त्रेण वेष्टयित्वा तु कुम्भं सूत्रेण वेष्टितम्
पञ्चरत्नसमायुक्तं वस्त्रयुग्मेन वेष्टितम् २९
व्योमवद् व्यापिनं देवं ध्यात्वारूपं सदाशिवम्
विन्यसेत् कुम्भमध्ये तु शिवमन्त्रं समुच्चरन् ३०
सम्पूज्यगन्धपुष्पाद्यैर्हृदयेन तु मन्त्रतः
तस्य वामे तु वर्धन्यां गौरीं विन्यस्य मन्त्रतः ३१
हैमवस्त्रसमायुक्तां वर्धनीं पूर्ववद्यजेत्
मूललिङ्गे तु देवेशं द्वितीयश्चेत् समावहेत् ३२
विज्ञाप्य देवदेवेशं क्षणकालं विचक्षणः

एकाब्दात् द्वादशाब्दान्तं बालस्थाने स्थिरो भव ३३
एत योरब्दयोर्मध्ये कुर्यान्मूलप्रवेशनम्
विज्ञापयेत् द्वितीये तु चाद्ये विज्ञापनं विना ३४
विद्येशोमा शिवाख्येषु कलशेषु पृथक् पृथक्
तत्तद्रूपमनुस्मृत्य स्वस्वमन्त्रेण विन्यसेत् ३५
सकूर्चान् वस्त्रसंयुक्तान् सर्वलक्षणसंयुतान्
गन्धपुष्पादिना पूज्य हृदयेन विचक्षणः ३६
दिशा स्वध्ययनं कुर्यादृग्यजुः सामाथर्वकैः
नवपञ्च तथा त्रीणि एकहोममथापि वा ३७
कृत्वाग्निमुखसंस्कारं पूर्वोक्तविधिना ततः
खदिरं वटबिल्वौ च प्लक्षाश्वत्थावुदुम्बरम् ३८
शमीवैकं ततं चैव समित् पूर्वादितः क्रमात्
पलाशस्तु प्रधानस्य होमयेद्धृदयेन तु ३९
औदुम्बरसमिद्भिर्वा सर्वेषां चैव कारयेत्
समिदाज्यान्नकैर्मन्त्रैर्होमङ्कृत्वा पृथक् पृथक् ४०
समिधं हृदयेनैव मूले नैव घृतं हुनेत्
शिवगायत्रि मन्त्रेण चरुं हुत्वा विशेषतः ४१
स्पर्शा हुतिं शिवाङ्गेन हुत्वाङ्गानि च संस्पृशेत्
प्रभाते विमले होमङ्कृत्वा पूर्णां शिवेन तु ४२
आचार्यं पूजयित्वा तु मूर्तिपानथ पूजयेत्
दैवज्ञं पूजयित्वा तु अध्ये तृन् परिचारकान् ४३
उत्थाप्यशयनाल्लिङ्गन्तरुणालय मध्यमे
संस्थाप्य लिङ्गं सुस्निग्धं पीठस्या वटमध्यमे ४४

कुम्भस्थ देवदेवेशं शिवमन्त्रेण विन्यसेत्
शिवाङ्गानि न्यसेत् पश्चात् पिण्डिकायां मनोन्मनीम् ४५

अष्टविद्येश्वरांस्तत्र पीठे पूर्वादिषु न्यसेत्
विद्येशोमा शिवाख्यैस्तु कुम्भैरस्त्राभिषेचनम् ४६
अर्चनोक्तमथाभ्यर्च्य नैवेद्यं दापयेत् क्रमात्
द्वारादिपीठपर्यन्तं विन्यसेत् तु यथा विधि ४७
स्नपनन्तत्र कुर्वीत यथा शक्त्या विशेषतः
उत्सवं तु यथा शक्ति द्वितीये तरुणालये ४८
बल्यन्तः पूजयेन्नित्यमुत्सवन्न समाचरेत्
बालस्थान विधिः प्रोक्ता शृणुष्वालयवास्तुकम् ४९
इति तरुणालयलक्षण पटलः षड्विंशतितमः २६

अथ प्रासादवास्तु लक्षणपटलः

अथातः सम्प्रवक्ष्यामि प्रासादवास्तु लक्षणम्
मूलस्थानं तु संशोध्य वास्तु रूपं प्रकल्पयेत् १
पुण्याहं वाचयित्वा तु प्रोक्षयित्वा शिवाम्भसा
पुष्पादिभिरथाभ्यर्च्य वास्तु देवान् स्वनामकैः २
यदङ्गं संस्पृशेत् कर्ता पूजान्ते तन्निरीक्षयेत्
तत्रैव वास्तु देहेऽपि ब्रूयाच्छल्यं यथार्थतः ३
शिरस्पर्शात् तु तत्रैव अस्थिशल्यङ्करद्वयात्
हस्तमात्रे मुखस्पर्शात् काष्ठपृष्ठे गलेद्ध्रुवम् ४
कण्ठस्पर्शे गलेत्वस्थि त्रिकरे शृंखलं विदुः
त्रिभिर्हस्तैरुरस्पर्शात् भवेच्छल्यं तु शृंखलम् ५
करस्पर्शात् करान्ते तु खट्गापातं समादिशेत्
बाहुसंस्पर्शनात् कर्तुरङ्गारस्तु त्रिहस्ततः ६
अश्वपादं विनिर्दिष्टङ्गुल्फे पदप्रमाणतः
कणकं पादसंस्पर्शात् सवितस्तिप्रमाणतः ७
कनिष्ठाङ्गुष्ठयोः स्पर्शात् कराद्धेकां शमुच्यते

लोहशल्यं कटिस्पर्शात् तत् करद्वयमानतः ८
जानुसंस्पर्शनाद्धस्तेनापितोपस्करं तथा
भुमिष्ठं शल्यमुद्धास्य तत् प्रदेशं खनेत् ततः ९
यावत् प्रासादविस्तारं तत् समं वा तदर्द्धकम्
अर्धाधिकमथाध्यर्धं खात्वा प्रासादमानतः १०
अवटस्य चतुर्थां शन्त्र्यंशं वा वालुकैः समम्
अश्वेभपादमुसलैर्मुद्गरैस्तु घनं कृतम् ११
समं कृत्वा ततः पश्चात् प्रोक्षयित्वा शिवास्त्रतः
पञ्चगव्येन संसिच्य पवमानमुदीरयन् १२
वास्तु विन्यासमार्गं तु दशसूत्रेण देशिकः
एकाशीति पदं वास्तु सर्वसम्पत्करन्नृणाम् १३
असुराणां हितार्थं तु शुक्रः कृत्वा महातपः
महातपसिसम्भूतो भूताकारोमहाबलः १४
अप्रयुक्तस्ततो भूतो देवैर्युद्धं प्रवर्तते
नहतेस्त्रादिभिर्ज्ञात्वा देवैः सुनिहितः कृतम् १५
भूम्यामथोमुखस्तत्र । । । । । संस्थिताः
वंशौ द्वौ तत्र विज्ञेयौ चतुष्कोणेषु संस्थितौ १६
पार्श्ववं शोर्ध्वपाशाश्च त्वष्टौ चैव प्रकीर्तिताः
पूत्वोत्तरमुखारज्जुरूर्ध्वं वंशमिति स्मृतम् १७
शिरोमर्माणि तान्याहुः कोणपार्श्वे तथाष्टसु
सूत्राणीह सिराज्ञेया तत्सन्धौ सन्धिरुच्यते १८
पदे चैक तु षड्भागे तत् तत् षट्कस्तु चोच्यते
पदे चतुर्थभागं तु तच्चतुष्कमितिरीतम् १९
रज्वग्रसंस्थितं यत् तत् केवलं मर्म उच्यते
वास्तु मध्ये भवेत् पद्मं पदमेकाष्टभाजितम् २०
कोणात् त्रिशूलं स्यात् पादं पादार्धं करसम्पुटम्

एषां तु पीडने दोषा बहवः परिकीर्तिताः २१
सिराश्च सीरं मर्माणि नश्यन्ति स्थान वासिनः
मित्रनाशं तु सन्धौ तु षट्के वै रंसमन्ततः २२
चतुष्के वाहनक्षयं मरणं मर्मसु क्रमात्
पद्मस्थाने विनाशं तु त्रिशूले गर्भनाशनम् २३
गोधनस्य विनाशं स्यात् करसम्पुटपीडने
वास्तु देवां यथा स्थाप्य ईशानादी न शेषतः २४
ईशानश्चाथ पर्जन्यो जयन्तोऽथ महेन्द्रकः
आदित्यः सत्यकं शावन्तरिक्षश्च पूर्वगाः २५
अग्निः पूषा च वितथो ग्रहक्षतयमौ तथा
गन्धर्वो भृङ्गराजश्च मृगश्चैव तु दक्षिणे २६
निर्ऋतिर्दौवारिकश्चैव सुग्रीवः पुष्पदन्तकः
वारुणो रोगशोषौ च पापयक्ष्मा च पश्चिमे २७
वायुर्नागस्तथा मुख्यो भल्लाटः सोम एव च
ऋगोदितिर्दिदिश्चैव द्वात्रिंशत् बाह्यदेवताः २८
एकमेकं पदं भुक्त्वा श्मशानाद्याः सुसंस्थिताः
ब्रह्मा नवपदान् भुंक्ते वास्तु मध्ये विशेषतः २९
समरीकस्तथैन्द्रे तु विवस्वांश्चैव दक्षिणे
मित्रश्च पश्चिमे भागे ह्युत्तरे पृथिवीधरः ३०
ब्रह्मणश्च चतुर्दिक्षु स्थिताः षट्पदभोगिनः
आपश्चैवापवत्सश्च ऐशान्यां दिशिसंस्थितौ ३१
शुनासीरश्च सावित्र आग्नेय्यां दिशिसंस्थितौ
इंद्र इंद्र जयश्चैव नैर्ऋत्यां दिसिसंस्थितौ ३२
रुद्र रुद्र जयौवायौ चतुष्कोणे प्रकीर्तिताः
एते द्विपदभोक्तारो द्व्यर्धमेव पदस्मृतः ३३
चरकी च वितारी च पूतनापापराक्षसी

ईशानादिषु कोणेषु बाह्यस्थाः पदवर्जिताः ३४
एवं विन्यस्य पूर्वे तु वास्तुदेहं प्रकल्पयेत्
यत् किञ्चिद्वास्तु विन्यासं तत् सर्वं वास्तु रूपकम् ३५
ईशानेकं तु विन्यस्त्वा वापौ नैर्ऋृतगोचरे
अग्निवाय्वोश्च दिक्भागे जानुकूर्परसंस्थितौ ३६
लिङ्गमिन्द्र पदेन्यस्त्वा पादौ नैर्ऋृति विन्यसेत्
मरीचिश्चोदरस्थाने स्तनौ विन्यस्य बुद्धिमान् ३७
विवस्वति च मित्रे च विन्यसे अकुक्षिपार्श्वके
ऊरुहस्त तलौ चैव साविते स्थापयेत् ततः ३८
ऊरुप्रकोष्ठ मध्ये च पादौ सवितरि न्यसेत्
रुद्ररुद्रजयौ चैव विन्यसेत् पूर्ववच्छुभम् ३९
महेन्द्राद्यन्तरिक्षान्ता बाहुमध्ये स्थिता स्मृताः
सुजानुकूर्परे चैव ह्यग्नौ विन्यस्य बुद्धिमान् ४०
पूषादिमृगपर्यन्तञ्जंघां च विनिवेशयेत्
दौवारिपापयक्ष्मान्ते चान्यजंघा विनिश्चिताः ४१
वायौ कूर्परजानूद्यं ऋृगान्तं बाहु संस्थितम्
शेते त्वधोमुखो वास्तु देवः प्राच्यभुवं प्रति ४२
उग्रः सुभीषणो यस्मात् तस्मात् पूज्यं क्रियार्थिभिः
पुण्याहं वाचयित्वा तु प्रोक्षयेत् पञ्चगव्यकैः ४३
गन्धपुष्पादिभिर्धूपैर्वास्तु देवान् प्रपूजयेत्
ईशानं पूजयेत् पूर्वं घृतेना क्षतमिश्रितम् ४४
पर्जन्याय विशेषेण दद्यान्निलोत्पलादिकम्
जयन्तस्य पताकां तु नीलवर्णां विशेषतः ४५
महेन्द्रस्य तु रत्नानि भास्करस्य वितानकम्
गोधूममण्डकान् सत्ये दद्यान्मत्स्यं भ्रशस्य तु ४६
दद्यात् तु शाकुनं मांसमन्तरिक्षाय देशिकः

अग्नये तु स्रवं दद्याल्लाजं पूष्णे तथैव च  ४७
क्षीरान्नं वितथस्योक्तं मध्वन्नं हि ग्रहक्षते
मांसोदनं यमस्याथ गन्धं गन्धर्वकस्य तु  ४८
भृंगे तु शाकुनाजिह्वा मृगेयवतिलस्तथा
कृसरं त्वथपित्रे तु दन्तकाष्ठं च दौव्रके  ४९
यावन्त्वथ च सुग्रीवे कुशान्वै पुष्पदन्तके
दवापद्मं तु वरुणे रोगस्यमधु चैव हि  ५०
घृतोदनं तु शोषस्य यवान्वै पापयक्ष्मणि
घृताक्तमण्डकं दद्याद्रोगाय तु विशेषतः  ५१
नागपुष्पाणि नागाय मुख्यस्यापूपमुच्यते
मुद्गान्नं चैव भल्लाटे पायसं मधुसोमके  ५२
ऋगस्यैव तु शालूकं लोहितान्यदितौ तथा
पूरिकां च दितौ दद्यात् क्रमेणोक्तं बलिक्रमम्  ५३
पयोदधिकुशांश्चैव हरिद्रान्नं गुलान्नकम्
पक्वमांसं च शुद्धान्नं पक्वं च पिशितं तथा  ५४
विदिक्ष्वा पादिदेवानां बलिं दद्यात् पृथक् पृथक्
घृतान्नं रक्ताहारं च लड्डुकं माषमेव च  ५५
समरीयकपूर्वेभ्यो दद्याद्दिक्षु विशेषतः
तिलाक्षतय वांश्चैव पञ्चगव्यं कुशं तथा  ५६
दातव्यं चरुणा तत्र ब्रह्मणे तु विशेषतः
चरकी प्रभृतीनां तु मांसं पक्वन्निवेदयेत्  ५७
सर्वेषां चैव शुद्धान्नं गुलाज्यन्धिसंयुतम्
अलाभे सतिदातव्यं गन्धाद्यैश्च समन्वितम्  ५८
सर्वेषामेव मन्त्रास्तु नामप्रणवसंयुताः
पूजादीनां नमोन्तन्तु बलिः स्वहान्तमुच्यते  ५९
कृत्वैवं बलिदानान्ते पूण्याहं तु विशेषतः

सम्प्रोक्ष्य पञ्चगव्येन मूलमन्त्रमदीरयन् ६०
वास्तुहोमन्ततः कृत्वा मध्ये चोत्तरपूर्वके
आरम्भस्यादि काले तु होमङ्कत्वा विशेषतः ६१
स्थण्डिलन्तत्र कुर्वीत हस्तमात्रप्रमाणतः
चतुरंगुलमुत्सेधं गन्धपुष्पं सदर्भयुक् ६२
शिवाग्निञ्जनयेत् तत्र पूर्वोक्तेन विधानतः
अग्निमध्ये न्यसेद् वास्तुन् तत्रस्थैर्दैवतैर्युतम् ६३
आज्यादि द्रव्यमेवं तु वास्तोर्वक्त्रे हुनेत् क्रमात्
पार्थिवेन तु बीजेन सर्वद्रव्यैस्तु होमयेत् ६४
तत्रस्थ देवतानाम्ना स्वाहान्तेन तु होमयेत्
एवं पृथक् शतं प्रोक्तं तदर्द्धं वा तदर्धकम् ६५
दशसङ्ख्याथवा तत्र प्रत्येकं द्रव्यमाचरेत्
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिं शिवस्य तु ६६
वास्तु देवान् विसृज्याथ पश्चादग्निं विसर्जयेत्
एवं प्रासादवास्तुं च सम्पूज्यसाधकोत्तमः ६७
बलिं दत्वाग्नि सम्पूज्य वास्तुकर्मसमारभेत्
वास्तुकर्म यदा रब्धं वास्तुहोमं तदा चरेत् ६८
वास्तुहोमं विनायत्र कृतं वास्तुविनश्यति
वाप्यादि होमपर्यन्तं तत्सर्वं समवेन तु ६९
चतुराय पदं कृत्वा माहेन्द्र द्वारकल्पनम्
एतद् विशेषमेवं तु ग्रह वास्तुविधिं प्रति ७०
एवमेव तु सम्प्रोक्तं प्रासादवास्तुलक्षणम्
आद्येष्टकाविधिं पश्चाच्छृणुष्वैकाग्रमानसः ७१
इति प्रासादवास्तुलक्षण पटलः सप्तविंशतितमः २७

अथ आद्येष्टकाविधि पटलः

अथातः सम्प्रवक्ष्यामि शृणुत्वं प्रथमेऽष्टकाम्

खननं पूरणङ्कृत्वा वास्तु देवान् प्रपूजयेत् १
तस्योत्तरे प्रपाङ्कृत्वा पूर्वे वाथ विशेषतः
स्थण्डिलन्तस्य मध्ये तु शालिभिश्चतुरङ्गुलम् २
अधिवास्यार्ध रात्रौ तु चतस्रः प्रथमेऽष्टकाः
शिलामयविमानं चेच्छिलाखण्डाधिवासयेत् ३
इष्टकामय धाम्नि तु इष्टाकास्थापयेत् सुधीः
तालत्रयसमुत्सेधं द्विगुणेन सुविस्तृतम् ४
विस्तार द्विगुणायामं कारयेन्मध्यमोत्तमे
अध्यर्धतालमतालं मध्यमान्मध्य भावयेत् ५
तालमात्रसमुत्सेधं मध्यमादधमं भवेत्
मध्यमत्रयमित्युक्तं मध्यमत्रयमुच्यते ६
एकादशाङ्गुलोन्नत्या ह्यधमोत्तममाचरेत्
नवाङ्गुलेन तन्मध्यं सप्ताङ्गुल्याधमाधमम् ७
उन्नतिस्त्वेवमाख्यातं द्विगुणैर्विस्तृतिर्भवेत्
तासां द्विगुणकैर्दैर्घ्यं मानैः सर्वाणि कारयेत् ८
शिलायाः कथितं मानमिष्टकायाः शृणु क्रमात्
षडङ्गुलं तदुत्सेधं द्वादशाङ्गुलविस्तृतम् ९
विस्तारद्विगुणं दैर्घ्यमुत्तमोत्तममेव हि
त्रियङ्गुलप्रमाणेन कनीयससमुन्नती १०
उत्तमाधमयोर्मध्य सप्तधासुविभाजिते
नवधा भेदमाख्यातं यथारुचि समाचरेत् ११
उन्नते द्विगुणन्तारं तस्मात् द्विगुणमायतम्
एवं सुपक्वकैकार्यं सुदृढैस्तु मनोहरैः १२
मूलं स्थूलं भवेन्नारी ह्यग्रं स्थूलं नपुंसकम्
मूलमग्रं समं चेत्तु पुल्लिङ्गमिति निश्चितम् १३
पुल्लिङ्गैश्चैव पूंसां स्यात् स्त्रीणां स्त्रीलिङ्गकैस्तथा

पाटलिपुष्पसंकाशामिष्टकांशं ग्रहेत् ततः १४
सूत्रैर्दर्भैरथावृत्य वस्त्रैरावेष्ट्य यत्नतः
गन्धपुष्पैरलङ्कृत्य स्थरिडलोपरिविन्यसेत् १५
तस्य पूर्वे तु कलशान् स वस्त्रान् सूत्रवेष्टितान्
विद्येश्वरसमायुक्तान् स्थरिडलोपरिविन्यसेत् १६
मध्यमे शिवकुम्भं तु तस्य वामे तु वर्धनीम्
पूजयेद्धृदये नैव गन्धपुष्पादिभिः क्रमात् १७
तस्यैवोत्तरदिग्भागे होमं कुर्याद्विचक्षणः
समिदाज्यान्नकैश्चैव यथा विधिविशेषतः १८
तिलतराडुलसंमिश्रैर्विशेषेण घृत प्लुतैः
ईशानेन तु मन्त्रेण जुहुया तु शताहुतिः १९
शिवाङ्गैश्चैव विद्याङ्गैर्द्रव्यान्ते जुहुयात् ततः
प्रभाते सुमुहूर्ते तु इष्टकास्थापनं भवेत् २०
स्थापकं पूजयेत् पूर्वं स्थपतिं तदनन्तरम्
मन्त्रोक्त सर्वकर्माणि स्थापकेन समाचरेत् २१
मन्त्रहीनं च यत् कर्म सर्वं स्थपतिना कुरु
कृतं चेत् मन्त्रयुक्कर्म त्वभिचाराय तत् भवेत् २२
तस्मात् सर्वप्रयत्नेन मन्त्रोक्तान् स्थापकेन तु
सुमुहूर्ते न्यसेद्विद्वांश्चतस्त्रश्चेष्टकाः क्रमात् २३
द्वारस्य दक्षिणे भागे कर्तव्या प्रथमेऽष्टकाः
पूर्वादिषु चतुर्दिक्षु चतुर्भिर्ब्रह्मभिर्न्यसेत् २४
अग्रमग्रन्तथैशान्ये मूलग्रमं च नैर्ऋते
मूलाग्रं चाग्नि वायव्यां स्थापयेत् तु विचक्षणः २५
सद्यादि ब्रह्ममन्त्रेण पूर्वादिपुरुषादिके
तेषां मध्ये तदा गर्ते पूरयेदुदकैः शुभैः २६
कलशान्तस्थ तोयैश्च शिवमन्त्रेण पूरयेत्

शुभं स्याद्दक्षिणावर्तं वामावर्तमशोभनम् २७
तद्दोषशमनार्थं तु ईशानेन शताहुतिः
तत्रैव नवरत्नानि विन्यसेदनुपूर्वशः २८
वज्रमौक्तिक वैडूर्य शङ्खस्फटिक पुष्यकान्
चन्द्रकान्तं महानीलं माणिक्कं चक्रमां न्यसेत् २९
तेषामभावे सौवर्णं विन्यसेत् तु विचक्षणः
गजदन्ते तथा क्षेत्रे वल्मीके कर्कटालये ३०
वृष शृङ्गे हृदे नद्यान्तीर्थे वै पर्वते तथा
समुद्रे च मृदं ग्राह्य पूरयेदवटं तथा ३१
मृदलाभे तु मतिमां नदीतीरे मृदंग्रहेत्
अत ऊर्ध्वं प्रकर्तव्यं प्रासादं लक्षणेन तु ३२
आद्येऽष्टका विधिः प्रोक्ता गर्भन्यासविधिं शृणु
इति आद्येऽष्टकाविधि पटल अष्टविंशतितमः २८

## अथ गर्भन्यासविधि पटलः

अथातः सम्प्रवक्ष्यामि गर्भं न्यासविधि क्रमम्
यत् प्रासादं सगर्भं तु सर्वसम्पत्करं नृणाम् १
अगर्भं यद्विमानं तु अभिचाराय तत् भवेत्
तस्मादादौ प्रकर्तव्यं गर्भन्यासं समृधिदम् २
भाजनं पूर्वमारभ्य सुवर्णाद्यैर्यथा क्रमम्
सौवर्णं राजतं वापि ताम्रं कांसमयं तथा ३
शङ्खं वा शुक्तिकं वापि सम्प्रोक्तं गर्भभाजनम्
लोहैरेव प्रकर्तव्या फेलाचोक्तप्रमाणतः ४
शङ्खं च शुक्तिकं चैव स्वप्रमाणैः परिग्रहेत्
अद्रव्येण पिधानं स्यात् सुस्निग्धं सुदृढं समम् ५
पादविष्कम्भविस्तारा पञ्चविंशत् पदान्विता

तद्विस्तारसमोत्सेधा नवकोष्ठान्वितापि वा ६
घनं वै षोडशांशैश्च तदर्धाः कोष्ठभित्तयः
उत्तमं तु समाख्यातं विस्तारोत्सेधतः समा ७
विस्तारस्य त्रिपादं वा ह्यर्धं वा भाजनोच्छ्रयम्
समं त्रिपादमध्यं वा कोष्ठभित्त्युच्छ्रयं भवेत् ८
पिधानं कञ्चिदाधिक्यं कृत्वा तदनुसारतः
खण्डितं शोषितं वर्ज्यमेवं भाजनमुच्यते ९
क्षालयित्वा तु गव्यैश्च मृदा वै गर्भभाजनम्
भवनस्येन्द्र दिक्भागे मण्डपे समलङ्कृते १०
गोमयेन समालिप्य पुण्याहं वाच्य तत्र वै
सितेन धातुनालिप्य फणायुक्तं भुजङ्गकम् ११
स्थण्डिलङ्कारयेत् तत्र शालिभिः समलङ्कृतम्
तदर्धैरभित कार्यं सप्तद्वीपसमुद्रकान् १२
कुशवस्त्रैः समास्तीर्य पुष्पैर्ल्लाजसमायुतैः
तस्मिन् ध्यात्वा तु भुवनं विन्यसेत् गर्भभाजनम् १३
ब्राह्मं तु मध्यमपदं त्वष्टौ तत्परितः सुराः
मरीचिः सविता चैव विवस्वांश्च विशेषतः १४
रुद्रोमित्रेन्द्रभूभर्ता ह्यापश्चैतेसु रास्तथा
पूर्वादिविन्यसेत् तत्र नवकोष्ठाधिदेवताः १५
ईशानश्च जयन्तश्च आदित्यश्च भृशोऽग्निकः
वितथश्च यमो भृंगो निर्ऋतिश्च सुकर्णकः १६
वरुणः शोषवायू च मुख्यः सोमोदिति स्मृताः
बाह्यषोडशकोष्ठानामधि देवाः प्रकीर्तिताः १७
माणिक्य वज्रमुक्ताश्च वैडूर्यं शङ्खमेव च
स्फटिकं पुष्यरागं च सूर्यकान्तेन्दु कान्तकौ १८
प्रणवं तु समुच्चार्य ब्रह्मादिषु विनिक्षिपेत्

शालिनी वारगोधूमश्या ममाषकुलूत्थकान् १९
तिलनिष्पाप सिद्धार्थान् बाह्य वृत्तेऽष्टदिक्षु वै
तालं तथाञ्जनश्यामं विसकं च मनःशिला २०
कुरुष्कगन्ध पक्षाणां रोचनागैरिकं तथा
जयन्तादिषु कोष्ठेषु न्यसेत् तदनुपूर्वशः २१
पर्वते च तथा तीर्थे नद्यास्तीरे ह्रदे मृदम्
कुलीरावासवल्मीके शंखे वै गजदन्तके २२
सलिलेन च संयुक्तमष्टदिक्षु च विन्यसेत्
सुवर्णं रजतन्ताम्र मायसन्त्रपुकन्तथा २३
मध्यमे च चतुर्दिक्षु विन्यस्त्वा पञ्चलोहकम्
उत्पलस्य च पद्मस्य नीललोहितकस्य च २४
कुमुदस्य च मूलानि विन्यसेदनुपूर्वशः
खट्वाङ्गं हरिणं शूलं परशुं वृषभं तथा २५
कपालं कूर्मसर्पांश्च सुवर्णेन कृतं क्षिपेत्
ब्रह्मादीशान पर्यन्तं विन्यस्य प्रणवेन तु २६
गन्धपुष्पादिनाभ्यर्च्य विधानेन विधाय च
वस्त्रेणाच्छाद्ययत्नेन दर्भैराच्छाद्यबुद्धिमान् २७
स्थण्डिलं विन्यसेद् वेद्यां शयनो परिदेशिकः
तस्य दक्षिण दिग्भागे होमङ्कृत्वा विचक्षणः २८
अष्टत्रिंशत् कलाभिश्च षडंगैश्च दशाक्षरैः
हुत्वा देवस्य नाम्नाथ वास्त्वभ्यन्तर बाह्ययोः २९
सम्पातं विधिवद्धुत्वा पूर्णाहुतिमथाचरेत्
ततो भ्युक्ष्य हृदागव्यैर्गर्भस्थानं सुनिश्चितम् ३०
आलये मण्डपे चैव निर्गमस्य प्रदक्षिणे
गोपुराणां च सर्वेषां प्रवेशस्य प्रदक्षिणे ३१
प्रासादमूलतः कुर्यादुपाने वा वृतौ तथा

भूमिष्ठं शूद्रजातीनामुपाने नृप वैश्ययोः ३२
नैर्ऋते पथिविप्राणां गर्भस्थानं विधीयते
सर्वेषां तु वृतौ शस्तं भूगतं वापि कारयेत् ३३
प्राक् द्वारं चेत् प्रकर्तव्यमैन्द्र पावकमध्यमे
यदीच्छेत्पश्चिमद्वारे दक्षिणे भित्तिके न्यसेत् ३४
कवाटार्गल योगे वा न्यस्तव्यङ्गर्भभाजनम्
मण्डपे स्तम्भमूले तु प्रथमावरणे बुधः ३५
गोपुराणां तु कर्तव्यं दक्षिणे विनिवेशयेत्
गर्भस्थानं तु सम्प्रोक्ष्य गव्यैर्मृद्भिर्हृदा बुधः ३६
फेलामादाय सद्येन वाममन्त्राभिमंत्रिताम्
अघोरेणावकुण्ठ्याथ दत्वाह्यर्घ्यं मुखेन तु ३७
अखण्डर्क्षे तु तद्रात्रौ स्थिरराश्युदये शुभे
स्थापयेच्छिवमन्त्रेण निश्चलं सुदृढं बुधः ३८
स्थपतिर्दृढकर्माणि कृत्वा तत्र प्रसन्नधीः
स्थापकं पूजयेत् पूर्वं स्थपतिं तदनन्तरम् ३९
सुवर्णभूषिता धेनुर्दक्षिणा स्थापकस्य तु
शृणुवत्स यथान्ययमङ्गुलीनां तु लक्षणम् ४०
इति गर्भन्यासविधिपटल एकोनत्रिंशत्तमः २९

## अथ अङ्गुली लक्षणविधि पटलः

अथातः सम्प्रवक्ष्यामि अङ्गुलीनां तु लक्षणम्
मानाङ्गुलं तु प्रथमं मात्राङ्गुलं द्वितीयकम् १
देहलब्ध प्रमाणं तु तृतीयमङ्गुलं स्मृतम्
यस्मात् परमणुर्नास्ति परमाणुस्तदुच्यते २
परमाणुरधश्चैवापि च केशाग्र एव च
रीक्षायूकाय वास्तत्र क्रमशोऽष्टगुणैर्मतम् ३

मानाङ्गुलमिति प्रोक्तं ततो मात्राङ्गुलं शृणु
आचार्य दक्षिणे हस्ते मध्यमाङ्गुलिमध्यमे ४
पर्वमात्राङ्गुलं ज्ञेयं देहलब्धाङ्गुलं शृणु
प्रतिमायास्तथोत्सेधे कालगण्येन भाजिते ५
तेष्वेकं भागवन्मानं देहलब्धाङ्गुलं स्मृतम्
प्रासादमण्डपांश्चैव प्राकारान् गोपुरानपि ६
ग्रामाध्वक्षेत्र गण्येषु मानाङ्गुलविधानतः
आचार्यदक्षाङ्गुलिभिर्मितेर्व्यासमिधादिकैः ७
कूर्चे पवित्रके चैव सृवे सृक्भिरथान्यकैः
यागे प्रयोजितानीह मात्राङ्गुलिविधिश्चरेत् ८
अथमानाङ्गुलैर्वापि कारयेद्यागकर्मणि
देहलब्धाङ्गुले नैव प्रतिमाङ्कारयेत् बुधः ९
एकाङ्गुलस्य संज्ञा स्यात् बैन्दुमोक्षोक्तमात्रकम्
कलाकोलक पद्माक्षि चाश्विनीद्व्यङ्गुलस्य तु १०
रुद्राक्षाग्निगुणाश्चैव शूलविद्या त्रियङ्गुलम्
युगभागं च वेदं च तुरीयं चतुरङ्गुलम् ११
रुद्राननेन्द्रियं भूत बाणं पञ्चाङ्गुलस्य तु
कर्माङ्गमयनं चैव रसश्चैव षडङ्गुलम् १२
पातालमुनिधातूंश्च चाब्धिं सप्ताङ्गुलस्य तु
वसुलोकेशमूर्तिश्च ततोऽष्टाङ्गुलसंज्ञकाः १३
द्वारं सूत्रं ग्रहं शक्तिर्नवाङ्गुलमिति स्मृतम्
दिशानाड्यायुधं चैव प्रादुर्भावं दशाङ्गुलम् १४
त्रिषु विष्कूश्च विंशश्च गतिस्त्रिंशतिरुच्यते
त्रिजगत् चत्वारिंशत् पञ्चाशच्छक्वरीति च १५
अतिशक्वरिश्च षष्टिस्तु यष्टिसप्ततिरुच्यते
अत्यष्ट्यशीतिकं विद्धि नवती धृतिरेव च १६

अतिधृतिः शताङ्गुल्यमिति संज्ञा प्रकीर्तिताः
एकं दशं शतं चैव सहस्रमयुतं पुनः १७
नियुतं प्रयुतं चैव कोटिं चैव यथार्बुदम्
बृन्दं खर्वं निखर्वं च शंखं पद्ममतः परम् १८
समुद्रमध्यन्ताराख्यं पराख्यमपरं तथा
परार्धमेवमाख्यातं दशवृत्त्युत्तरोत्तरम् १९
एवमेतानि चोक्तानि सङ्ख्या स्थानानि विंशतिः
कालं यमं त्रिभागं च षट्कलाश्च वितस्तिकम् २०
षट्कोलकं मुखं चैव द्वादशाङ्गुलसंज्ञकम्
अङ्गुष्ठ तर्जनीयुक्तं प्रादेशमिति कीर्तितम् २१
मध्यमाङ्गुष्ठ संयुक्तं तालमानमिति स्मृतम्
अङ्गुष्ठानामिकायुक्तं वितस्तिरिति चोच्यते २२
कनिष्ठाङ्गुष्ठयोर्युक्तं गोकर्णमिति संज्ञिकम्
प्रादेशश्च वितस्तिश्च गोकर्णश्च इमे त्रयः २३
यज्ञादिके प्रयोक्तव्याः प्रासादादौ नमापयेत्
रत्निः संवृतमुष्टिः स्यादरत्निः प्रसृताङ्गुलिः २४
किष्कुश्च प्राजापत्यश्च धनुर्मुष्टिधनु ग्रहौ
अङ्गुलेस्तु चतुर्विं शत् किष्कुरित्युच्यते बुधैः २५
पञ्चविंशतिभिश्चैव प्राजापत्यमुदाहृतम्
षड्विंशतिधनुर्मुष्टिः सप्तविंशद्धनुग्रहः २६
किष्कुस्तादि चत्वारिमानाङ्गुलवशात्तम
एभिर्हस्त प्रमाणैस्तु प्रासादादीनि कारयेत् २७
शयनं चासनं चैव किष्कुमानवशात् कुरु
लिङ्गं च पिण्डिकां चैव प्रासादं गोपुरं तथा २८
प्राकारमण्डपं चैव प्राजापत्यकरेण तु
धनुग्रहश्चतुष्कं यद्दण्डमानं प्रकीर्तितम् २९

सहस्रदण्डमानेन क्रोशमात्रं विधीयते
गव्यूतिर्द्विगुणं ज्ञेयं तद्विगुणं तु घातकम्  ३०
घातकस्य चतुष्कं तु योजनापरिकीर्तिता
प्रतिमायास्तदुत्सेधं तालदण्डेन भाजयेत्  ३१
चतुर्विंशच्छतं चैव उत्तमं दशतालकम्
विंशच्छतं च मध्यं तु कन्यसं षोडशाधिकम्  ३२
द्वादशाधिकमेवं यत् नवतालोत्तमं भवेत्
अष्टौशतं चतुःशतं मध्यमं कन्यसं तथा  ३३
शतं षण्णवतिश्चैव नवत्युत्तरकरद्वयम्
अष्टतालमिदं प्रोक्तं त्रिविधं पूर्वपद्धति  ३४
इत्येवं भागहीनं स्यादेक तालान्तमेव हि
तयोदशार्द्धं मुखज्येष्ठन्तयोदशं तु मध्यमम्  ३५
तद्द्वादशार्धमधममुत्तमं दशतालके
नवतालोत्तमे चैव मुखं वै द्वादशाङ्गुलम्  ३६
अर्धार्धाङ्गुल हीनेन मध्यमाधममुच्यते
त्रिविधादशतालेन त्रिमूर्तीनां तु कीर्तिता  ३७
त्रिविधं नवतालेन देवानां योषितामपि
अष्टतालेन मर्त्यानां सप्ततालेन रक्षसाम्  ३८
षट्तालेन तु गन्धर्वान् पञ्चतालो गणाधिपः
वामनस्य तथैवस्याच्चतुस्तालास्तु भूतकाः  ३९
त्रितालं किन्नराणां तु मत्स्यानां तु द्वितालकम्
अणुजानान्तथैकं स्यात् पिशाचानां तु विंशतिः  ४०
अङ्गुल्यः सम्यगाख्याताः प्रासादलक्षण शृणु

इति अङ्गुलीलक्षणविधिपटलस्त्रिंशत्तमः  ३०

अथ प्रासादलक्षणविधि पटलः

अथातः सम्प्रवक्ष्यामि प्रासादानां तु लक्षणम्

सप्ताष्ट नवहस्तं च अधमं त्रितयं भवेत् १
दशद्वादशकं हस्तं षोडशं मध्यमत्रयम्
विंशत् त्रिंशच्च पञ्चाशत् त्रीणि चोत्तममिष्यते २
एवं नवविधं प्रोक्तं प्रासादानां तु विस्तरम्
विस्तारं पञ्चविंशत्तु भागं कृत्वा विचक्षणः ३
नवांशं गर्भगेहं तु भित्तिमानं तु षोडश
अथवा षोडशांशे तु चतुष्टं गर्भविस्तरम् ४
द्वादशांशस्तु भित्तेस्तु विस्तारं सर्वतः समम्
एकाशीति पदङ्कृत्वा नवांशं गर्भमेव तु ५
षोडशं भित्तिमानं तु भित्तिमभ्यन्तरं विदुः
तत् बाह्यैकं तु सलिलं तत् बाह्यैकं तु भित्तिकम् ६
बाह्यभित्तौ चतुर्द्वारमथवा द्वारमेकतः
अन्यत् सर्वसमं प्रोक्तं स्थूप्यन्तं कारयेत् बुधः ७
यदुक्तं भित्तिविस्तारं बाह्याभ्यन्तरयोः समम्
बाह्ये वा भ्यन्तरे वापि त्रिविधं भित्तिमानकम् ८
लिङ्गमानविमानस्य विस्तारं शृणु साम्प्रतम्
यावल्लिङ्गस्य विष्कम्भं त्रिगुणं पीठविस्तरम् ९
तत्तारं त्रिगुणीकृत्य गर्भगेहं प्रचक्षते
गर्भगेहं त्रिभागैकं भित्तिमानं विधीयते १०
यदीश्चेत् कर्तृ विस्तारन्तद्विस्तारं विधीयते
पूजांशं द्विगुणं पीठं त्रिगुणं वा विशेषतः ११
पीठस्य त्रिगुणं गर्भन्तत्रिभागैक भित्तिकम्
संवीक्ष्य समभूमिश्चेदुपपीठं प्रकल्पयेत् १२
विस्तारस्याष्टभागैकमुपपीठस्य चोच्छ्रयम्
तत् पादहीनमर्द्धं वा द्वादशांशं विभज्यतम् १३
द्विभागौ पट्टिकाधस्तादूर्ध्वमंशेन पट्टिका

षड्भागं कर्णभागं स्यादेकांशाक्षुद्र पट्टिका १४
तस्योर्ध्वे तु द्विभागेन ग्रीवं पादैरलङ्कृतम्
यथा लङ्कार संयुक्तमुपपीठं प्रकीर्तितम् १५
ततो जाङ्गलभूमिश्चेदधिष्ठानं प्रकल्पयेत्
तच्चतुर्विधमाख्यातमिह शास्त्रे विशेषतः १६
पद्मबन्धं चारुबन्धं पादबन्धं प्रतिक्रमम्
विस्तारस्य चतुर्थां शमधिष्ठानोच्छ्रयं भवेत् १७
पद्मबन्धं प्रवक्ष्येऽहं शृणु तत्वं गजानन
उत्सेधं सप्तविंशत् तु द्विभागा पट्टिका भवेत् १८
एकांशं दलमेवोक्तमुपानं चैकभागिकम्
जगती तु षडंशा स्यात् द्विभागार्धदली क्रमात् १९
अर्धभागं भवेत् स्कन्धं भागमूर्ध्वदलं तथा
त्रिभागं कुमुदं विद्या दधोब्जं भागमेव तु २०
पट्टिका चैकभागा तु ग्रीवा चैव द्विभागिका
तदूर्ध्वमेक भागं तु पद्मबन्धतो परि २१
द्विभागा पट्टिकाया तु एकभागेन योजनम्
तत्व्रतेश्चैक भागं तु पद्मबन्धमिति स्मृतम् २२
अधिष्ठानस्य चोत्सेधं चतुर्विं शति भाजितम्
द्विभागापट्टिका प्रोक्ता ह्युपानञ्चैक भागिकम् २३
षड्भागाजगती प्रोक्ता कुमुदं पञ्चभागिकम्
एकांशापट्टिका प्रोक्ता ग्रीवा चैव त्रियंशका २४
एकांशापट्टिका विद्धि त्रियंशाचोर्ध्वपट्टिका
महापट्टिका त्रियंशा एकं वा जनमुच्यते २५
पादबन्धमितिख्यातं सर्वकार्येषु पूजितम्
वृतिक्रमं विशेषेण कर्तव्यं पादबन्धवत् २६
पट्टिकां प्रतिवक्त्रं तु कुमुदावृत्तमुच्यते

एवं प्रतिमुखं कार्यमधिष्ठानं समासतः २७
पादायाममधिष्ठानं द्विगुणं सर्वसंमतम्
पादार्धं प्रस्तरं प्रोक्तं कर्णं प्रस्तरवत्समम् २८
प्रस्तरद्विगुणायामं शेखरं हितमुच्यते
भागस्थूपिं प्रकर्तव्यं सर्वालङ्कारसंयुतम् २९
प्रस्तरादूर्ध्वभागे तु कर्णकूटसमायुतम्
चतुर्दिक्षु कपोतं च तयोर्मध्येऽष्टपञ्जरम् ३०
अर्धभागं तु कण्ठं स्यात् भागार्धं शिखरं भवेत्
एवमेकतलं प्रोक्तं द्वितलादीनिमच्छृणु ३१
प्रस्तरान्मूलपादाच्च तलं प्रतितदूर्ध्वतः
सप्तभागैकभिन्नं तु तलेष्वेवं प्रकीर्तितम् ३२
आद्वादशतला देवं भूमौ प्रकल्पयेत्
एवमुक्तमिहोत्सेधं द्वारभेदं ततच्छृणु ३३
वृतेरूर्ध्वोत्तरान्तं यद्वारस्योत्सेधमुच्यते
उत्सेधार्धदशांशो न द्व्यंशं तु परिहीनकम् ३४
विस्तारमुत्तमं मध्यमधमं तु प्रकीर्तितम्
पूर्वे वा पश्चिमे वापि द्वारङ्कृत्वा विचक्षणः ३५
पद्मबन्ध्याद्यधिष्ठाने वृत्तेरुपरिनिर्गमम्
वृतेरधस्तादुच्छेदं मसूरे पादबन्धके ३६
अङ्गच्छेदं तु कर्तव्यमाङ्गं तु न च कारयेत्
द्वारभेदमिदं प्रोक्तं जातिभेदं ततः शृणु ३७
नागरं द्राविढं चैव वेसरं च त्रिधामतम्
कण्ठादारभ्य वृत्तं यत् तद्वेसरमिति स्मृतम् ३८
ग्रीवमारभ्य चाष्टाश्रं विमानं द्राविडाख्यकम्
सर्वं वै चतुरश्रं यत् प्रासादं नागरं त्विदम् ३९
एवं जातिरिति ख्यातं तद्भेदं च ततः शृणु

कैलासो मन्धरो मेरुहिमवन्निषधं स्मृतम्  ४०
नीलपर्वतमाहेन्द्रौ नलीनकप्रलीनकः
नन्द्यावर्तं च श्रीवर्तं पर्वताकृतिरेव च  ४१
इत्येवमादि सर्वेषां भेदमित्यभिधीयते
चतुःशालाचतुष्कूट युक्तः कैलास एव हि  ४२
मन्धरो नाम इत्युक्तश्चतुःशालाष्टकूटकम्
मेरुर्नाम इति ख्यातस्त्वष्टशालाष्ट कूटकः  ४३
हिमवानिति विख्यातो युक्तषोडशपञ्जरः
अष्टशालाष्टकूटस्तु प्रासादो लक्षणान्वितः  ४४
प्रासादो निषधस्तत्र कूटशाला विहीनकः
अष्टशाला समायुक्तश्चाष्ट पञ्जरसंयुतः  ४५
चतुःशालासमायुक्तो वेदीसोपानसंयुतः
नलीनकस्तु सम्प्रोक्ता प्रलीनकमतः शृणु  ४६
शीर्षकं चतुरश्रं तु पार्श्वयोः कोष्ठसंयुतः
पञ्जरं नासिका युक्तं सोपानं पार्श्वयोस्ततः  ४७
प्रलीनक इति प्रोक्ता नन्द्यावर्तमिति शृणु
चतुष्कूटश्चतुःशालाश्चत्वारः पार्श्वनासिकाः  ४८
मुखनासी तथा युक्तं द्वादशं चानुनासिकाः
चतुःसोपानसंयुक्तं भूमौ भूमौ विशेषतः  ४९
नन्द्यावर्तमिदं वत्स श्रीप्रदं च ततः शृणु
कोष्ठकास्त्विह चत्वारश्चतुष्कोणेषु चैव हि  ५०
चतुर्नासी समायुक्तमनुनासी दशाष्टकम्
एवं लक्षणसंयुक्तं श्रीप्रदन्त्विति कीर्तितम्  ५१
कूटशालासमायुक्ता पुनः पञ्जरनासिका
वेदिकाजालकोपेता पर्वता कृतिरुच्यते  ५२
एवं तले तले कर्यन्नूनमेकैकभागिकम्

जातिभेदं समाख्यातं पादानामधुनोच्यते ५३
चतुरश्रमथाष्टाश्रं षोडशाश्रं तु वृत्तकम्
कुम्भयुक्तास्तथा केचित् केचित् कुम्भविहीनकाः ५४
केचिद् वैकुम्भमण्डिभ्यां युक्ताः पादा इति स्मृताः
पादानामा इति प्रोक्तो तेषां लक्षणमुच्यते ५५
विस्तारस्य चतुर्विं शत् भागैकं पादविस्तरम्
तदैव दण्डमाख्यातं पादालङ्कारकर्मणि ५६
मूलपादस्य विस्तारात् सप्तैकांशो न मार्गतः
द्विदण्डं मण्डिरुत्सेधं दण्डपादं तु विस्तरम् ५७
अष्टांशं कण्ठमुत्सेधं द्विदण्डं कुम्भविस्तरम्
उत्सेधं तु त्रिपादं हि पादोनाफलका भवेत् ५८
त्रिदण्डं विस्तरं प्रोक्तं तदर्धं निर्गतं स्मृतम्
वीरकण्ठं तु दण्डेन विस्तारं तत् समं भवेत् ५९
तदूर्ध्वे पोतिकायामन् तत् त्रिपादं तदुच्छ्रितम्
त्रिदण्डमधमायामं चतुर्दण्डं तु मध्यमम् ६०
उत्तमं पञ्चदण्डं तु पोतिकायाममुच्यते
चित्रपत्रतरंगैश्च भूषयित्वा तु पोतिकाम् ६१
कुम्भपादमिदं प्रोक्तं कुम्भभिन्नं प्रचक्ष्महे
पादं पोतिकया युक्तं शेषं कर्म न कारयेत् ६२
कुम्भहीनास्त्विमे प्रोक्ता लताकुम्भं तदुच्यते
कुम्भाकारं तु तन्मूले तदूर्ध्वं पद्ममेव तु ६३
फलकोर्ध्वे लताङ्कुर्यात् तच्छेषं कुम्भपादवत्
पादान्तरे तु कर्तव्यमशक्तश्चेत् तु वर्जयेत् ६४
सर्वेषां मेवपादानां तत्पादं निर्गमं भवेत्
श्रीकरं चन्द्रकान्तं च सौमुख्यं प्रियदर्शनम् ६५
शुभंकरी च नामानि कर्तव्यानि विशेषतः

श्रीकरं वृत्तपादानां षोडशाश्रे तु कान्तकम् ६६
सौमुख्यं हि तथाष्टाश्रे तुर्याग्रे प्रियदर्शनम्
चतुरश्राष्टमिश्रे च पादाकार्याशुभंकरी ६७
पादानां लक्षणं प्रोक्तं तोरणं वक्ष्यतेऽधुना
पृष्ठे तु पार्श्वयोश्चैव कर्तव्यास्तोरणास्तथा ६८
द्वारस्योत्सेधमानं यत्तोरणस्योच्छ्रयं भवेत्
तदर्धं विस्तरं प्रोक्तमुच्छ्राये षड्विभाजिते ६९
मकरं तु द्वियंशेन शेषं पादमिति स्मृतम्
मूलपादस्य चार्धेन तस्य पादप्रमाणकम् ७०
मकारांशं तदूर्ध्वे तु मध्ये वृत्तं सनिम्नकम्
वृत्तेरूर्ध्वे उहां कृत्वा चतुरायतमेव तु ७१
प्रमाणं तोरणस्योक्तं प्रस्तरं च ततः शृणु
प्रस्तरोत्सेधमानं तु पञ्चभागविभाजितम् ७२
त्रिभागमुत्तरोत्सेधं पादेनोत्तरवाजनम्
एकभागं तदूर्ध्वे तु कर्तव्या पद्मपट्टिका ७३
गजश्रेणी मृगश्रेणी प्रस्तरान्तेषु योजयेत्
एवं प्रस्तरमाख्यातं तलं प्रति विशेषतः ७४
कूटशालाप्रमाणं च अधुना वक्ष्यते शृणु
तस्योत्सेधकपोतान्तं षड्भागं तद्विभाजिते ७५
पादं वेदिकया युक्तं पादग्रीवा समायुतम्
द्विभागं पादमेव स्यात् द्विभागं शिखरं भवेत् ७६
भागस्थूपिसमायुक्तमेवं वै कारयेत् सुधीः
कृत्वा विस्तारषड्भागं कूटमेकेन चैव हि ७७
द्विभागेन तु शालां तु भागाभ्यां पञ्जरं तथा
चतुरश्रन्ततः कूटं शालं स्यात् गोपुराकृति ७८
पार्श्वयोर्नासिका युक्तं तन्मध्ये तनुनासिका

द्वित्रिकं च चतुः प्रोक्तं कुम्भं तस्योपरि स्थितम् ७९
एकनासिकयायुक्तं पञ्जरं समुदाहृतम्
कूटेषु नासिकायुक्तं कोष्ठमेतत् प्रकीर्तितम् ८०
प्रस्तरोच्चप्रमाणेन तत्समं कण्ठमुच्यते
द्वादशांशं विभज्याथ द्विभागापट्टिका भवेत् ८१
द्विभागा वेदिका प्रोक्ता कण्ठं पञ्चांशमुच्यते
पट्टिकाश्चैक भागं स्यात् द्विभागापद्मपट्टिका ८२
तदूर्ध्वे शिखरं प्रोक्तं भागार्धं निर्गमं भवेत्
तस्योत्सेधं त्रिधा कृत्वा भागं पादस्य दैर्घ्यकम् ८३
भागेन नासिका प्रोक्ता तदर्धं मध्यनिम्नकम्
शेषभागं त्रिधा कृत्वा नालभागेन कल्पितम् ८४
पञ्जरं चैकभागेन त्रिशूलं भागमानतः
चतुर्भागं तदर्धं वा ह्यनुनासिकमुच्यते ८५
एवं नासिकमाख्यातं स्थूपिलक्षणमुच्यते
शिखरार्धं समुत्सेधं पञ्चविंशत् तु तद्भवेत् ८६
सप्तांशं दलमानं तु भागं तत्कण्ठमुच्यते
अष्टभागैस्तु तत्कुम्भं चतुर्भागं तु नालकम् ८७
द्विभागं वेदिकां कुर्यात् मुकुलं तु कला भवेत्
मुकुलाग्रमधैकांशं स्थूपिपट्टमिहोच्यते ८८
विदिक्षु वृषभं न्यस्त्वा महादिक्षु च मूर्तयः
स्कन्दं कृत्वा तु तत्पूर्वे याम्ये श्रीकण्ठनायकम् ८९
शास्त्रार्थानिमुनीनां तु मुक्त्यर्थं प्रोच्चरन् गुरुः
पश्चिमे नारसिंहं च सौम्ये वा विन्यसेद्बुधः ९०
ब्रह्माणमुत्तरे कृत्वा चतुर्वक्त्रसमायुतम्
वृषस्य तालमूर्ध्वे च ह्यासनाः कण्ठसंश्रिताः ९१
शालासु देवताः प्रोक्ताः कूटेषु च नयत्विह

दिव्यमानुषदेवांश्च यथा युक्त्या तु योजयेत् ९२
शिवक्रीडा हरिक्रीडा तपक्रीडा विशेषतः
यक्षराक्षसगन्धर्वसिद्धविद्याधरोरगान् ९३
अष्टदिक्षु यथा युक्त्या न्यस्त्वा पूर्वादितः क्रमात्
प्रासादलक्षणं प्रोक्तं मण्डपानां विधिं शृणु ९४
प्रासादार्द्धं मुखायामं विस्तारं सममुच्यते
त्रिपादं वा मुखायामं सार्धं मण्डपमुच्यते ९५
देवतामण्डपं पूर्वं द्वितीयं स्नपनार्थकम्
वृषार्धं मण्डपं पश्चाच्चतुर्थं नृत्तमण्डपम् ९६
देवता प्रतिमारूपा स्थापितं देवमण्डपम्
कलशस्थापनं यत्र प्रोक्तं स्नपनमण्डपम् ९७
वृषभं स्थापितं यत्र वृषभं मण्डपं तथा
नृत्तं यत्र कृतं तत् तु नृत्तमण्डपमेव तु ९८
गोपुरेऽथ व्यवायेऽपि व्यवाये विकृतं तथा
एवं चतुर्विधेष्वन्यमण्डपं चाग्रतो बहिः ९९
तेषां नामानि वक्ष्यामि शृणुवत्स समाहितः
नन्दवृत्तं श्रियावृत्तं वीरासनं च वृत्तकम् १००
नन्द्यावर्तं माणिभद्रं विशालं चेति कीर्तितम्
नन्दवृत्तं चतुष्पादं षोडशं श्रीप्रतिष्ठितम् १०१
विंशति स्तम्भसंयुक्तं वीरासनमिति स्मृतम्
द्वात्रिंशद्गात्रसंयुक्तं जयभद्रेति कथ्यते १०२
षट्त्रिंशत् गात्रसंयुक्तं नद्यावर्तमिति स्मृतम्
चतुःषष्टिसमायुक्तं स्तम्भानां माणिभद्रकम् १०३
स्तम्भानां तु शतैर्युक्तं विशालमिति संज्ञितम्
प्रासादवत् समाख्यातं प्रस्तरान्तं प्रमाणतः १०४
प्रासादस्तम्भमानस्य एतत्स्तम्भं विशिष्यते

पादाधिकमथाध्यर्धं पादो न द्विगुणं भवेत् १०५
स्तम्भायामाष्टभागैकं स्तम्भस्यैव तु विस्तरम्
वृत्तं वा चतुरश्रं वा चतुरष्टाश्रमिश्रकम् १०६
षोडशाश्रयुतं वापि शिल्पैः सर्वैः सुशोभितम्
स्तम्भाच्च बोधिकाधिक्या बोधेरप्युत्तराधिका १०७
उत्तराद्वाजनाधिक्या तस्योर्ध्वे मुद्रिकां न्यसेत्
मुद्रिकाच्चतुलाधिक्या जयन्ती तु ततो परि १०८
च्छदयेदिष्टकाभिस्तु तस्योर्ध्वे कलकान् क्षिपेत्
वालुकैस्तु समं चूर्णं गुल्माषं योजयेत् क्रमात् १०९
मुसलेन तु सम्पीड्य शर्करादिसमन्वितम्
कषायपिच्छलैर्युक्तं त्रिफलोदकसंयुतम् ११०
हरीतक्क्यास्तु भागैकं द्विगुणं च विभीतकम्
धात्रि त्रिगुणमित्युक्तं प्रक्षुरणान् मलसंयुतम् १११
षण्मासं वा त्रिमासं वा मासं वाप्युषितं तथा
दधिमाषोदकं चैव नालिकेरस्य तोयकम् ११२
क्षीरं च दधिसंमिश्रं सम्यक् कर्मसमाचरेत्
कूटशालासभां कृत्वा भोगयोग्यं विशेषतः ११३
सोपानं च यथा युक्त्या हस्तिहस्तं तथैव च
एवं समासतः प्रोक्तं मण्डपं विधिपूर्वकम् ११४
प्राकारं परितः कुर्यात् प्रासादस्य प्रमाणतः
भूमौ विन्यस्य विस्तारं प्रासादस्य सुनिश्चयम् ११५
प्रासादस्य तु विस्तारं तस्य दण्डमिहोच्यते
दण्डात्तेन कृतं यत्र त्वन्तर्मलसमैव हि ११६
एकदण्डान्तर्भारा तु मध्यभाराद्विदण्डतः
चतुर्दण्डप्रमाणेन कृत्वामय्यादिभित्तिकम् ११७
महामय्यादिभित्तिः स्यात् सप्तदण्डप्रमाणतः

पृष्ठे चैवाग्रतोप्यर्धं द्विगुणं त्रिगुणं तु वा ११८
चतुर्गुणं मुखायामं प्राकाराणां विशेषतः
कपोतान्तं समुत्सेधं हस्तविस्तारभित्तिकम् ११९
कूटशालायुतं वापि कूटशालान्तमेव च
प्राकारेण समायुक्तं गोपुरस्य विधीयते १२०
मण्डले द्वारके वाथ द्वारशालां तु भारके
प्रासादं मध्यभारायां मय्यादौ हर्म्यमेव च १२१
गोपुरं तु महामय्ये एवं पञ्चविधि स्मृतम्
चतुर्दिक्षु च संयोज्याः प्राकाराणां पृथक् पृथक् १२२
केचिद् वै मालिकाकारा केचिद् वै गोपुराकृतिः
विस्तारं द्वारशोभाया द्वित्रिपञ्चकरं भवेत् १२३
षट्सप्ताष्टनवकरैर्द्वारशाला प्रकीर्तिता
एकादश त्रयोदश हस्तं प्रासादविस्तृतम् १२४
चतुर्दशपञ्चदश द्वारहर्म्यमिति स्मृतम्
एकविंशस्त्रयोविंश द्वारगोपुरमुच्यते १२५
विस्तारद्विगुणायाममायामद्विगुणोच्छ्रयम्
भौमोर्ध्वोत्तरसीमान्तं द्वारस्योच्छरयलक्षणम् १२६
तदर्धं विस्तारं प्रोक्तं अलङ्कारं विमानवत्
प्राकारभित्तिमाश्रित्य कुर्यादावृतमण्डपम् १२७
तद्बाह्ये भ्यन्तरेवापि मालिका मण्डपं हि वा
पञ्चप्राकारमेवं स्यात् परिवारालयं शृणु १२८
प्रासादस्य चतुर्थं वा तदर्धं वार्धमेव वा
मातृणामालयं कुर्यात् गोपुराकारमेव तु १२९
हस्ति पृष्ठन्तपप्रोक्तं प्रासादं तु विशेषतः
मेध्यं तु पचनाकारं चतुःशालैकशालकम् १३०
प्राकारसंयुतं कृत्वा बाह्ये वाभ्यन्तरेऽपि वा

पूर्वे तु पश्चिमे द्वारं पश्चिमे पूर्वतो मुखः १३१
दक्षिणे चोत्तरद्वारमुत्तरे दक्षिणोन्मुखम्
वह्नीशानस्थितं यत्तत्पश्चिमे द्वारमिष्यते १३२
नीलानिलस्थितं चैव पूर्वद्वारं प्रशस्यते
वृषस्य मण्डपं तत्र चतुर्द्वारसमायुतम् १३३
प्रासादलक्षणं प्रोक्तं ततो मूर्धेऽष्टकां शृणु
इति प्रासादलक्षणविधिपटल एकत्रिंशत्तमः ३१

अथ मूर्धेऽष्टकाविधि पटलः
अथातः सम्प्रवक्ष्यामि मूर्धेऽष्टकाविधिं शृणु
प्रासादस्योत्तरे वाग्रे प्रपां कृत्वा स लक्षणम् १
स्थण्डिलं तत्र कुर्वीत तिलतण्डुलशालिभिः
न्यस्त्वा तन्मध्यमे पश्चादिष्टकाः पञ्चकाः क्रमात् २
शालिपिष्टमयेनाथ लेखयेदक्षराणि तु
यकारं पूर्वभागे तु रकारं दक्षिणे तथा ३
लकारं पश्चिमे चैव पकारं चोत्तरे तथा
हकारं मध्यमे न्यस्त्वा पृथग्वस्त्रेण वेष्टयेत् ४
अभितः कलशानष्टौ त्रिसूत्रपरिवेष्टितान्
पिधान कूर्चवस्त्राड्यान् गन्धाम्बु परिपूरितान् ५
हेमरत्न विनिक्षिप्त लोकपालाधि देवतान्
संस्थाप्याभ्यर्च्यगन्धाद्यै स्वस्वमन्त्रेण देशिकः ६
लोहजं दारुजं वापि स्त्रिभिस्तम्भं विशेषतः
शिखरं सदृशं दीर्घं तारमष्टषडङ्गुलम् ७
अग्रमङ्गुलविस्तारमानुपूर्वात् कृशं तथा
चतुरश्रं भवेन्मूलं मध्यमष्टाश्रकं तथा ८
तदूर्ध्वं वृत्तमेवं स्याच्छिखिपादमिव स्थितम्

गव्यैः प्रक्षालयित्वा तु स्थण्डिलोपरिविन्यसेत् ९
आच्छाद्याहत वस्त्रैश्च दर्भैः संस्तीर्य यत्नतः
वास्तुहोमन्ततः कृत्वा पर्यग्निं तेन वह्निना १०
कुर्यादस्त्रं महाशासु कुण्डानि विधिवत् ततः
तुर्याश्राण्यथ वृत्तं तु शङ्करेऽपि तथैव हि ११
अथवा वालुकैर्वापि स्थण्डिलं कारयेत् क्रमात्
अग्न्याधानादिकं सर्वं पूर्वोक्तेन विधानतः १२
पार्थिवादीनि तत्वानि पञ्चेऽष्टकाधिदेवताः
समिदाज्य चरूलाजान्य वैःसद्यादिभिः क्रमात् १३
उदुम्बर वटाश्वत्थ प्लक्षपालाशकाः क्रमात्
प्रागादि समिधः प्रोक्ता स्थण्डिले वा विशेषतः १४
प्रत्येकं शतमर्धं वा हुत्वा पूर्णाहुतिं ततः
पञ्चभूतात्मकं स्मृत्वा होममेकमथैशके १५
प्रभाते विमले धीमां नक्षत्रे करणान्विते
सुमुहूर्ते सुलग्ने च स्थापक स्थपती तथा १६
शुक्लवस्त्रपरिच्छन्नौ शुक्लमाल्यानुलेपनौ
अनन्यमनसा वेतौ स्थापयेदिष्टकाः क्रमात् १७
सद्यादि ब्रह्ममन्त्राणि स्मरन् पूर्वादिविन्यसेत्
भूमादि पञ्चत्वत्वानि न्यस्त्वा पूर्वादितः क्रमात् १८
मध्यमे नवरत्नानि न्यस्त्वापूर्वोक्तमार्गतः
ईशानेन तु मन्त्रेण स्थूपिं तत्रैव विन्यसेत् १९
स्थपतिः शेषकर्माणि कारयेत् तु यथा दृढम्
स्थापको मन्त्रयोग्यस्तु स्थपतिः कर्मयोग्यकः २०
शिखरोर्ध्वे तु संस्थाप्य पञ्चभागत्रिभागिकम्
अर्धभागं तु वा दृश्यं स्थूप्याः शेषं तु बन्धयेत् २१
विमानाङ्गानि सर्वाणि कुर्यच्छास्त्रोक्तमार्गतः

शैलेन निर्मिते धाम्नि वर्णिते वाप्यवर्णिते २२
इष्टकाभिः सुनिर्वृत्ते सुधाद्यैर्वर्णिते क्रमात्
विमानस्थापनं धीमान् कुर्यादस्मिन् विशेषतः २३
व्यपोह्य संकरान् भाराडान् कृत्वा शिल्पिविसर्जनम्
ततो क्षिमोचनं कुर्याद्धोमवेदान्विशेषतः २४
सम्पूज्य स्थापकं पश्चात् स्थपतिं पूजयेत् ततः
वस्त्रहेमाङ्गुलीयाद्यैर्गो भूमिधनधान्यकैः २५
प्रागुक्तविधिना सम्यक् कर्तव्यं चाङ्कुरार्पणम्
प्रतिष्ठादिवसात् पूर्वे दिवसे विप्रनिर्णिते २६
प्रासादस्य चतुर्दिक्षु प्रपाः पञ्चकरैः क्रमात्
प्रासादमध्यमे वेदीं तत् त्रिभागैकमानतः २७
विस्तारार्धसमुत्सेधं मुष्टिमानमथापि वा
चतुर्दिग्वेदिकायास्तु प्राग्याम्य वरुणेन्दुषु २८
होमकुराडं विधानेन प्रोक्तं वा चतुरश्रकम्
प्रासादाभ्यन्तरे कुर्यात् वास्तु होमं विधानतः २९
पर्यग्निकरणं कृत्वा महाव्योमेति मन्त्रतः
पुरयाहं वाचयित्वाद्भिः प्रोक्षयेत् तु समं ततः ३०
द्रोणाम्बुपूरितान् कुम्भान् निर्दोषान् सुदृढान्नव
तन्तुना चित्रितान् सर्वान् सर्वगन्धाम्बु पूरितान् ३१
हेमपुष्पविनिक्षिप्तान् प्रत्येकं वस्त्रवेष्टितान्
चूतपल्लवसंयुक्तान् संस्थाप्य स्थरिडलोपरि ३२
अष्टद्रोणैस्तदर्धैर्वा वेदिकोर्ध्वे पृथक् पृथक्
आलिख्य नलिनं चोर्ध्वे चाष्टपत्रं सकर्णिकम् ३३
शाल्यर्धन्तराडुले नैव तराडुलार्धतिलैः कृतम्
मध्यादीशान पर्यन्तं वेदिकासु पृथक् पृथक् ३४
संस्थाप्य वर्धनीयुक्तं स्वस्वमन्त्रैर्विशेषतः

धामप्राग्वेदिकोर्ध्वस्थमध्यकुम्भे तु षरामुखम् ३५
तस्यैव वामभागे तु वर्धन्यां सुमतिं न्यसेत्
अभितोष्टघटेष्वेषु लोकेशान् स्वस्वदिग्गजान् ३६
दक्षिणे मध्यकुम्भे तु श्रीकराठेशं तु विन्यसेत्
वामभागे तु वर्धन्यां न्यस्त्वा गौरीं समन्त्रतः ३७
अनन्तादि शिखराड्यन्तां विद्येशानभितो न्यसेत्
पश्चिमे विष्णुमूर्तिं तु मध्यकुम्भे तु वामता ३८
श्रीयं विन्यस्य वर्द्धन्यां पुरुषं सत्यमेव च
अव्यक्तं चानिरुद्धं च प्रद्युम्नं वासुदेवकम् ३९
संकर्षणमनन्तं च परितोष्ट सुविन्यसेत्
उत्तरे मध्यकुम्भे तु ब्रह्माणं च स्वमन्त्रतः ४०
तस्य वामे तु वर्धन्यां सावित्रीमभितोष्टसु
व्यासागस्त्यवसिष्ठांश्च कौशिकं काश्यपं तथा ४१
गौतमं च भरद्वाजं विन्यसेत् तु पराशरम्
यद्वद् धामगतासीनास्तद्वत्सं भावयेत् घटे ४२
संयजेदुक्तमन्त्रैश्चाप्यनुक्तान् स्वस्वनामभिः
प्रत्येकं हविषं दत्वा ह्युपदंशैः समन्वितम् ४३
ततो होमं प्रकुर्वीत चतुर्दिक्षु विशेषतः
कृत्वाग्निमुखसंस्कारं प्रागुक्तविधिना सुधीः ४४
मध्यकुम्भस्थ देवास्तु होमानामधिदेवताः
पिप्पलोदुम्बरप्लक्षवटाः पूर्वादिषु क्रमात् ४५
समित्सर्पिश्चरुर्ल्लाज तिलसिद्धार्थमुद्गकाः
यवमाषकुलुत्थाश्च नीवारैकादशः क्रमात् ४६
पञ्चब्रह्मैश्च विद्याङ्गैस्त्रिशतं द्विशतं तु वा
शतमष्टोत्तरं वापि प्रत्येकं जुहुयुस्ततः ४७
विमानादूर्ध्वभूमिस्थदेवान् संस्नाप्य शैलजान्

सम्प्रोक्ष्य वर्णी तद्देवान् स्वस्वमन्त्रेण देशिकः ४८
हैमकौतुकसूत्रेण तेषां दक्षकरे हृदा
बध्वा दर्भैः सुवस्त्रैश्च बिम्बानाच्छाद्य वर्मभिः ४९
ऋगाद्यध्ययनं कुर्याच्चतुर्दिक्षु विशेषतः
एवं रात्रौ तु निर्दिष्टं प्रभाते देशिकोत्तमः ५०
सुस्नातः सकलीकृत्वा सोष्णीषः सोत्तरीयकः
शुक्लाम्बरधरः सृग्वी शुक्लगन्धानुलेपितः ५१
पञ्चाङ्गभूषणैर्भूष्य हेमयज्ञाङ्गुलीयकैः
कुम्भानभ्यर्च्य विधिना दद्यात् पूर्णाहुतिं हृदा ५२
सुमुहूर्तेसु लग्ने च कुम्भानुधृत्यमध्यमान्
वर्धनीभिः सहैवात्र नयेदृक्षस्थलोपरि ५३
त्यक्त्वा प्रतिसरं वस्त्रं हृदयेन स्वमन्त्रकान्
विन्यस्त्वाक्षरसंघांश्च शिरोमध्यात् पदान्तकम् ५४
कुम्भात् बिम्बे तु तत् तत्त्वं योजयेत् तु पृथक् पृथक्
तेषां तु वामपार्श्वे तु वर्धन्यन्तस्थदेवताः ५५
संयोज्य स्वस्वमन्त्रेण यथा युक्त्याभिषेचयेत्
परितोष्टघटान्तस्थां स्वस्वाशासु च विन्यसेत् ५६
सम्प्रोक्ष्य कुम्भतोयैश्च देवानन्यांश्च धामनि
स्थूप्याद्युपानपर्यन्तं प्रासादाङ्गानि सेचयेत् ५७
स्थापकं मूर्तिकांश्चैव अध्ये तॄन् परिचारकान्
सर्वां श्च शिवभक्तांश्च पूजयेत् पूर्ववत् सुधीः ५८
धामान्तस्थगतं देवं स्नपनं कारयेत् ततः
दद्यात् प्रभूतहविषं भोजयेत् भूसुरानपि ५९
विमानस्थापनोपेत धाम्निपूजाफलप्रदा
अकृते पूजिते धाम्नि तत्सर्वं निष्फलं भवेत् ६०
शिवस्यैवं समाख्यातं विमानस्थापनं मया

अन्येषां देव सर्वेषां कुर्यादेवं विधानतः ६१
मन्त्रभेदो भवेदत्र क्रियाभेदो न कल्प्यते
प्रासादग्रीवमध्यस्थ देवानां स्वस्वमन्त्रकैः ६२
कुर्यात् सर्वं यथोद्दिष्टं विधिनादेशिकोत्तमः
विमानस्थापनोपेत मूर्धेऽष्टका विधिं ततः ६३
अत ऊर्ध्वं प्रवक्ष्यामि शृणु लिङ्गस्य लक्षणम्
इति मूर्धेऽष्टकाविधिपटलो द्वात्रिंशत्तमः ३२

अथ लिङ्गलक्षणविधि पटलः

अथातः सम्प्रवक्ष्यामि लिङ्गलक्षणमुत्तमम्
लयं गच्छन्ति भूतानि संहारे निखिलं यतः १
सृष्टिकाले तथा सृष्टिः तस्माल्लिङ्गमुदाहृतम्
त्रिविधं लिङ्गमाख्यात सकलं निष्कलं कलम् २
सकलं त्रिविधं तत्र तेषां लक्षणमुच्यते
दिग्देशकालरहितो वाङ्मनातीतगोचरः ३
स एव देवदेवेशः स्वेच्छया गृह्णिते तनुम्
परं भावं समालम्ब्य सर्वज्ञत्वादिभिर्गुणैः ४
योगिनां लक्षणार्थं तु शास्त्राणामुद्भवाय च
प्राणिनामुपकाराय गृह्णीते विग्रहं शिवः ५
परात्पर तराद्यस्माच्छिवशक्तेः समुद्भवः
द्वितीयं शक्तिमूर्तिश्च बिन्दुनादश्चतुर्थकम् ६
दिग्देशकालसम्बन्धरहिता वाच्यवाचकौ
स्थापनारहितौ शक्त्या मनोगम्ये तु निष्कलौ ७
एतत् तु निष्कलं लिङ्गं शृणु सकलनिष्कलं
निष्कलं हि कलाहीनं सकलं तु कलान्वितम् ८
सकलं निष्कलोपेतं तस्मात् सकलनिष्कलम्

मुनिदेवमनुष्यैश्च पूजितं लिङ्गमादरात् ९
निष्कलं लिङ्गमित्याहुः सकलं भाव्यरूपकम्
द्विधाभावगतो योऽन्यो बिन्दुनादोद्भवं ततः १०
सकलं निष्कलं तस्मान्मुखलिङ्गं द्विरूपतः
सकलं निष्कले लिङ्गे पूजयेत्तु सदाशिवम् ११
तदर्धस्त्वीश्वरः प्रोक्तः सकलं रूपमुच्यते
तस्य मध्ये सहस्रांशाद्रुद्रोद्भवमिहोच्यते १२
तस्य वामे तु कोट्यंशादेकांशो विष्णुरुद्भवः
तस्य दक्षिणभागे तु कोट्यंशात् ब्रह्मणोद्भवम् १३
सकलानि तथैतानि अन्यानि तु तथैव हि
ईश्वरः सृष्टिसंहार रक्षणे च प्रभु स्मृतम् १४
ब्रह्मणा सर्वमुत्पन्नं विष्णुना सर्वपालनम्
जगतां सर्वसंहारं शिवस्य परमेष्ठिनः १५
यद्वच्छम्भोः समुद्भूतं तद्वच्छक्तेः मुद्भवम्
अमूर्तं चेदमूर्ता तु समूर्तं चेत्समूर्तका १६
अग्नेरुष्णात्ववच्छक्तिरविना भाविनी विभोः
ब्रह्माविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः १७
सावित्री श्रीरुमादेवी ईश्वरी च मनोन्मनी
लिङ्गे सदाशिवं प्रोक्तं पिण्डकायं मनोन्मनी १८
एवं पञ्चममूर्तीनामुच्यन्ते पञ्चमूर्तयः
तस्मात् तदुदयं प्राप्य शक्तिशम्भुमयञ्जगत् १९
द्विधाभवस्य लिङ्गस्य लक्षणं शृणु साम्प्रतम्
लिङ्गयोनि प्रभेदानि सैकतादीनिमच्छृणु २०
क्षणिकं चैव मृल्लोहं रत्नजं दारुजं तथा
शैलजं चैव विघ्नेश षडङ्गं लिङ्गमुच्यते २१
क्षणिका द्वादशप्रोक्ता मृन्मयं द्विविधं पुनः

दारुजं चाष्टधा प्रोक्तमष्टधा लोहजं स्मृतम्  २२
सप्तधा रत्नजं चैव शैलजं तु चतुर्विधम्
पूजान्ते क्षणिकास्त्याज्यास्त्यजेदन्यानि तल्लये  २३
रत्नजं लोहजं चैव बाणलिङ्गं चलं स्मृतम्
शैलं चलाचलं प्रोक्तं मृन्मयं दारवं तथा  २४
क्षणिकानां फलं वक्ष्ये सैकतं मोक्षकांक्षिणाम्
तण्डुलं विभवार्थीनामन्नमन्नप्रदं स्मृतम्  २५
नदीमृद्भूमिलाभः स्यात् गोमयं रोगनाशनम्
नवनीतं मनोह्लादं रुद्राक्षं ज्ञानवर्धनम्  २६
गन्धं  सौभाग्यकांक्षिणां कूर्चं  मुक्त्यर्थिनां स्मृतम्
आयुष्यवर्धनं पुष्पं गुलमिष्टार्धसिद्धिदम्  २७
पैष्टं पुष्टिप्रदं प्रोक्तं क्षणिकानां फलं भवेत्
एतेषां चैव लिङ्गानां न प्रमाणं न च स्थितिः  २८
मृन्मयं राज्यफलदं पक्वापक्वप्रभेदकम्
शुद्धदेशे मृदं ग्राह्य पूजाभागं सयोनिकम्  २९
कृत्वा दग्धमिदं पक्वं तत्रापक्वमिहोच्यते
यवगोधूमचूर्णैश्च घृतक्षिरकषायकैः  ३०
सर्जगुल्गुलुग्रीवेष्टकापित्थनिरयासकैः
चूर्णैरालोढ्य सुमृदा मासपक्वोषितं तथा  ३१
रत्नबीजसमायुक्तं पक्वलिङ्गं समाचरेत्
सुवर्णं  रजतं ताम्रं कांसमारकूटं तथा  ३२
आयसं सीसकं चैव त्रपुकं चेति लोहजम्
सौवर्णं  श्रीप्रदं प्रोक्तं राजतं राज्यसिद्धिदम्  ३३
ताम्रं पुत्रप्रदं चैव विद्वेषं कांसमेव च
आरकूटं तथोच्चाटे क्षयकारकमायसम्  ३४
सीसकं रोगहरणं त्रपुरायुष्यवर्धनम्

एवं तु लोहजं प्रोक्तं ततो रत्नजमुच्यते ३५
मौक्तिकं च प्रवालं च वैडूर्यं स्फटिकं तथा
पुष्यं मरतकं निलं रत्नजं सम्प्रकीर्तितम् ३६
स्फाटिकं भुक्तिमुक्त्यर्थमिष्टसिद्धिं तु रत्नजम्
लोहरत्नानिके लिङ्गे पूजाभागं सपीठिकम् ३७
यथा लाभप्रमाणेन स्फटिकादीनि कारयेत्
स्फटिकादिषु कर्तव्या त्रिभागैरेव पीठिका ३८
तदायामसुविस्तारा पिण्डिका शुभदा स्मृता
एकाङ्गुलं समारभ्य आचतुर्विं शदङ्गुलान् ३९
लोहजं लिङ्गमित्याहुर्लक्षणोद्धारणं विना
दारवस्यैव शैलस्य वनं गच्छेत् स्थिरो गुरुः ४०
शुभे दिने तिथौ वारे सुमुहूर्ते विशेषतः
आचार्यं शिल्पिमाहूय वस्त्रैर्हेमाङ्गुलीयकैः ४१
शुक्लमाल्यानुलेपाद्यैर्भक्तियुक्तं सुपूजयेत्
कुठारादीनि चिह्नानि परां ग्राह्य विचक्षणः ४२
आचार्यः शिल्पिभिश्चैव सहायैर्बलवत्तरैः
पुण्याहजयशङ्खैश्च शङ्खभेर्यादिनिस्वनैः ४३
यथावस्थानकाले तु निमित्तान्युपलक्षयेत्
दिव्यान्तरिक्षभौमानि अशुभानि शुभानि च ४४
सव्येत्वागमनं वामा द्वायसस्य स्वरस्तथा
समांसश्येनकस्त्वग्रे दक्षिणाद्वाममार्गतः ४५
कन्यानां दर्शनं चैव गवारोहणमेव च
दधिवै पूर्णकुम्भं च ब्राह्मणं पुष्पसंयुतम् ४६
पावकं ज्वलमानं च मांसभारं तथैव च
वेश्यासं दर्शनं चैव वराहं हयमेव च ४७
शुभान्येतानि सर्वाणि दर्शयित्वा व्रजेद्बुधः

उल्कापातं दिशादाहं महावातप्रवर्तनम् ४८
अशुभं ह्यन्तरिक्षे तु पूर्वोक्त विपरीतकम्
तैलाभ्यङ्गं च तत्पात्रं मुक्तकेशस्य दर्शनम् ४९
दर्शनं नवमृद्भाराण्डं च्छिन्ननासिकमेव च
एते तु भौमजा ज्ञेया परीक्षैवं शुभाशुभम् ५०
शुभेषु प्रस्थितो या या दशुभे तु निवर्तयेत्
अशुभेऽग्निं समास्तीर्य शिवेनैव शतं हुनेत् ५१
निमित्ते शोभने गच्छेद् आचार्यः शिल्पिभिः सह
सम्प्रविश्य ततो धीमान्वनान्युपवनानि च ५२
महेन्द्रे मलये चैव सह्यैविन्ध्ये तथैव च
यावच्छिलाद्रुमौ चास्ति तावद्या या द्विचक्षणः ५३
शमीमधुकरण्डूक कर्णिकारं तथैव च
तिन्दुकार्जुनकौ चैव पिप्पलोदुम्बरं तथा ५४
एते वर्णास्तु चत्वारो ब्राह्मणादि यथा क्रमम्
अन्ये च बहवो वृक्षा मध्यवाराः सुशोभनाः ५५
स्निग्धपत्रा महाकायाः शुभदेशोत्थितास्तु ये
अग्निदग्धाश्चतुष्काश्च पक्षिणां तु निकेतनाः ५६
लतावल्मीकसंस्थाश्च वर्जयेत् साधकोत्तमः
शिलाभापि सुविज्ञेया जातिभेदपरीक्षणैः ५७
श्वेतरक्ता तथा पीता कृष्णा चैव चतुर्विधा
गोक्षीर शङ्खवर्णाभा ब्राह्मणानां प्रशस्यते ५८
जपाबन्धूकपुष्पाभा नृपाणां प्रोच्यते क्रमात्
रजनी स्वर्ण सदृशा वैश्यानां तु प्रशस्यते ५९
माषगुल्गुलु संकाशा शूद्राणां तु समृद्धिदा
सर्वेषां तु शिलाकृष्णा सर्वसम्पत्करी स्मृता ६०
वसासोषरज क्लिन्ना तप्ताश्चार्कस्य रश्मिभिः

अग्निदग्धान्य युक्ता सा वर्जयेत् तां प्रयत्नतः ६१
तस्याच्छोत्तरपार्श्वे तु स्थण्डिलेऽग्निमुखं कृते
शतं हुत्वा शिवास्त्रेण तमग्रे शयने वसेत् ६२
स्वप्ने माणवकं जप्त्वा रात्रौ सुप्त्वा शिवं स्मरेत्
अशुभे दर्शने स्वप्ने मूले नैव शतं हुनेत् ६३
शुभे स्वप्ने तु चेद्धिमान् तदाच्छेदनमारभेत्
अभिषिच्य शिवाद्भिस्तु प्रभाते विमले शुभे ६४
अघोरास्त्रेण मन्त्रेण छित्वा मधुयुतेन च
अधोभागमुखं तस्य पृष्ठमूर्ध्नि प्रकल्पयेत् ६५
पार्श्वयोः पार्श्वमेवं तु मूलं याम्यापरे विदुः
पूर्वे चोत्तरपार्श्वे वा शिरः संकल्प्य बुद्धिमान् ६६
लाञ्छयित्वा क्षराण्यत्रं ततस्तत्क्षणमारभेत्
मूलं पादशिलां ग्राह्य योऽन्या चावृत पार्श्वयोः ६७
बाला च यौवना वृद्धाज्ञातव्या लक्षणैस्ततः
स्निग्धा मृदुतला चैव बालाक्षीणस्वरान्विता ६८
सुस्वराकान्ति संयुक्ता सा शिला यौवना स्मृता
अग्निदग्धा झर्झरूक्षा वृद्धासानि स्वराशिला ६९
बालां वृद्धां तु सन्त्यज्य यौवनां संग्रहेत् बुधः
शिलागर्भान् परीक्ष्याथ कर्तव्यं विधिचोदितम् ७०
लिङ्गं प्रक्षिप्यक्षिरेण पिष्टकासैः सगैरिकैः
इति तत्त्वेकरात्रं तु लिङ्गं प्रक्षाल्य चाम्भसा ७१
बिन्दुरेखा कलङ्काश्च शिलादोषाः प्रकीर्तिताः
दृश्यते मण्डलं यत्र गर्भं तत्र विनिर्दिशेत् ७२
सिते तु मण्डले सर्पो रक्ते तु कृकलासह
गोधा वै मण्डले पीते माञ्जिष्ठे दर्दुरोद्भवेत् ७३
कापिले मूषिका प्रोक्ता चित्रवर्णे तु वृश्चिकः

श्वेतरक्तविमिश्रे तु गराडूको मराडले भवेत्  ७४
खद्योतं मधुवर्णे तु कापोतौ ग्रहगौलिका
गुलवर्णे तु पाषाणं निस्त्रिंशाभेजलं भवेत्  ७५
वर्जिता गर्भयुक्तास्तु विमलैरन्वितास्तथा
विमलं हेमकांसाख्यं लोहाख्यं च त्रिधा स्मृतम्  ७६
परीक्ष्यैव तु कर्तव्यं लिङ्गं गर्भादिवर्जितम्
प्रासादगर्भविस्तारं सूत्रेण समितं तथा  ७७
गर्भविस्तारपञ्चांशस्त्रियं शेनोत्तमं विदुः
गर्भं तु नवधा कृत्वा पञ्चभागं तु मध्यमम्  ७८
अधमं गर्भमानार्थं त्रिविधं तु प्रमाणतः
कनिष्ठज्येष्ठयोर्मध्ये गर्भेऽष्टांश कृते सति  ७९
प्रोक्तं तु नवधा मानं तेषु कार्यं यदृच्छया
अथवान्यप्रकारेण गर्भं तु नवधा पुनः  ८०
उत्तमं त्रिणि चोक्तानि मध्यमं त्रिणि चादिशेत्
अधमं त्रिणि चोक्तानि नवभेदमुदाहृतम्  ८१
हस्तादि नवहस्तान्तं नवधा हस्तमानकम्
त्रितालाद्रुद्रतालान्तं तथा नवविधिं पुनः  ८२
समं वै वर्धमानं च शिवाधिकमतः परम्
चतुरश्रमधोभागमष्टाश्रं मध्यमं तथा  ८३
तदूर्ध्वं वृत्तमेव स्यात् त्रिभागं सर्वतः समम्
समलिङ्गमिति प्रोक्तं वर्तमानमथ शृणु  ८४
चतुर्विं शति चायामे सप्ताङ्गं चतुरश्रकम्
अष्टाश्रमष्टभागेन नवांशे नैव वृत्तकम्  ८५
वर्धमानमिदं लिङ्गं शिवाधिकमतः परम्
आयामं दशधा कृत्वा चतुरश्र त्रिभागतः  ८६
अष्टाश्रं च त्रिभागेन चतुरंशेन वृत्तकम्

शिवाधिकमिदं शस्तं भुक्तिमुक्तिप्रदं शुभम् ८७
यस्य लिङ्गस्य चायाम चतुरश्रस्य नाहकम्
आयामस्याष्टभागाच्च सप्तांशैर्मध्यनाहकम् ८८
तत् षडंशैस्तु वृत्तं स्यात् परिणाहं प्रकीर्तितम्
लिङ्गाया मे चतुर्विं शद्विष्कम्भः पञ्चभागिकम् ८९
वेदाश्रादिपरीणाहाद्विंशत् षोडश वा नव
सर्वेषामेव लिङ्गानां प्रोक्तं वै परिणाहकम् ९०
धारालिङ्गं मुखं लिङ्गं शृणु वत्ससमाहितः
पञ्चधारा सप्तधारा नवधारा द्वादशधारकः ९१
धाराः षोडशविंशच्च त्रिरष्टावाष्टविंशतिः
अष्टाश्रं मूर्तिपर्यन्तं यवार्धं वायवोन्नतम् ९२
पूर्वभागं त्रिधा कृत्वाप्यूर्ध्वभागे मुखं भवेत्
पञ्चमूर्धा चतुर्वक्त्रं ग्रीवा चैका समायुतम् ९३
श्रोत्राष्टौ च दशोष्ठं च सर्वलक्षणसंयुतम्
लिङ्गाकारमधस्तस्य पिण्डिकालक्षणं शृणु ९४
त्रिगुणं लिङ्गविस्तारं त्रिगुणार्धं चतुर्गुणम्
त्रिविधस्त्वधमादिस्तु पीठविस्तारमुच्यते ९५
विष्णुभागस्य चोत्सेधं पीठोत्सेधं विधीयते
अथवा ब्रह्मभागस्य चाष्टांशेन समन्वितम् ९६
पद्मपीठं भद्रपीठं वेदिकोपरिमण्डलम्
पीठं चतुर्विधं प्रोक्तं लक्षणं शृणु साम्प्रतम् ९७
कृत्वा षोडश चोत्सेधं द्व्यंशेन चतुपट्टिका
पञ्चभागं तदूर्ध्वाब्जं दलैः षोडशभिर्युतम् ९८
दलमध्याङ्गुलोत्सेधं पद्मकुण्डमिहोच्यते
द्विभागं मध्य वृद्धं तु समन्तात्सदृढं दृढम् ९९
चतुर्भिरूर्ध्वपद्मं तु द्विभागे नोर्ध्वपट्टिका

तदूर्ध्वे तु ततः कुर्यादेकांशं घृतवारिणा १००
पीठतार त्रिभागैकं नालं कुर्यात्तथोत्तरे
तत्तारस्य चतुर्थां शं तदर्धार्धमथादिकम् १०१
द्विगुणं त्रिगुणं मूलं तदमग्रं चार्धनाशनम्
विस्तारस्य चतुर्धां शादर्धादर्धमथापि वा १०२
जलमार्गं त्रिभागैकं कुर्यात् तत्र विशेषतः
एवं तु पद्मपीठं हि भद्रपीठमथ शृणु १०३
पूर्ववत् षोडशांशं तु कृत्वोत्सेधं विधानतः
भागेनोपानमेकेन चतुर्भिर्जगती भवेत् १०४
कुमुदं तु त्रिभिर्भागैरेके नैव तु पट्टिका
कण्ठं कुर्यात् त्रिभिर्भागैरेकांशेन तु पट्टिका १०५
महापट्टिकाद्व्यंशा तु एकेन घृतवारिणि
भद्रपीठं समाख्यातं वेदिपीठमथोच्यते १०६
पीठोत्सेधे नवांशे तु द्वियंशेन तु पट्टिका
चतुर्भिः कण्ठतुङ्गं तु द्व्यंशे नैवोर्ध्वपट्टिका १०७
घृतवार्यैकभागं तु समन्ताच्चतुरश्रकम्
वेदीपीठं समाख्यातं परिमण्डलमुच्यते १०८
भद्रमेव हि वृत्तं स्यादेतद्वै परिमण्डलम्
तेष्वेकांश समं वापि त्रिपादं वार्धमेव वा १०९
पीठाङ्गानां प्रवेशं च तथा निर्गमनं पुनः
सकलानां च लिङ्गानां सामान्यं पीठलक्षणम् ११०
लिङ्गस्य पीठिका चेत्तु मध्वष्टाश्र क्रमान्वितम्
अवटं कारयेद् धीमान् विष्णुभागसमं यथा १११
ब्रह्मभाग प्रवेशार्थं तन्मानाच्चतुरश्रकम्
घृतवारि घटान्नालं सकले त्वासने विना ११२
नन्द्यावर्त शिलां वक्ष्ये पीठाधस्ताच्चतुः शिला

परितस्तालमात्रं वा षडङ्गुलमथापि वा ११३
पीठविस्तारतोधिक्या नन्द्यावर्तशिलाः शुभाः
समन्ताच्चतुरश्रास्तु ब्रह्मभागसमोन्नतः ११४
अथवा चतुरश्रस्य चाष्टांशत् सप्तमोच्छ्रिताः
गर्भस्य नवभागैकं पादाधारशिलाशुभा ११५
तदर्धमेकमेवं वा तन्नवांशैकमुच्छ्रतः
चतुरश्रस्य चाष्टांशादेकांशं मध्यनिम्नगम् ११६
लिङ्गतारप्रमाणेन खातविस्तारमानकम्
नवनिम्नं तु तन्मध्ये रत्नन्यासार्धमुच्यते ११७
ब्रह्मोपलासमोत्तुङ्गा तत्ताराध्यर्धविस्तृता
एवं कूर्मशिला सिद्धा सुदृढा चतुरश्रका ११८
एवमुक्तास्तु सर्वां गाः किञ्चिन्मानाधिकास्तु वै
रथस्योपरि विन्यस्य तद्ग्रामं प्रविशेत् सुधीः ११९
ग्रामं प्रदक्षिणं कृत्वा वाद्यध्वनि समायुतम्
प्रासादस्योत्तरे भागे कृत्वा कर्मकुटीं बुधः १२०
नीत्वा तन्मध्यमे लिङ्गं प्राक्च्छिरस्कं सुबुद्धिमान्
पट्टिकोपरिविन्न्यस्य सूक्ष्मकर्म च कारयेत् १२१
आचार्यः शिल्पिभिश्चैव लक्षणेनसहैव तु
शिरसावर्तनं कार्यं तच्चतुर्विधमुच्यते १२२
च्छत्राकारं तु पूर्वं च द्वितीयं त्रपुषाकृतिः
कुक्कुटाण्डं तृतीयं तु चतुर्थं त्वर्धचन्द्रकम् १२३
कृत्वा तारं तु षड्भागं लिङ्गस्य च शिरस्त्वथ
भागेन वर्तनं कृत्वा यावन्निम्नं तु मध्यमम् १२४
च्छत्राकारमिदं प्रोक्तं सर्वसिद्धिप्रदायकम्
तारं कृत्वा तु षड्भागं द्विभागार्धेन वर्तिनम् १२५
त्रपुषाकृतिरेवं स्यात् भुक्तिमुक्तिफलप्रदम्

कुक्कुटाण्डं तु तत्रैव विस्तारार्धेन वर्तितम्  १२६
लिङ्गतारं त्रिधा कृत्वा द्विभागेन तु वर्तितम्
अर्धचन्द्रमिदं तत्र मुक्त्यर्थं प्रोच्यते क्रमात्  १२७
एवं सदाशिवं प्रोक्तं सर्वसिद्धिकरं परम्
अन्यानावृतदेवांश्च ध्यानमन्त्रेण पूजयेत्  १२८
सकलं निष्कलं प्रोक्तं सकलं शृणु सुव्रत
इति लिङ्गलक्षणविधिपटलस्त्रयस्त्रिंशत्तमः  ३३

अथ सकललक्षणविधिपटलः
अथातः सम्प्रवक्ष्यामि सकलानां तु लक्षणम्
सर्वावयवदृश्यत्वात् प्रतिमा त्विति चोच्यते  १
ईश्वरादिचतुर्मूर्तिः पठ्यते सकलं त्विति
एतानि सकलादीनि त्रिविधानि मयोच्यते  २
चित्रं चित्रार्धमेवं तु चित्राभासं तथैव च
सर्वावयसम्पूर्णं दृश्यं तच्चित्रमुच्यते  ३
अर्धावयवसंदृश्यमर्धचित्रं तथैव च
पटे भित्तौ च यो लिख्यं चित्राभासमिहोच्यते  ४
पूजाभागसमायमं तदूर्ध्वं प्रतिमोच्छ्रयम्
द्विगुणं त्रिगुणं तत्र मध्यमं चोत्तमं त्विह  ५
एकैकस्य त्रिभिर्भेदैर्नवमानमुदाहृतम्
गर्भं तु नवधा कृत्वा नवधादीप्यमुच्यते  ६
द्वारस्योच्छ्रयमाने तु षोडशांशविभाजिते
भवंगं च पतङ्ग च ऊर्ध्वाधशद्वयं त्यजेत्  ७
शुद्धद्वारमिदं शेषमेतन्मनेन चोत्तमम्
तत्त्रिभाग द्विभागं च मध्यमं त्विति कीर्तितम्  ८
तत्त्रिभागैकमधममेकैकं त्रित्रिभाजिते

प्रोक्तं हि नवधा मानं स्तम्भमानमथ शृणु ९
स्तम्भायामार्धभागेन कर्तव्यं कन्यसं बुधः
त्रिपादं मध्यमं प्रोक्तं समं चैवोत्तमं भवेत् १०
प्रत्येकं त्रिविधैर्भागैर्नवमानं पुरोक्तवत्
उत्तमं तु चतुस्तालं त्रितालं मध्यमं तथा ११
द्वितालमधमं विद्धि हस्तमानसमं शृणु
एकहस्तं समारभ्य नवहस्तान्तमेव च १२
नवमानं करेणैव त्वङ्गुलीनां वशाच्छृणु
यजमानसमं ज्येष्ठं त्रिपादं चैव मध्यमम् १३
अधमं त्वर्धमित्युक्तं यजमानानुरूपतः
एतान्युक्तानि मानानि मानाङ्गुलेन भाजिते १४
तेषु मानेषु युग्मार्थं मानं प्रत्यङ्गुलाधिकम्
अथवैकाङ्गुलोनं वा माने माने प्रयोजयेत् १५
एकाङ्गुलं समारभ्य द्वादशान्ताङ्गुलं ग्रहेत्
तदूर्ध्वं तु न कुर्वीत अथस्तादालयेन हि १६
यदुक्तोत्सेधमानं तु त्रिभागं संविभज्य वै
उष्णीषात् पादपर्यन्तं द्विभागे नैव कारयेत् १७
पीठमानमथैकांशं त्रिविधा पद्ममेकतः
द्विभागं पीठमानं स्यादासने तु विशेषतः १८
बिम्बायाम चतुर्थां शं पीठोच्चं स्थानकस्य तु
स्थानकासनयानं च कर्तव्यं त्वनुरूपतः १९
यद्विष्णु प्रतिमादन्यं शयनं तु न कारयेत्
आचार्यशिल्पिकर्तृणामिष्टमानं प्रगृह्य च २०
मृन्मयं यदि कुर्याच्चेच्छूलं तत्र प्रकल्पयेत्
लोहजं च विशेषेण मधूच्छिष्टेन निर्मितम् २१
अङ्गोपाङ्गानि कृत्वाथ स्थिरवत् सम्प्रकल्पयेत्

गन्धपुष्पादिनाभ्यर्च्य धूपदीपसमन्वितम् २२
तस्यैव दक्षिणे पार्श्वे शिवाग्निं तु प्रकल्पयेत्
हृदा चाष्टशतं हुत्वा समिदाद्यैः पृथक् पृथक् २३
पूर्णाहुतिं ततो दद्यात् ध्यात्वा तद्रूपमात्मनि
हृन्मन्त्रं तु समुच्चार्य तत्तदङ्गानि बन्धयेत् २४
सर्वावयवसम्पूर्णां प्रतिमं शिल्पिभिः सह
गृहितप्रतिमोत्तुङ्गे नवभागविभाजिते २५
भागमेकं मुखं प्रोक्तं कण्ठभागं त्रिभागतः
भागं कण्ठस्तनान्तं च भागं नाभ्यन्तमेव च २६
मेढ्रान्तं भागमानेन द्विभागं चोरुमानकम्
भागत्रिभागिकं जानुजङ्घायाम द्विभागिकम् २७
गुदं भागं त्रिभागं तु द्विभागं बाहुदैर्घ्यकम्
पादोनद्विगुणं तस्य प्रकोष्ठायाममिष्यते २८
मानमेवं तु विख्यातं सर्वेषां तु प्रशस्तकम्
तालगण्येन चाङ्गुल्या मानोन्माने तु कारयेत् २९
मुखन्तालं यमं चैव वितस्तिर्द्वादशाङ्गुलम्
ईश्वरादि चतुर्मूर्तिदशतालेन कारयेत् ३०
शक्तिनामन्यदेवानां नवतालं प्रकीर्तितम्
दिव्यमार्षमनुष्याणामष्टतालेन कारयेत् ३१
रक्षसामसुराणां च सप्ततालमिहोच्यते
षट्तालेनैव गन्धर्वान् पञ्चतालेन विघ्नकम् ३२
वामनात् पञ्चतालैस्तु चतुस्तालैस्तु भूतकान्
त्रितालं किन्नराणां तु मत्स्यानां तु द्वितालकम् ३३
एकतालस्तु कूश्माण्डात् पिशाचाविंशदङ्गुलाः
स्थूलसूक्ष्म प्रभेदांस्तु तालभेदमिहोच्यते ३४
विहितं तत्तदङ्गुल्या मानमुन्मानमेव च

मानं तद्विस्तरं प्रोक्तमुन्मानं नाहमेव च ३५
प्रमाणं दीर्घमित्युक्तं मानोन्मानप्रमाणतः
मुखभागं त्रिधा कृत्वा ललाटोच्चमथैव तु ३६
एकांशं नासिकान्तं स्यादन्यं न तद्वदेव हि
अन्यानि चाङ्गुलैः कार्यमुष्णीषाच्चरणान्तकम् ३७
उष्णीषमङ्गुलं प्रोक्तं मस्तकं तु त्रियङ्गुलम्
षट्त्रिंशदङ्गुलेनैव शिरसो नाहमुच्यते ३८
श्रोत्रयोरन्तरं तत्र ललाटोऽष्टादशाङ्गुलम्
उष्णीषात् तु ततः कर्णपर्यन्तं द्वादशाङ्गुलम् ३९
कलाधा नेत्रमायामं विस्तारं तु तदर्धतः
तत्तारे पक्ष्मरेखेव करवीरद्वयोर्यवम् ४०
असितं च त्रिभागैकं ज्योतिः स्यात् पञ्चभागिकम्
द्विकलानासिकायामं तदर्धं तु पुटद्वयम् ४१
पुटमध्यं यवं प्रोक्तं नासाग्रं तिलपुष्पवत्
अग्रं तु द्व्यङ्गुलोत्सेधं मूलोत्सेधं तदर्धतः ४२
भ्रुवौषडङ्गुलायामौ कला चैव तदन्तरम्
ओष्ठमेकाङ्गुलं प्रोक्तं तदर्धेनोत्तरोष्ठकम् ४३
कलायामं भवेदास्यं मध्यार्धं चिबुकं तथा
निर्गमं चतुरङ्गुल्यं गुलमध्याङ्गुलाधिकम् ४४
कर्णं वै चतुरङ्गुल्यं विस्तारं तु तदर्धतः
निम्नमेकाङ्गुलं प्रोक्तं कर्णनाहं त्रियङ्गुलम् ४५
षड्भागं कर्णनाहं स्यात् तन्मूलं तु कलाधिकम्
तद्बाह्वोरन्तरस्कन्धौ ततः षट्त्रिंशदङ्गुलम् ४६
अग्रं त्रिभागनाहं तु मणिबन्धेऽङ्गुलाधिकम्
इन्दुभागं तलं ज्ञेयं रसाङ्गुलप्रमाणतः ४७
सप्ताङ्गुलं त्वथायामं द्व्यङ्गुलं चोन्नतं स्मृतम्

रेखाभिः संयुतं वत्समध्यनिम्नं बहिर्घनः ४८
करमध्याङ्गुलायामं सप्ताङ्गुलमुदिरितम्
मध्यादर्धाङ्गुलं ह्रासं तर्जन्यानामिके तथा ४९
भागमङ्गुष्ठमेवं तु कनिष्ठस्य तथा भवेत्
अङ्गुष्ठस्य तथा नाहमायामसदृशं त्विह ५०
तस्मादर्धाङ्गुल ह्रासो मध्यमायास्तु नाहकाः
त्रियङ्गुलं तु विज्ञेया तर्जन्यानुमिकाद्वयोः ५१
तदर्धाङ्गुलहीनं तु कनिष्ठस्य तु नाहकम्
अङ्गुलीनां तु पर्वं स्यात् पञ्चभागैकमूर्ध्वतः ५२
द्विभागं मध्यमं पूर्वं तत्समं तु तदा स्मृतः
अङ्गुष्ठं तु द्विपर्वं स्यादधश्चोर्ध्व समंमतम् ५३
नखं वै चाग्र पर्वाग्रमङ्गुलीनां प्रमाणतः
मकुटस्य तु चोत्सेधं मुखं भागाधिकं तु वा ५४
तदर्धाधिकमेवाथ द्विगुणं नाहमुच्यते
ईश्वरस्य चतुर्नाहं तथा भूतगणाधिपौ ५५
समानमेव सर्वेषां विशेषाकृतिरुच्यते
ईश्वरस्य तु वक्ष्येऽहं यथावदनुपूर्वशः ५६
ईश्वरं ह्यात्मतत्वस्थं सर्वतोऽक्षि शिरोमुखम्
इच्छाशक्त्युद्भवं पद्मं सहस्रदलभूषितम् ५७
कर्णिका केसरैर्युक्तं पङ्कजं तु महेश्वरम्
पञ्चमूर्ध्वं चतुर्वक्त्रं नेत्रैर्द्वादशभिर्युतम् ५८
चतुरास्यं चतुर्नासी वसुश्रोत्रं चतुर्गलम्
तनुरेतत् द्विपादं हि सायुधं दशबाहुकम् ५९
शुद्धस्फटिकसंकाशं सूर्यकोटिसमप्रभम्
चद्रांशुहिमशितं च सर्वाभरणभूषितम् ६०
शुक्लाम्बरधरं देवं शुक्लयज्ञोपवीतिनम्

अभयं शूलपरशुं वज्रं खट्गं च दक्षिणे ६१
खेटकाङ्कुशपाशं च घण्टांवरदवामके
कुर्यादेवं महेशं तु शक्तेस्तु लक्षणं शृणु ६२
चतुर्भुजां त्रिणेत्रां च सर्वालङ्कारसंयुताम्
नितम्बतटविस्तीर्णां मध्यक्षामांस्तनोन्नताम् ६३
दक्षिणे चोत्पलोपेतां वामहस्तेऽस्त्रजन्धरीम्
वरदाभयहस्तां वै दुकूलवसनान्विताम् ६४
करण्डमकुटोपेतामीश्वरस्य तु वामके
पीठे चैकासने युक्तां तत्प्रभा मण्डले स्थिताम् ६५
चन्द्रार्काग्नि प्रतीकाशां जगन्मङ्गलकारकाम्
कारयेद् ईश्वरीमेवं वामादीनां शृणुष्व हि ६६
वामादीशाष्ट शक्तिंस्तु ईश्वरीं च पृथक् पृथक्
ईश्वरस्य च हन्वन्तं बाह्वन्तं वास्तनान्तकम् ६७
ईश्वरीदिशमाख्यातं शक्तीनां तत् त्रिपादतः
तद्वदा व्रतदेवानामायामं तु विधीयते ६८
ब्रह्मविद्याङ्ग पञ्चाङ्ग विद्येशाश्च गणेश्वराः
त्रिणेत्राश्चतुर्भुजाः सौम्याः सर्वाभरणभूषिताः ६९
नमस्कारकराः सर्वे ह्यक्षमालाब्जधारकाः
जटामकुटसंयुक्ताः सर्वे सम्यक् प्रकीर्तिताः ७०
तेषां वर्णं पुराप्रोक्तं लक्षणेन समन्वितम्
एवं आवृत देवानां ममरूपाणि च शृणु ७१
आद्यं सुखासनं चैव द्वितीयमुमया सह
वृषारूढं तृतीयं तु त्रिपुरारिं चतुर्थकम् ७२
नृत्ताख्यं पञ्चमं रूपं षष्ठं सोमार्धशेखरम्
सप्तमं च धनादीशं हरिरर्धं तु चाष्टमम् ७३
भिक्षाटनं च नवमं दशमं कामनाशनम्

एकादशं तु कालघ्नं ततो लिङ्गपुराणिकम् ७४
द्वादश प्रतिमां ह्येवं तेषां लक्षणमुच्यते
मेरुपर्वत पार्श्वे तु मुनीनामाश्रमे तथा ७४
दिगम्बरं तु मान् दृष्ट्वा तेषां स्त्रीणां भ्रमोऽसि वै
तं ज्ञात्वा मुनयः सर्वे जुहुयास्त्वाभिचारकम् ७५
तन्मध्ये हृदये तानि नागं कृष्णा मृगं तथा
अपस्मारं च परशुमुक्षं व्याघ्रं हरिं तथा ७६
करोटिं तु महाभीमामेवमाद्यागतो मयि
नागं मृगं च परशुं क्रीडार्थं धारितं मया ७७
पादाधसादपस्मारं करोटिं शिरसोपरि
सिंहव्याघ्रौ तदा हत्वा तच्चर्मं धारितं मया ७८
तदुक्षं वाहनं भूत्वा मम प्रियकरं सदा
महोदधेर्विषं कण्ठे सोमार्धं शेखरे धृतम् ७९
बकपुष्पं जटाभारे मयानृत्ते वधारितम्
समानमन्यत्सर्वेषां प्रतिमानां विशेषतः ८०
त्रिणेत्रं चतुर्भुजं सौम्यं बालेन्दु कृतशेखरम्
धुर्तूरभुजगोपेतं जटामकुटमण्डितम् ८१
व्याघ्रचर्माम्बरं चैव हारकेयूरसंयुतम्
यज्ञोपवीतसंयुक्तं कुण्डलाभ्यामलं कृतम् ८२
मूर्तीनां द्वादशानां तु सामान्यमिदमीरितम्
अतः परं विशेषं तु क्रमशो वक्ष्यतेऽधुना ८३
आसने तु सुखासीनं मृगीपरशुधारिणम्
अभयं दक्षिणे हस्तं वरदं वामहस्तके ८४
कटकं वा सुखासीनमुमा स्कन्दौ च वर्जितम्
एवं सुखासनं प्रोक्तमुमा सहितमुच्यते ८५
सहासने ह्युमादेवीं सुसौम्यवदनोज्ज्वलाम्

द्विभूजां पद्महस्तां तु मकुटाभरणान्विताम् ८६
कटकाख्य धरांवामे प्रसारितमथापि वा
उमा बाहुस्तनान्तं वा मानं वै षण्मुखस्य तु ८७
कण्ठे शूलसमायुक्तं च्छन्नवीरसमायुतम्
उमा शङ्करयोर्मध्ये स्कन्दं वै बालरूपिणम् ८८
आसनं स्थानकं वापि वरदं कटकान्वितम्
कृत्वा सुखासनं यद्वत् पूर्ववत् परमेश्वरम् ८९
देवस्य मुखमन्वीक्ष्य किञ्चिद्गौरीं तु कारयेत्
वृषारूढमथो वक्ष्ये वृषभं पृष्ठत स्थितम् ९०
उमारुद्रौ स्थितौ कृत्वा कूर्परं वृषमस्तके
मृगं परशु संयुक्तं कर्तव्यं वृषवाहनम् ९१
धनुर्बाणसमायुक्तं कृष्णां परशुधारिणम्
उमया सहितं देह कृत्वा तत्त्रिपुरान्तकम् ९२
नृत्तार्थोद्धृत वामाङ्घ्रिजानुनाभि समोत्थितम्
पादाङ्गुष्ठं समो जानु जान्वङ्गुष्ठ समोद्धृतम् ९३
प्रसार्य वामहस्तं च दण्डवद्धृदयोपरि
अभयं दक्षिणं हस्तं शेषण्डमरुकान्वितम् ९४
कण्ठसीमान्तमुधृत्य यथा शोभं प्रकल्पयेत्
साग्निकं वामहस्तं तु बाहुसीमान्तमुद्धृतम् ९५
पादाधस्तमपस्मारं सर्पक्रीडा समन्वितम्
धुर्तूरकां करोटीं च गङ्गेन्दुबकपिञ्छकम् ९६
तिस्त्रः पञ्चजटाः सप्त प्रसार्यकुसुमोज्वलाः
सव्ये त्वेवन्तथा वामे दीप्ताग्निसदृशोज्वलाः ९७
नृत्तरूपमिदं वत्स सर्वशान्त्यर्थमुच्यते
ऋज्वागतं तु तं देवं मृगं परशुधारिणम् ९८
कृत्यम्बरधरं देवं कर्तव्यं चन्द्रशेखरम्

दक्षिणार्धे हरं चैव वामार्द्धे पार्वती तथा ९९
दक्षिणं कुञ्चितं पादं वामपादमृजु स्थितम्
मध्यकायानतौ वक्रमेवं कुर्यात् त्रिभागिकम् १००
हरस्य दक्षिणे हस्ते कूर्परं वृषके स्थितम्
प्रकोष्ठे शुकसंयुक्तं हरं परशु संयुतम् १०१
वामे कटकहस्तं तु दक्षिणे त्वभयं स्मृतम्
श्यामवर्णमुखां देवीं रक्तवर्णं हरं तथा १०२
व्याघ्रचर्माम्बरं देवं पार्वतीं क्षौमधारिणीम्
पिताम्बरधरं विष्णुं व्याघ्रचर्माम्बरं हरम् १०३
विष्णुं किरीटसंयुक्तं शंकरं तु जटान्वितम्
श्यामवर्णं हरिं चैव शंकरं युक्तरूपिणम् १०४
हरिरर्धमिदं प्रोक्तं भिक्षाटनमतः परम्
सृष्टिमूर्तेः कपालं तु स्थितिमूर्तेः कलेबरम् १०५
डमरुकसमोपेतं भस्मसर्पैरलङ्कृतम्
कण्ठे शूलसमायुक्तं छन्नवीरसमायुतम् १०६
पादुकोपरिपादौ च सर्वभूतसमावृतम्
एवं भिक्षाटनं वत्सकामनाशमथ शृणु १०७
उग्ररूपं तु कामारि पार्श्वे कामं प्रपातितम्
कार्यं कामारिपुं ह्येवं वक्ष्येऽहं कालनाशनम् १०८
दक्षिणे तु करे शूलं वामे सूच्यङ्गुलि स्मृतम्
पादं कालस्य हृदये न्यस्त्वैवं पादसंस्थितम् १०९
कालनाशमिदं प्रोक्तं लिङ्गात् पत्तिमतः परम्
लिङ्गं कृत्वोर्ध्वत ब्रह्मा हंसरूपं तथैव च ११०
विष्णुं वराहवक्त्रं तु लिङ्गस्याद्धः प्रकल्पयेत्
हृदयेऽञ्जलिसंयुक्तौ ब्रह्माविष्णू च पार्श्वयोः १११
लिङ्गं मध्ये तु कर्तव्यं पूर्ववच्चन्द्रशेखरम्

अदृश्यौ तस्य पादाब्जौ तथैव मकुटं यथा ११२
प्रोक्तं द्वादशमूर्तिनां रूपभेदं गजानन
देव्यास्तु लक्षणं वक्ष्ये समासाच्छृणु साम्प्रतम् ११३
हन्वन्तं बाहुसीमान्तं स्तनान्तं समुच्छ्रयम्
द्विभुजां श्यामवर्णां तु सर्वाभरणभुषिताम् ११४
दक्षिणे चोत्पलं ग्राह्य वामहस्तं प्रसारयेत्
किरीटं वा करण्डाख्यं तुङ्गपीनपयोधराम् ११५
पूर्वोक्तमध्यनाहस्य सप्तांशैकं परित्यजेत्
मध्यनाहमिदं प्रोक्तमन्यत्सर्वं समं तथा ११६
गौरीरूपमिदं विद्धि विष्णुरूपं ततः शृणु
शङ्खचक्रधरं देवं पीताम्बरधरं हरिम् ११७
श्रीभूमिसहितं देवं सर्वालङ्कारसंयुतम्
स्थितं वाथसमाहीनं शयितं वापि कारयेत् ११८
चतुर्मुखं चतुर्बाहुं कमण्डल्वक्षधारिणम्
रक्तवर्णजटायुक्तं कृत्वा ब्रह्माणमुज्वलम् ११९
सावित्रीं वामपार्श्वे तु सर्वालङ्कारसंयुताम्
एवं चतुर्मुखं कुर्यात् जगत् सृष्टिकरं शुभम् १२०
अन्येषां प्रतिमानां तु तेषां संस्थापनाविधौ
लक्षणं प्रोच्यते सम्यग्यधावनुपूर्वशः १२१
सकलानामिदं प्रोक्तमङ्कुरस्य विधिं शृणु
इति सकललक्षणविधिपटलश्चतुस्त्रिंशत्तमः ३४

## अथ अङ्कुरार्पणविधि पटलः

अथातः सम्प्रवक्ष्यामि अङ्कुरस्यविधिक्रमम्
सर्वमङ्गलकार्यादौ कर्तव्यं मङ्गलाङ्कुरम् १
स्थापने प्रोक्षणे चैव स्नपने चोत्सवे तथा

नवरात्रे सप्तरात्रे पञ्चरात्रेऽथवा पुनः  २
सायादिदिनमारभ्य साये चैवाङ्कुरार्पणम्
बीजानमधिपः सोमस्तस्माद्रात्रौ तु वापयेत्  ३
कृत्वा प्रदक्षिणं ग्रामं शङ्खभेर्यादिनीस्वनैः
च्छत्रद्ध्वजवितानैश्च गजाश्वरथरोपणैः  ४
पिञ्चचामरसंघैश्च त्रिशूलेन समायुतम्
माहेश्वरैर्वहित्वा तु पालिकादीन् शिरोपरि  ५
पालिकाघटिका चैव शरावं त्रिविधं भवेत्
सौवर्णं रजतं वापि ताम्रजं मृन्मयं तु वा  ६
पालिका मुखविस्तारं कन्यसं द्वादशाङ्गुलम्
विस्तारं षोडशाङ्गुल्यं मध्यमं समुदाहृतम्  ७
विंशत्यङ्गुलकं ज्येष्ठं विस्तारोत्सेधतः समम्
तदर्धं पादविस्तारं सवृत्तं सुदृढं समम्  ८
विस्तारस्य तु षड्भागमोष्ठं हि परितः त्विह
विस्तारस्य त्रिभागैकं सुवृत्तं बिलमुच्यते  ९
एवं मुखं बिलं चैव शेषं दण्डं प्रकल्प्य वै
विस्तारस्य त्रिभागैकं दण्डविस्तारमुच्यते  १०
घटिका कलशा कारा दण्डं पादं तु पूर्ववत्
चतुर्दिक्षु चतुर्द्वारं त्रिकोणं च त्रियङ्गुलम्  ११
पालिकार्धं शरावं तु प्रमाणं च तथा भवेत्
नदीतटाकतीरे वा केदारे पर्वते वने  १२
स्थानं प्राप्य विशुद्धं च समृन्मृज्याथ भूतलम्
हृन्मन्त्रेण समभ्युक्ष्य तेन गन्धादिनार्चयेत्  १३
कुन्दाल्या खानयेन्मन्त्री शिवं स्मृत्वा हृदा ततः
मृदं संग्राह्य वामेन प्रविशेदालयं प्रति  १४
आलयस्याग्रतः कृत्वा मण्डपं चतुरश्रकम्

पुण्याहं वाचयित्वा तु भूमिं सम्प्रोक्ष्य बुद्धिमान् १५
स्थण्डिलं तत्र कर्तव्यं पालिकादीनिविन्यसेत्
प्रत्येकं षोडशं वापि अष्टौ वा चतुरोऽपि वा १६
एकाशीति पदं कृत्वा चतुर्विं शपदं विना
मध्येनवपदं पद्मं कोणेषु द्वादश स्मृताः १७
पञ्चविंशत् पदं कृत्वा मध्ये पद्मं सलक्षणम्
अथवा षोडशं कृत्वा तन्मध्ये बञ्चतुष्पदम् १८
कुम्भं पद्मे तु संस्थाप्य सोमराजाधिदैवतम्
सा पिधानं सकूर्चं च सहिरण्यं स वस्त्रकम् १९
गन्धाद्यैरर्चयेत् सोमममृतेन तु बीजतः
कुरीयमनिलाख्यस्य प्रथमस्वरसंयुतम् २०
सानुस्वारं सदानं च योजयेदत्र दाक्षरम्
दीपमादौ समुच्चार्य तदन्ते बीजमुच्चरेत् २१
सोमं शब्दं चतुर्थ्यन्तं नृत्यन्तं प्रोच्चरेत् गुरुः
पायसं सोमराजाय सोपदं शन्निवेदयेत् २२
पालिकाकोणभागेषु घटिकाश्च शरावकान्
पूर्वादिषु चतुर्दिक्षु विन्यसेत् क्रमयोगतः २३
एवं संस्थापनं प्रोक्तमुत्तमं चाधमाधमौ
दिशश्च विदिशश्चैव पालिका स्थापनं भवेत् २४
घटाश्चाभ्यन्तरे स्थाप्य शरावा मध्यमे स्मृतः
पालिका ब्रह्मदैवत्यं घटिकाविष्णुरुच्यते २५
ईश्वरस्तु शरावाणां पात्राणामधिदेवताः
तेषां मृद्भिः करीषैश्च वालुकैश्च सुपूरयेत् २६
तिलसर्षपमुद्गानिमाषानिष्पावकौ तथा
शालिप्रियमपामार्ग यवशामानि वै दश २७
प्रक्षाल्यपयसाविद्वन् दशबीजेन वा पयेत्

कुम्भस्थेन जले नैव नित्यं सम्प्रोक्षयेत् सुधीः   २८
नित्यं सम्पूरयेत् गन्धतो ये नैव घटं पुनः
विधाय च विधानेन स्वनुगुप्तं निधापयेत्  २९
सितानि कोमलानीह कीर्तितानि शुभानि वै
असितानि चतुब्जानि तथा तिर्यग्गतानि च  ३०
तद्दोषशमनार्थं तु शतं हुत्वा शिवं स्मृतः
अङ्कुराणां विधिः प्रोक्तं लिङ्गसंस्थापनं शृणु  ३१
इति अङ्कुरार्पणविधिपटलः पञ्चत्रिंशत्तमः   ३५

अथ लिङ्गप्रतिष्ठाविधिपटलः
अथातः सम्प्रवक्ष्यामि लिङ्गसंस्थापनं परम्
सर्वसिद्धिकरं पुण्यं सर्वयज्ञफलप्रदम्  १
लिङ्गसंस्थापनादन्यत् फलपाकं न विद्यते
तस्मात् सर्वप्रयत्नेन लिङ्गसंस्थापने यतिः   २
धामाधिष्ठानपर्यन्ते द्वारबन्धस्य पूर्वके
मूर्ध्वेऽष्टकायां पूर्वे वा तलान्तेष्वथवा पुनः   ३
धामाङ्गानां समाप्तौ वा लिङ्गं सस्थापयेत् सुधी
सुनक्षत्रे तिथौ वारे सुयोगे सुमुहूर्तके  ४
तत्पूर्वे वाङ्कुरं कृत्वा पञ्चसप्तनवाहके
अङ्कुरादि प्रतिष्ठान्तमादिशैवेन कारयेत्  ५
कृत्वा कर्मकुटौ देशे लिङ्गे सूक्ष्माणि शिल्पिभिः
शाणाभिर्घर्षयित्वा तु लिङ्गं पीथसमायुतम्  ६
पीठे तु प्रतिलिङ्गं च यथा युक्त्या तु योजयेत्
कृत्वा तु लक्षणोद्धार । । । । । मारभेत्  ७
प्रासादस्याग्रतः कुर्यान्मण्डपं नातिदूरतः
अथवा दक्षिणे भागे सर्वालङ्कारसंयुतम्  ८

मध्यमे स्थरिडलं कृत्वा तत्र लिङ्गं तु विन्यसेत्
सुवर्णलिङ्गं संग्राह्य हृदागैरिकया लिखेत् ९
स्थूलरेखान्ततः कृत्वा शिल्पिना विधिचोदितम्
पूजाभागन्ततः कृत्वा षोडशांशं समम्बुधः १०
त्यक्त्वोर्ध्वे तु चतुर्भागं भागेन मुकुलं भवेत्
त्रिभागैकं भवेदग्रं तन्मानं मूलविस्तृतः ११
तन्मानमूलं तत् प्रोक्तं त्यक्त्वाधस्ताद्वियंशकम्
रेखाद्वयं तु नालं स्यात् तरोरर्धां शकान्तकः १२
पार्श्वे रुद्रौ समालिख्य मुकुलाद्याब्धिकान्तकम्
तालान्तरत्रियंशेन तन्मूलादनुपूर्वशः १३
विभागोर्ध्वे तु परितः सूत्रौ पृष्ठे तु बन्धयेत्
यवं वापि यवार्धं वा सूत्रनिम्नं विधीयते १४
सूत्राग्रे तु मुखं प्रोक्तं सूत्रसन्धौ तु पृष्ठकम्
सूत्रपार्श्वं तु तत्पार्श्वन्तमूलन्तस्य पद्मकम् १५
स्थापकः स्थपतिं पूज्य पश्चाच्छुद्धिं समाचरेत्
अष्टमृत् पञ्चगव्यैश्च शुद्धतोयैर्विचक्षणः १६
ग्रामं प्रदक्षिणं कृत्वा देशिकः शिल्पिसंयुतम्
कणमात्रे जलेशुद्धे प्रपां कृत्वा विचक्षणः १७
वितान ध्वजमाल्यादि दर्भमालाभिरावृतम्
वस्त्रैरावेष्टयेल्लिङ्गं दर्भैरावेष्ट्य यत्नतः १८
फलकायां तु पीठे वा प्राक्च्छिरस्कं तु शाययेत्
ऊर्ध्वसूत्रं यथा कृत्वा पीठं तत्पाqश्वयोस्ततः १९
कलशानष्ट संस्थाप्य रक्षार्थं परितस्तदा
लोकपालाधिदैवत्यान् सकूर्चान्वस्त्र वेष्टितान् २०
पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा
पञ्चगव्ये तु तल्लिङ्गमेकरात्रोषितं तथा २१

अथवा स्नापयेत् गन्धैराढकैस्तु पृथक् पृथक्
आलयस्याग्रतो भागे मण्डपञ्चतुरश्रकम् २२
दशद्वादशहस्तं वा त्रयोदशकरं तु वा
दशपञ्चकरं वापि विंशद्धस्तमथापि वा २३
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमायुतम्
चतुस्तोरणसंयुक्तं दर्भमालासमावृतम् २४
वितानद्ध्वजसंकीर्णं पुष्पमालावलम्बितम्
नानावस्त्रैरलङ्कृत्य नानालङ्कारसंयुतम् २५
तन्मध्ये वेदिकां कुर्यात्तत्रिभागैकविस्तृतम्
हस्तमानसमुत्सेधं दर्पणोदरसन्निभम् २६
तस्यैव परित कृत्वा कुण्डानि च विधानतः
पूर्वे तु चतुरश्रं तु याम्ये चैवार्धचन्द्रवत् २७
पश्चिमे वृत्तकुण्डं तु उत्तरे पद्ममेव च
योन्याकारं तथाग्नेय्यां त्रिकोणं चैव नैर्ऋते २८
षट्कोणं वायुदिग्भागे ऐशान्यामष्टकोणकम्
ऐशान इद्रयोर्मध्ये वृत्तकुण्डं तु कारयेत् २९
विस्तारे नवहोमस्यात् संक्षेपे पञ्चहोमकम्
पञ्चाग्निच्छेन्महाशासु मूर्तिरीशे शिवाग्निकम् ३०
गोमया लेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम्
तस्यैवोत्तर पार्श्वे तु कर्तव्यं स्नानमण्डपम् ३१
सप्ताष्टनवहस्तैर्वा कृत्वालङ्कृत्य पूर्ववत्
स्नानवेदिं तु तन्मध्ये स्वभ्रं सम्यक् तथोत्तरे ३२
चतुरश्रं समं कृत्वा चतुस्त्रिनवहस्तकम्
त्रिमेखलसमायुक्तमेकतालसमुन्नतम् ३३
चतुस्त्रिद्व्यङ्गुलं तारमथवा चैकमेखलम्
उत्तरे जलमार्गं च मण्डपात् बाह्यनिर्गमम् ३४

प्रासादे मगडपे चैव ब्राह्मणान् भोजयेत् क्रमात्
शिवव्रतधरांश्शुद्धान् शिवे भक्तिसमन्वितान् ३५
ब्राह्मणोच्छिष्टमुद्वास्य गोमयालेपने कृते
पुगयाहं वाचयित्वा तु ब्रह्मघोषसमावृतम् ३६
प्रासादेवास्तु होमं तु पूर्वोक्तविधिनाबुधाः
दर्भैः पलाशपत्रैश्च शमीपिप्पलबिल्वकैः ३७
पर्यग्निकरणं कृत्वा प्रासादमगडपं क्रमात्
सम्प्रोक्ष्य शिवमन्त्रेण पञ्चगव्यकुशोदकैः ३८
शयनं कल्पयेद्विद्वान् शुद्धशालियवैः सह
अष्टद्रोणमयं शालि तदर्धं तगडुलं तथा ३९
तगडुलार्धं तिलं प्रोक्तमब्जमालिख्यचार्चयेत्
दर्भैरुपरिसंस्तीर्य पुष्पैर्लाजसमायुतम् ४०
सदशाहत वस्त्रैश्च अगडजादीनि कल्पयेत्
अगडजं मुगडजं चैव रोमजं वा मजं तथा ४१
चर्मजं शयनं पञ्चकल्पयेत् कल्पवित्तमः
अगडजं चेति जानीयात् पक्षिणां पिञ्छसम्भवम् ४२
कार्पासादि कृतं यत्तु मुगडजं चेति तत्स्मृतम्
आविकादि मृगाणां तु रोमजं रोमजं भवेत् ४३
कौशेयं वामजं प्रोक्तं सिंहव्याघ्रेण चर्मजम्
चर्मजं तु विजानीयादलाभे सतिबुद्धिमान् ४४
पञ्चवक्त्रेण सम्भाव्य स्थगिडलोपरियत्नतः
पूर्वोक्त लक्षणैर्युक्तं त्वादिशैव कुलोद्भवः ४५
शैवतन्त्रं विधानज्ञः समयाचारपालकः
सुस्नात्वा चम्यविधिवत् भस्मस्नानमनन्तरम् ४६
सर्वाभरणसंयुक्तः सूक्ष्मवस्त्रधरस्तथा
शुक्लमाल्यानुलेपश्च शुक्लोष्णीषः सुवस्त्रभृत् ४७

ईदृग्भूतः शिवश्वेतः सर्वकर्मसमाचरेत्
चतुरश्रावसुवृत्ता वा तजापट्टिका स्मृताः ४८
पट्टिकावेदिका मध्ये स्थापयेन्मन्त्रवित्तमः
पञ्चगव्योषितं लिङ्गं शुद्धिं कृत्वा पुनः पुनः ४९
दर्भमूले भदन्ताग्रे वराहस्य तु कर्षणे
वल्मीके वृषङ्गाग्रे नद्यां वै पर्वते तथा ५०
समुद्रे च समासेन मृदं ग्राह्यविचक्षणः
अष्टमृत् सलिले नैव स्नानं तत्र समाचरेत् ५१
व्योमव्यापि सहस्रेण स्नात्वाद्भिस्तु पुनः पुनः
पञ्चगव्येन संस्नाप्य गन्धपुष्पादिनार्चयेत् ५२
मधुक्षीर घृताश्चैव सहिरण्यं सपुष्पकम्
सौवर्णं रजतं ताम्रमथवा काम्समेव वा ५३
प्रत्येकं प्रस्थसम्पूर्णं कृत्वा प्रात्रत्रये बुधः
तैर्द्रव्यैर्बीजमन्त्रेण हेमसूच्या तु लेखयेत् ५४
बध्वा प्रतिसरं पश्चात् स्वस्तिपुण्याह घोषणैः
सौवर्णं राजतं वापि क्षौमं कार्पासजं तु वा ५५
लिङ्गमध्ये तु तां बध्वा पूजांशेन शिवेन वै
शयने शाययेल्लिङ्गं प्राक्शिरश्चोर्ध्ववक्त्रकम् ५६
उत्तराच्छादनं वस्त्रैर्दर्भैश्चैव परिस्तरेत्
हृदा सुगन्धपुष्पाद्यैः पूजयित्वा समाहिताः ५७
पिण्डिकामधिवास्यैव लिङ्गवल्लिङ्गमूलतः
दिक्षुतोरणकुम्भानि लोकपालाधिपानि तु ५८
शकूर्चान् सा पिधानांश्च वस्त्रयुग्मसमावृतान्
मङ्गलाङ्कुरसंयुक्तान् स्थापयेत् तु समं ततः ५९
प्रधानकुम्भमादाय द्वात्रिंशत् सप्तपूरितम्
बिम्ब प्रभा समोपेतं तदर्धं वर्धनीं तथा ६०

सूत्रैरावेष्टयित्वा तु एकसूत्रे तु दोषकृत्
त्रिसूत्रं शान्तिकं प्रोक्तं यवमानान्तरं स्मृतम् ६१
सूत्रान् सूत्रान्तरं तत्र गन्धतोयैः सुपूरितम्
वस्त्रयुग्मेन संवेष्ट्य सकूर्चं सा पिधानकम् ६२
चूतपल्लव पुष्पैश्च वितानोपरिशोभितम्
पञ्चरत्नं तु कुम्भे च वर्धन्यां हेमसंयुतम् ६३
ब्राह्मणानां हितार्थं तु सृक्स्त्रुवं च कमण्डलुम्
क्षत्रियाणां हितार्थं तु गजाश्वरथ सैनिकान् ६४
वैश्यानां तु तुला प्रोक्तं शूद्राणां युगलाङ्गलौ
एतानि विन्यसेद् विद्वान् वर्धन्यां शिवकुम्भके ६५
तरुणालय पूर्वे तु स्थापयेत् स्थण्डिलोपरि
बाललिङ्गगतं देवं कुम्भे विन्यस्य बुद्धिमान् ६६
तस्य पीठगतां देवीं वर्धन्यां तु समावहेत्
विद्येश्वराधिपानष्टौ वस्त्रहेमास्त्रसंयुतान् ६७
कूर्चाक्षतवितानास्यान् फलपल्लवशोभितान्
शिवकुम्भस्य परितः संस्थाप्यकलशान् बुधः ६८
विद्येश्वरान् परीवारान् द्वारपालादिदेवताः
तत्तत् कुम्भे समाहूय तत्तन्मन्त्रेण मन्त्रवित् ६९
रात्रौ होमं तु कर्तव्यं सर्वमन्त्रैः पृथक् पृथक्
तरुणं लिङ्गमुत्थाप्य शैवा लौघे जले क्षिपेत् ७०
दारुजं चाग्निनादग्धमथवाप्सु विनिक्षिपेत्
शिवशक्तिं च विच्छेद्ये शाच्छिरोधार्य यत्नतः ७१
पिञ्छचामरसंयुक्तं छत्रध्वजवितानकैः
कुर्याच्छब्दं महाघोषैर्नृत्तगेय समायुतैः ७२
प्रदक्षिणं विमानं तु कृत्वा वर्धनिधारयेत्
वेदिकायामथैशाने स्थापयेत् स्थण्डिलोपरि ७३

शिवं ब्रह्माङ्गविद्याङ्ग विद्येश्वरगणेश्वरान्
लोकपालास्त्रसंयुक्तान् समन्त्रैरेव पूजयेत् ७४
गेयनृत्तसमायुक्तं वाद्यध्वनिसमायुतम्
ऋग्यजुः सामाथर्वा श्च पूर्वाद्यध्ययनं तथा ७५
जपस्तोत्र समायुक्तं ततो होमं समाचरेत्
पूर्वोक्तविधिना हुत्वा कुण्डेष्वेतेषु बुद्धिमान् ७६
सर्वद्रव्यं समानं स्यात् समिधस्तु पृथक् शृणु
शमीद्ध्मं पूर्वदिग्भागे आग्नेय्यां तु वटं तथा ७७
याम्ये वै कङ्कतं चैव प्लक्षं नैर्ऋतिगोचरे
अश्वत्थं वारुणे भागे औदुम्बरमथानिले ७८
बिल्वं वै सौम्यदिग्भागे ह्यर्कमीशानगोचरे
एवं सर्वाग्निकुण्डानां शिवाग्नेस्तु पलाशकम् ७९
विद्याङ्गैश्च शिवाङ्गैश्च हुत्वा लिङ्गं तु संस्पृशेत्
प्रत्येकं तु शतं साज्यं स्पर्शाहुतिमथाचरेत् ८०
शिवोहमिति सम्भाव्य हुत्वा यत्नाच्छिवात्मिकम्
आकाशो वायुरग्निश्च जलभूमिं दुरेव च ८१
सूर्यात्ममूर्तयश्चाष्टौ भवादिमूर्तिधारकाः
भवः शर्वः पशुपति रुग्रोरुद्रस्तु भीमतः ८२
महानीशश्च विख्यातो मूर्तिधाराः प्रकीर्तिताः
कुण्डेष्वग्निं प्रतिष्ठान्तं संरक्ष्येन्धनपूर्वकैः ८३
प्रभाते सुमुहूर्ते तु रत्नन्यासं समारभेत्
एकविंशतिभिर्भागैर्द्वारतारं विभज्य वै ८४
मध्यमांशं षडंशं तु सविभज्य द्विभागिकम्
वामे व्यपोह्य यत् सूत्रं ब्रह्मसूत्रमिति स्मृतम् ८५
तन्मध्ये स्थापयेल्लिङ्गं तन्मध्ये स्थापयेच्छिवम्
अन्यथा स्थापिते लिङ्गे नृपराष्ट्राहितावहम् ८६

आदौ कूर्मशिलां न्यस्त्वा ब्रह्मभागान्वितां दृढाम्
न्यसेत् ब्रह्मशिलामूर्ध्नि नन्द्यावर्तशिलान्विताम्  ८७
स्थलं सम्यक् प्रकुर्वीत स्नेहद्रव्यान्वितं दृढम्
माणिक्कं चैव वैडूर्यं  निलं मरकतं तथा  ८८
मौक्तिकं चैव गोमेदं वज्रं पुष्यं प्रवालकम्
एतानि नवरत्नानि मध्यमादिविनिक्षिपेत्  ८९
यवनीवारमुद्गां च तिलं वै सर्षपं तथा
शालिप्रियङ्गुश्यामाश्च कुलुत्थो नवबीजकम्  ९०
हरितालं तथा श्यामं चन्दनं चमनः शिलाम्
सौराष्ट्रं पारतं सीसं गैरिकं हेममाक्षिकम्  ९१
एवं स्मृत्वा क्षिपेद्विद्वान् प्राणधा त्विन्द्रियादिके
रत्नानि प्राणसंज्ञानि सुबीजानीन्द्रियाणि च  ९२
धातूनिधातवः प्रोक्ता बीजमुख्येन विन्यसेत्
गन्धपुष्पादिनाभ्यर्च्य नन्द्यावर्तशिलां न्यसेत्  ९३
शयनाल्लिङ्गमुत्थाप्य त्यक्त्वा पर्युषितानि च
अर्घ्यं  दत्वा यथा न्यायं हृदयेन स पुष्पकम्  ९४
पश्चिमाभिमुखं कृत्वा लिङ्गं वै तु हृदा बुधः
आचार्यमूर्तिपांश्चैव अध्ये तॄन् परिचारकान्  ९५
दैवज्ञं मन्त्रजप्तृंश्च महेः पूज्यो यथार्हकैः
आचण्डालमथां नाद्यं कारयेच्छक्तितः क्रमात्  ९६
रथो परिस्थितं लिङ्गं प्रासादं तु प्रदक्षिणम्
आचार्योऽग्रं तु संस्पृष्ट्वा मूर्तिपास्तु स्वकादिशम्  ९७
कर्तामुलं तु संस्पृष्ट्वा चाग्रे वर्धनिधारया
कृत्वा प्रदक्षिणं देवं स्थित्वा द्वारसमीपके  ९८
गन्धपुष्पादिनाभ्यर्च्य अर्घ्यं  दत्वा हृदा बुधाः
ततः प्रवेशयेल्लिङ्गं गर्भगर्ते सुखं यथा  ९९

सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते
ध्यात्वा सदाशिवं देवं मूलमन्त्रमनुस्मरन्  १००
लिङ्गं संस्थापयेत्तत्र किञ्चिदीशानमाश्रितम्
नन्द्यावर्तशिलाभिस्तु बध्वापीठं तु योजयेत्  १०१
स्वयोनिं पीठमुख्यं तु अवा चैवाष्टकं दृढम्
स्थपतौ बुद्धिमात्रेण स्थापकस्तु समाचरेत्  १०२
अष्टबन्धं ततः कृत्वा जतुगुल्गुलु सिद्धियुक्
सर्जं च स्फटिकं चैव शर्करा कुरु विन्दकम्  १०३
तैलं वै चाष्टसंमिश्रं दग्ध्वाचक्कणवत् बुधः
लिङ्गपीठान्तरे क्षिप्त्वा सुदृढं च समं ततः  १०४
पूजांश षोडशांशैक विस्तारेण समं ततः
तत्पादमुच्छ्रयं प्रोक्तमष्टबन्धमिदं मतम्  १०५
लिङ्गपीठान्तरं स्निग्धं वज्रबन्धेन वा पुनः
आचार्यस्तु पुनः स्नात्वा मन्त्रसन्नद्धविग्रहः  १०६
पुण्याहं वाचयित्वा तु स्नापयेत् पञ्चगव्यकैः
गन्धपुष्पादिनापूज्य कल्पयित्वा तथासनम्  १०७
आवाह्याराध्यमन्त्रज्ञः सकली करणं शिवम्
मन्त्रसन्तर्पणं कृत्वा पूर्णाहुतिमथाचरेत्  १०८
कुम्भपूजां विशेषेण कृत्वा विज्ञाप्यपूर्वकम्
आचार्यं पूजयेत् तत्र यथा विभवसंयुतम्  १०९
उष्णीषमुत्तरीयं च परिधानं तथैव च
हेमाङ्गुलीयकैश्चैव गन्धपुष्पं तथैव च  ११०
मकुटं कुण्डलं चैव हारकेयूरकं तथा
कटकं कटिसूत्रं च आचार्यस्य प्रदापयेत्  १११
आचार्यदक्षिणा हेमकन्यसं दशनिष्ककम्
मध्यमं द्विगुणं तस्य उत्तमे त्रिगुणं भवेत्  ११२

एवं सम्पूज्यविधिवत् सवत्साङ्गाश्च दापयेत्
आचार्यमनसस्तुष्टिर्देवस्य प्रीतिकारणम् ११३
मूर्तिपानां पृथग्वस्त्रैर्हैम निष्कं च दापयेत्
होमशेषं ततो नेयं हृदयेन विचक्षणः ११४
कुम्भस्थ देवदेवेशं विज्ञाप्य विधिपूर्वकम्
आचार्यः कुम्भमुत्थाप्य शिष्येनोत्थाप्य वर्धनीम् ११५
मूर्तिपैस्त्वथ कुम्भानि प्रासादं तु प्रदक्षिणम्
विश्रम्य द्वारदेशे तु दद्यादर्घ्यं हृदा गुरुः ११६
ततः प्रविश्य तल्लिङ्गमुत्तराभिमुखः स्थितः
त्रिपादिकायामुपरि विन्यस्त्वा शिवकुम्भकम् ११७
षडध्वासनं तु संकल्प्य लिङ्गमुद्रां प्रदर्शयेत्
पुष्पगन्धस्तिले तैलं यद्वत्तद्वत्स्थितप्रभुः ११८
कुम्भस्थ देवदेवेशं लिङ्गमध्ये तु योजयेत्
शिवमन्त्रं समुच्चार्य शिवमात्मनि भावयेत् ११९
तज्जलेनाभिषेकं यत् तल्लिङ्गे प्राण उच्यते
तच्छक्ति व्यापकं स्मृत्वा तद्वच्छक्तिं तु पीठके १२०
सर्वावरणदेवांश्च पूर्ववत् सम्प्रकल्प्य वै
कलशस्थानथावाह्य तज्जलेनाभिषेचयेत् १२१
गन्धपुष्पं च धूपं च दीपं दत्वा यथा क्रमम्
द्वारपालादि पीठान्तं परिवाराण्यशेषतः १२२
तत्तत् कुम्भगतां देवां तत्तत्स्थाने निवेशयेत्
पायसं कृसरं गौल्यं मौद्गं शुद्धां नमेव च १२३
पञ्चवर्णहविर्दद्यात् परिवारबलिं तथा
उत्सवं कारयेत्तत्र सायादिविधिपूर्वकम् १२४
प्रतिष्ठाविधिरेवोक्ता ततः सम्प्रेक्षणं शृणु
प्रतिष्ठाविधिना सर्वं कर्तव्यं युक्तितः क्रमात् १२५

पूर्ववद्वेदिका मध्ये कुम्भानि विधिवं न्यसेत्
कुम्भसंस्थापनात्पूर्वे लिङ्गशुद्धिं विशेषतः १२६
पिण्डकां च स्थलं चैव पञ्चशुद्धिक्रमेण तु
सर्वगन्धैर्विलिप्याथ वस्त्रैरेवावकुण्ठयेत् १२७
सम्प्रोक्षणाह्वयेनैव पुरो वाहनकं तथा
एकलिङ्गविधिस्त्वेषा पञ्चलिङ्गविधिं शृणु १२८
मध्ये सदाशिवं स्थाप्य पुरुषं पूर्वतः तथा
अघोरं दक्षिणे स्थाप्य सद्यं पश्चिमतः तथा १२९
उत्तरे वा देवं च अथ कोणेषु वा बुधः
कोणेषु च महादिक्षु संवीक्ष्याथ सदाशिवम् १३०
पृथक् पृथक् विमानानि शेषकर्म च पूर्ववत्
पञ्चलिङ्गविधिर्येषा नवलिङ्गविधिं शृणु १३१
तेषां विमानं पूर्वोक्तं अष्टदिक्षु विधीयते
सदाशिवं समीक्ष्यैव दिशासु विदिशासु च १३२
नवलिङ्गविधिप्रोक्तं सहस्त्राणां विधिं शृणु
मध्ये सदाशिवं प्राग्वद्विद्येशानां पृथक् पृथक् १३३
चतुर्विं शच्च तल्लिङ्गं विद्येशानावृतं बुधः
सादाख्यस्य वदन्येषां नामरूपाणि कीर्तिताः १३४
तत्तत्स्वनाममन्त्रेण संस्थाप्य विधिचोदितः
अष्टाहे षोडशाहे वा मासे वा विधिपूर्वकम् १३५
एकलिङ्गविधौ यद्वत् तद्वत् सर्वं समाचरेत्
सादाख्यं लिङ्गरूपेण अन्वलिङ्गं तु नेष्यते १३६
एवं यः कुरुते मर्त्यः शिव सा युज्यमाप्नुयात्
लिङ्गसंस्थापनं प्रोक्तं सकलानां विधिं शृणु १३७

इति लिङ्गप्रतिष्ठाविधिपटलः षट्त्रिंशत्तमः ३६

स्वायम्भुलिङ्गागमम्

कारणं वा तुलं चैव सूक्ष्मं च सुप्रभेदकम्
आगमं चतुर्भेदं स्वयम्भूपुजितं क्रमात्

दैवलिङ्गागमम्

कामिकं विजयं चैव स्वायम्भुवमथानलम्
पूजयेद्देवके लिङ्गे कल्पयेत् कल्पवित्तमः

दिव्यलिङ्गागमम्

चिंत्यं चैव सहस्त्रं च दीप्तं चाप्ययुतं तथा
दिव्यलिङ्गार्चना प्रोक्तं सर्वकर्मसमाचरेत्

ऋषिलिङ्गागमम्

योगजं मकुटं चैव निश्वासं रौरवं तथा
आर्षकं पूजयेद्धीमान् अर्धयामे विशेषतः

मानुषलिङ्गागमम्

वीरं च विमलोद्भेदं चन्द्रज्ञानं च बिम्बकम्
पूजयेत्परमं चैव मानुषे देशिकोत्तमः

राक्षसलिङ्गागमम्

प्रोद्गीतं ललितं चैव सिद्धिं संतानमेव च
राक्षसे प्रोक्षयेल्लिङ्गमासुरं च प्रपूजयेत्

बाणलिङ्गागमम्

पारमेश्वरसंख्योक्तं अंशुमान् किरणं तथा
बाणलिङ्गार्चनं चैव गणपञ्चप्रपूजयेत्
मानुषं योजनादर्वाक् पौराणं दशयोजनम्
शतयोजनमार्षं  च सहस्त्रं दैविकं भवेत्

सकलप्रतिष्ठाविधि पटलः

सकलानां प्रतिष्ठां तु वक्ष्येऽहमधुना शृणु

मूर्तीनामीश्वरादीनां सामान्यस्थापना विधिम् १
द्वादश प्रतिमानां तु सामान्यमिदमुत्तमम्
चलानामचलानां च सर्वेषां स्थापनं समम् २
चलस्य तु शिलामृद्भ्यां शृणुमत्स्थापना विधिम्
रत्नन्यासं जले वासं शयनं तु प्रदक्षिणम् ३
चित्राभासे तु वर्ज्यं हि रत्नसेतु समाचरेत्
चित्राभासे तु कर्तव्यं दर्पणोपरियत्नतः ४
त्रिपाद्यूर्ध्वे जलद्रोण्यां स्त्रावयेद् दर्पणोपरि
जलाधिवासं स्नपनं नवमेव समाचरेत् ५
सकलानां तु सर्वेषां सममेतद् भवेद्ध्रुवम्
कृत्वाङ्कुरार्पणं पूर्वं प्रागुक्तविधिना पुनः ६
प्रासादस्य पुरोभागे मण्डपे समलङ्कृते
स्थण्डिलं तत्र कुर्वीत शालिभिर्विमलैस्तथा ७
गन्धपुष्पादिना पूज्य पद्मपीठस्य मध्यमे
न पापटानि कर्तव्यं रत्नानि विधिवं न्यसेत् ८
माणिक्कं चैव वैडूर्यं निलं मरतकं तथा
मौक्तिकं चैव गोमेदं वज्रं पुष्यं प्रवालकम् ९
एतानि हृदये नैव मध्यमादीनि विन्यसेत्
तिलमुद्गारनीपांश्च तिलं वै सर्षपं तथा १०
श्यामं शालिकुलुत्थं च प्रियङ्गुनवबीजकम्
सुवर्णेन कृतं चेह बीजानि कवचेन तु ११
अञ्जनं हरितालं च श्यामं चैव मनः शिलाम्
पारतं चैव सौराष्टं सिद्धकं गैरिकं तथा १२
स्थापकं शिवमन्त्रेण पीठोर्ध्वे पटमध्यमे
प्रतिमां तत्र संयोज्य सुस्निग्धं कारयेत् तथा १३
ततः सिकतचूर्णैश्च कृत्वा गोचर्मपट्टिकैः

यथा निर्मलतां याति घर्षयेत् प्रतिमां ततः १४
ततो क्षिमोचनार्थं तु स्थरिडले पूर्ववत्कृते
बिम्बं विन्यस्य तस्योर्ध्वे पटेन महता वृते १५
अभितः कलशानष्टौ कूर्चाक्षत सपुष्पकान्
विन्यस्य तेषु दिक्पालान् समभ्यर्च्य यथा विधि १६
आचार्यः शिल्पिना सार्धं नेत्रमन्त्रमनुस्मरन्
हेम सूचि प्रहाराभ्यां शैलजे लोहजे तथा १७
वर्णयत्नं तु संलिख्य चित्राभासे तु मृरामये
भ्रूरेखां प्रतिमां कृत्वा पक्ष्मरेखा तृतीयकम् १८
श्वेतमराडलमालिख्य तन्मध्ये कृष्णमराडलम्
कृष्णस्याभ्यन्तरे विद्वान् ज्योतिर्मराडलमालिखेत् १९
सुव्यक्तं शिल्पिनाकार्यं नेत्रे मन्त्रं जपेत् गुरुः
स्थापकं स्थपतिं पूज्य वस्त्रसौवर्णभूषणैः २०
सम्पूज्यतोषयित्वा तु कृत्वा शिल्पि विसर्जनम्
मध्वाज्याभ्यां तु सन्तर्प्य सौवर्णेन तु दूर्वया २१
नेत्राणि नेत्र मन्त्रेण क्षीरेणैवं समाचरेत्
पात्रत्रयं तु संग्राह्य ताम्रजं कांसमेव वा २२
तेषु क्षीराज्यमधुभिः सौवर्णं राजतैः सह
पात्राण्यापूर्यतैरेव प्रत्येकं प्रस्थमानतः २३
मधुना दक्षिणे नेत्रे दर्शयेत् भास्करात्मके
सर्पिषागविवामे तु चन्द्रात्मकमितः स्मरन् २४
पयसाचोर्ध्वनेत्रे तु दर्शयेदनलात्मकम्
तत्तन्मन्त्राण्यनु स्मृत्यतैस्तु सम्प्रोक्षयेद्गुरुः २५
सौवर्णेन खयुक्तास्तु मध्यतर्जन्यनामिकाः
तर्जनी दक्षिणे चोर्द्ध्वे मध्यमा नामिकान्यके २६
संयोज्य हृदयाद्यैश्च सिच्यगन्धाम्बुना ततः

पृच्छन्नपटमावर्ज्य सुपुष्टाङ्गांसु यौवनाम् २७
गोधेनुहव्यमन्त्रेण दुग्ध्वाक्षीरांसवत्सकाम्
गांसमभ्यर्च्य सावित्र्या दर्शयेत्तु विचक्षणः २८
दर्शयेत्तु द्विजान् पश्चात् द्विजानन्यान्विशेषतः
एवं सकलं बिम्बानां सममेतत् प्रकीर्तितम् २९
येन तस्य विशुद्धिः स्यात् तेन तस्य विशोधयेत्
सर्वालङ्कारसंयुक्तं कृत्वा ग्रामप्रदक्षिणम् ३०
जलाधिवासनं कुर्यात्कण्ठमात्रे जले शुभे
चतुष्पादसमायुक्ते वितानध्वज संयुते ३१
दर्भमालासमायुक्ते प्रपायाञ्जलमध्यमे
वस्त्रयुग्मपरिच्छन्नं दर्भैः पुष्पैश्च वेष्टितम् ३२
पीठे वा फलकायां वा प्राक्शिरस्कं सुशाययेत्
पञ्चरात्रं त्रिरात्रं वा चैकरात्रमथापि वा ३३
ततो मण्डपसंस्कारं यथा विभवविस्तरम्
पूर्वे वा दक्षिणे वापि पश्चिमे वा मनोरमे ३४
दशभा दशहस्तं वा षोडश स्तम्भसंयुतम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ३५
दर्भमालासमायुक्तं पुष्पमालावलम्बितम्
वितानोपरि सच्छन्नमष्टदिग्ध्वजलम्बितम् ३६
मङ्गलाङ्कुर संयुक्तं मुक्तादामैर्विभूषितम्
मण्डपेन वकोष्ठे तु मध्यभागे विशेषतः ३७
उपवेदीं तु कर्तव्या तालोच्छ्राया सुविस्तृता
आलयाभ्यन्तरे वेदीं कारयेत् सुदृढांशुभाम् ३८
हस्तमात्रसमुत्सेधां दर्पणोदरसन्निभाम्
अष्टदिक्षु च कुण्डानि कारयेत् सुप्रमाणतः ३९
पूर्वे तु चतुरश्रं तु वह्निपिप्पलपत्रवत्

अर्धचन्द्रं तु याम्यायां नैर्ऋत्यां तु त्रिकोणकम्  ४०
वृत्तं तु वारुणे भागे षडश्रं वायुगोचरे
पद्मं चैवोत्तरे भागे ऐशान्यामष्टकोणकम्  ४१
ईशान ऐन्द्रयोर्मध्ये वृत्तकुण्डं तु कारयेत्
मण्डपस्योत्तरे भागे स्नानमण्डपमेव वा  ४२
स्नानवेदीं तु तन्मध्ये त्रिद्व्येककरसम्मिताम्
हस्तमात्रसमुत्सेधां सुसमां सुदृढां शिवाम्  ४३
त्रिमेखला समायुक्तां भूताब्ध्यग्न्यङ्गुलैर्मिताम्
अथवाष्टाङ्गुला भद्रामेखलैका समन्विता  ४४
गोमयालेपनं कृत्वा शोषणं पावनं तथा
ब्रह्मणान् भोजयित्वा तु वास्तुहोममतः परम्  ४५
पर्यग्निकरणं कृत्वा प्रासादं यागमण्डपम्
पुण्याहं तत्र कर्तव्यं प्रोक्षयेत् पञ्चगव्यकैः  ४६
शयनं कल्पयेद्विद्वान् वेदिकोपरिशालिभिः
अष्टद्रोणैस्तदर्धैर्वा तदर्धै स्तण्डिलैस्तथा  ४७
तन्मध्येऽष्टदलं पद्मं तण्डुलेन तु कारयेत्
अण्डजाद्यैस्तु संकल्प्य यत्नतो पर्युपर्युतः  ४८
अलाभे चाण्डजादीनां वस्त्रैः पञ्चभिरास्तरेत्
तदूर्ध्वे नवशक्तिस्तु इच्छाज्ञानक्रिया अपि  ४९
गन्धपुष्पादिना पूज्यमङ्गलाङ्कुरशोभितम्
जलाद्बिम्बं समुत्थाप्य पञ्चगव्योषितं तथा  ५०
एकरात्रं तु कर्तव्यमथवा स्नापयेत् तु वै
स्नानवेद्यास्तु तन्मध्ये संस्थाप्य प्रतिमां ततः  ५१
अष्टमृत् सलिलेनैव स्नात्वाभ्यर्च्य हृदा बुधः
घृतः शिरोर्पणं कृत्वा साक्षितः हेमदूर्वया  ५२
सौवर्णं रजतं वापि हृदयेन तु मन्त्रतः

कौतुकं दक्षिणे हस्ते बन्धयेद्रक्षयान्वितम्  ५३
गन्धाद्यैश्चैव सम्पूज्य नीत्वा वै वेदिकोपरि
पश्चिमाभिमुखं देवं संयजेद्धृदयेन तु  ५४
शयने शाययेद् देवं प्राक्च्छिरस्कं मुखोर्ध्वकम्
ईश्वर प्रतिमां चेत्तु शक्तिं च सहवामतः  ५५
रत्नन्यासादिकर्माणि सहैवात्र समाचरेत्
अन्यानि प्रतिमानिह युक्तायुक्तं सुबुद्धिमान्  ५६
उत्तराच्छादनं कृत्वा वस्त्रैर्दर्भैस्तु पुष्पकैः
विद्येशकलशानष्टौ वज्राद्यस्त्रान् सहैमकान्  ५७
वस्त्रयुग्मपरिच्छन्नान् सकूर्चान् सापिधानकान्
तत्तन्मन्त्रेण बिम्बस्य परितोष्टसुदिक्षु च  ५८
संस्थाप्य बिम्बशिरसच्छैशाने कुम्भकेनकम्
षोडशावृतसम्पूर्णं बिम्बप्रभसमन्वितम्  ५९
त्रिसूत्रैर्वेष्टयित्वा तु सूत्रान् सूत्रान्तरं यवम्
पञ्चरत्नसमायुक्तं शुद्धाम्बुपरिपूरितम्  ६०
सचूतपल्लवोपेतं सकूर्चं सा पिधानकम्
वस्त्रयुग्मेन संवेष्ट्य स्थण्डिलोपरि विन्यसेत्  ६१
विप्राणां तु हितार्थं तु यज्ञसूत्रं च सृक्स्त्रवम्
क्षत्रियाणां हितार्थं तु गजवाजिरथान् बुधः  ६२
तुलां च मानपात्राणि वैश्यानां तु हिताय वै
शूद्राणां तु हितार्थं तु वृषलाङ्गलसंयुतम्  ६३
कृत्वैतानि सुवर्णेन षडङ्गैस्तु विनिक्षिपेत्
यद्रूपं प्रतिमं स्थाप्यं तत्तद्रूपस्य भावयेत्  ६४
कुम्भमध्ये तु संस्थाप्य तस्य मूलमनुस्मरन्
षड्विधं ध्यानमावाह्य तानि संकल्प्य तच्छिवे  ६५
पूर्वोक्तेनैव मार्गेण मन्त्रन्यासं तु कारयेत्

पूजयेत् गन्धपुष्पाद्यैर्हृदयेन विचक्षणः ६६
वर्धनीं बीजमुख्येन तद्वत्संस्थाप्य वामके
अभितश्चोपवेद्यां तु संस्थाप्यकलशाष्टकान् ६७
वस्त्रकूर्चाक्षतोपेतान् ससूत्रान् पल्लवान्वितान्
हेमवज्रादिकोपेतान् लोकपालाधिदेवतान् ६८
सम्पूज्य स्वस्वमन्त्रेण द्वारकुम्भांस्तु विन्यसेत्
अष्टमङ्गलरूपाणि वेदिकायास्तु बाह्यतः ६९
संस्थाप्य स्वस्वनाम्नार्च्य ततो होमं समाचरेत्
कृत्वा चाध्ययनं दिक्षु ऋग्यजुः सामाथर्वकैः ७०
नवपञ्चत्रयं वापि एकाग्निरथवा पुनः
प्राग्याम्येन्दुषु कुण्डेषु त्रेताग्निं सम्यगाचरेत् ७१
सदाशिवेश्वरौ रुद्रः क्रमात् कुण्डाधिपाः स्मृताः
त्रयो वैकाग्निके विद्वाञ्छिवाग्निं पूर्वतो हुनेत् ७२
शिवाग्निं प्रथमं हुत्वा मूर्तिहोमं ततः परम्
शिवाद्यवनिपर्यन्तं ध्यात्वा सर्वगतं प्रभुम् ७३
तत्तद्रूपान् स्वमात्मानं स्मृत्वाग्निं संयजेत् बुधः
आदित्यः पूर्वतो मूर्तिर्भवस्त्रिमूर्तिधारकः ७४
आग्नेय्यामग्निमूर्तिस्तु धारकः शर्व उच्यते
मूर्तिधारः पशुपतिः पृथिवीमूर्तिदक्षिणे ७५
आकाशे नैर्ऋते मूर्तिरुद्रस्तन्मूर्तिधारकः
आपोवरुणदिक्भागे रुद्रो नाम सुधारकः ७६
वायुर्वै वायुदिग्भागे भीमा वै मूर्तिधारकः
उत्तरे सोममूर्तिस्तु महान्यै मूर्तिधारकः ७७
मूर्तिधारस्तथेशस्तु आत्मानं मूर्तिरिव च
एवं विधानतस्त्वष्टमूर्तयो मूर्तिधारकाः ७८
प्रधानस्य शिवः प्रोक्तस्तत्तद्ध्यानपरायणः

प्राग्वदग्निमुखं कृत्वा पश्चात् द्रव्यैस्तु होमयेत् ७९
काष्ठाज्य समिदन्नादिलाजासक्तु तिलानि च
यवसिद्धार्थ मुद्गानि मधुनैकादशानि च ८०
तूष्णीं तदिन्धनं कृत्वा मूलेनैव घृताहुतिः
समिधं बीजमुख्येन चरुसद्येन होमयेत् ८१
लाजा हृदय मन्त्रेण सक्तुं च शिरसा पुनः
शिखया तु तिलं हुत्वा यवान्वैकवचेन तु ८२
सिद्धार्थं बहुरूपेण मुद्गमस्त्रेण चैव हि
नेत्रेण मधुहोतव्यं जुहुयाद् व्याहृतिं ततः ८३
पलाशसमिधं पूर्वे आग्नेय्यास्तु वै कङ्कतम्
वटं याम्ये तु विज्ञेयं अश्वत्थन्निर्ऋृतौ तथा ८४
प्लक्षं तु वारुणे गाभे चौदुम्बरं तु वायवे
अर्का वै सौम्यदिग्भागे बिल्वमीशानगोचरे ८५
इन्द्र ईशानयोर्मध्ये पलाशसमिधं भवेत्
द्रव्यं प्रतिसहस्रं वा तदर्धं वार्धमेव वा ८६
अष्टोत्तरशतं वापि पञ्चाशत् पञ्चविंशती
षोडशा हुतिकं वापि द्रव्यं प्रतिसमाचरेत् ८७
ब्रह्माङ्गैरेव हुत्वा तु तत्तत्स्थाने च संस्पृशेत्
तदन्ते व्याहृतिं हुत्वा निद्रां रात्रौ तु वर्जयेत् ८८
प्रभाते विमले विद्वान् प्रतिष्ठा लग्नपूर्वके
आचार्यं पूजयेत् पूर्वं वस्त्राङ्गुलीयकादिभिः ८९
हेमपुष्पोपवीतं च कुण्डलं कटकं तथा
दासीं दासांश्च गाभूमिमाचार्याय प्रदापयेत् ९०
कन्यसं दशनिष्कं च द्विगुणं त्रिगुणं तथा
दक्षिणां कन्यसादीनि देशिकस्य विधीयते ९१
प्रत्येकं मूर्तिपान् पूज्यदेशिकस्याष्टभागतः

दैवज्ञं वास्तुहोतारं मूर्तिपान् त्रिगुणेन वै ९२
मूर्तिपस्य त्रिपादेन तद्धयेतृंश्च पृथक् पृथक्
तेषां हेमाङ्गुलीयं च वस्त्रयुग्मं च दापयेत् ९३
भक्तानां परिचाराणां दापयित्वा स्वशक्तितः
दीनान्धकृपणानां च अन्नपानादि दापयेत् ९४
दद्यात् पूर्णाहुतिं सर्वैर्मन्त्रैर्वेदशतात्मना
होमोपरीष्टतन्त्रं च कुर्यात् सर्वे यथा क्रमत् ९५
किञ्चित्पूर्वमुहूर्तस्य उत्थाप्य शयनाच्छिवम्
सम्पूज्यगन्धपुष्पाद्यैः शङ्खदुन्दुभिनिस्वनैः ९६
सर्वालङ्कारसंयुक्तं मन्त्रन्यासमथारभेत्
शिवकुम्भं समुद्धृत्य वर्द्धनीं तु शिवाग्रतः ९७
विन्यस्त्वार्घ्यं तु दत्वाथ सकलीकृतविग्रहः
ध्यात्वा तद्रूपमग्न्यस्थं प्रतिमायां सुयोजयेत् ९८
शक्तिं वै वामपार्श्वे तु विन्यसेत् बीजमूख्यकैः
कुम्भात्तत्वं तथा बिम्बे संयोज्याङ्गानि विन्यसेत् ९९
शिवाख्योमाख्य विद्येश कुम्भैरत्राभिषेचयेत्
तदन्ते स्नपनं कृत्वा हविष्यं तु महद्भवेत् १००
उत्सवं तत्र कर्तव्यं प्रागुक्तविधिना ततः
ईश्वर प्रतिमाण्येवमुत्सवार्थं प्रकीर्तितम् १०१
द्वादश प्रतिमा प्रोक्तास्तथा चोत्सवकर्मणि
देशकाल स्वरूपान्यत् समानं सर्वमेव हि १०२
अर्चनादि क्रमान् सर्वान् शिववत् कल्पयेत् क्रमात्
सर्वेषामन्यदेवानां तत्र तद्विधिचोदितम् १०३
तथा स्वरूपमेवं स्यात् स्वस्वनामादिमन्त्रतः
सर्वेषां स्थापनान्ते तु स्नपनं चोत्सवं कुरु १०४
सकलस्थापनं प्रोक्तं तेषां सम्प्रोक्षणं शृणु

वेदिकायां शिवोमाख्य विद्येशकलशान् बुधः १०५
विन्यसेदुपवेद्यां तु लोकपालाख्य कुम्भकान्
वस्त्राणि हेमरूपाणि प्रक्षिपेत् पूर्ववत् सुधीः १०६
रत्नादिशयनान्तं च वितानैर्बिम्बकर्मणि
वस्त्रैराच्छाद्य तद्बिम्बं होमं पूर्ववदाचरेत् १०७
स्नपनं वायुदिग्भागे अन्यत्सर्वं समानकम्
योगोपयोगद्रव्याणि आचार्याय प्रदापयेत् १०८
सकलस्थापनं ह्येवं शक्तिसंस्थापनं शृणु
इति सकल प्रतिष्ठाविधिपटलः सप्तत्रिंशत्तमः ३७

## अथ शक्तिप्रतिष्ठाविधिपटलः

अथातः सम्प्रवक्ष्यामि शक्तिसंस्थापनं परम्
वह्नेरुष्णत्ववच्छक्तिरविनाभाविनी विभोः १
अमूर्तिच्छेदमूर्ताख्या समूर्तं चेत् समूर्तकम्
सदाशिव शिवौ रुद्रो विष्णुब्रह्मेति भेदिताः २
मनोन्मनीश्वरीचोमा श्रीसावित्री प्रभेदिताः
परापरमिदं भेदं लोकानुग्रहकारिणाम् ३
मनोन्मनीश्वरी चैव सहैव स्थापनं विदुः
त्रिभेदमन्यच्छक्तीनामेकयुक्तं सहेति च ४
शक्तिस्तु केवलं यत्र स्थापने त्वघमुच्यते
पूर्वं शम्भुं प्रतिष्ठाप्य शक्तेस्तु स्थापनं तथा ५
कृतो युक्तो विधानेन युक्तं तत् परिकीर्तितम्
शक्तिं शम्भुमथैकत्र स्थापनं तत्सहैव तु ६
त्रिप्रकारेषु सामान्यं मूलमन्त्रादिकं शृणु
मायाबीजं च व्योमेन सहबिन्दुं सनादिकम् ७
आदिशक्तेस्तु मूलं स्याद्बियद्वापि सबिन्दुका

षडंगास्तु समाख्यातं स्वरेव द्वितयं तथा ८
चतुर्थमष्टमं चैव द्वादशं स्वरमेव च
चतुर्दशस्वरं चैव षोडशं स्वरमेव च ९
संयोज्य हृच्छिराचूडा वर्मनेत्रास्त्रसंज्ञिका
शिरोमन्त्रे विशेषोऽस्ति सलिलार्णेन संयुतम् १०
सविसर्गमथास्त्र स्यात् विन्दुनादविवर्जितम्
आद्यास्वर तृतीयं च पञ्चमं दशमान्तकम् ११
द्वादशान्तं च पञ्चैते सद्यादि ब्रह्मपञ्चका
उच्यते गौरिगायत्री गणाम्बिकायै विद्महे १२
इत्युच्चार्य तदन्ते तु महातपायै धीमही
एवमुक्त्वा तदन्ते तु तन्नो गौरी प्रचोदयेत् १३
गौरिगायत्रि संज्ञाख्या चतुर्विं शतिकाक्षरा
मृण्मयं शैलजं चैकं शेषं लोहजमुच्यते १४
मृण्मये तु तथा नोक्तमधिवासज्जलेन तु
समानमन्यत् सर्वेषां यथा शक्तिविधीयते १५
पूर्वोक्तेन विधानेन कृत्वा तत्प्रतिमं बुधः
प्रतिष्ठादि वसात् पूर्वे कर्तव्यं चाङ्कुरार्पणम् १६
पूर्ववद्रत्नविन्यासं कृत्वा तदनुबिम्बकम्
सुस्निग्धं कारयित्वा तु नेत्रमोक्षणमारभेत् १७
हैमप्रहारसुचिभ्यां नेत्रमन्त्रेण चारभेत्
हैमप्रहारसुचिभ्यां नेत्रमन्त्रेण देशिकः १८
भ्रूरेखा प्रथमं लिख्य पक्ष्मरेखा द्वितीयकम्
श्वेतमण्डलमालिख्य ततो वै कृष्णमण्डलम् १९
ज्योतिर्मण्डलमध्ये तु कर्तव्यं शिल्पिना बुधः
शिल्पिमुद्रास्य गुरुणा कर्तव्यं कर्मचोत्तरम् २०
हिरण्य नखसम्प्रोक्तौ तर्जनीमध्यमाङ्गुली

तासां नेत्रेप्यसौधीमां छक्तिमन्त्रेण संस्पृशेत् २१
कांस्ये मधुघृताभ्यां तु सौवर्णेन तु दूर्वया
हृन्मन्त्रेण तु संसिच्य सवत्साङ्गां पयस्विनीम् २२
गौर्धेनुहव्य मन्त्रेण देशिको गां प्रदर्शयेत्
ब्राह्मणादिं जनान्सर्वान्वीक्षयित्वाक्षमन्त्रतः २३
बिम्बशुद्धिं ततः कृत्वा शुद्धतोयैर्विचक्षणः
सर्वालङ्कारसंयुक्तं कृत्वा ग्रामप्रदक्षिणम् २४
जलाधिवासनं पश्चात् त्रिरात्रं वैकरात्रकम्
चतुरश्रां प्रपां कृत्वा दर्भमालाविभूषिताम् २५
वस्त्रैरावेष्टयित्वा तु पुष्पैर्दर्भैर्विशेषतः
कण्ठमात्रे जले शुद्धे शक्तिं तत्राधिवासयेत् २६
दिग्पालाधिपकुम्भानि विन्यसेत् परितो जले
प्रतिष्ठा मण्डपं कृत्वा सर्वालङ्कारसंयुतम् २७
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमायुतम्
चतुस्तोरणसंयुक्तं दर्भमालाभिशोभितम् २८
तन्मध्ये वेदिकां कृत्वा तत्त्रिभागैकविस्तृताम्
हस्तमात्रसमुत्सेधां दर्पणोदरसन्निभाम् २९
तालमात्रसमुत्सेधामुपवेदीं प्रकल्प्य वै
तस्योत्तरसमीपे तु तद्वद् वै स्नानमण्डपम् ३०
तन्मध्ये स्नानवेदीं च तिस्रो वा द्व्येकमेखलाम्
स्थण्डिले वेदिकोर्ध्वे तु अष्टद्रोणैश्च शालिभिः ३१
तिलतण्डुलसंयुक्तं पद्ममष्टदलं लिखेत्
अण्डजाद्यैर्विशेषण संकल्प्यशयनं तथा ३२
अलाभे त्वण्डजादीनां वस्त्रः संकल्प्य पञ्चभिः
प्रागुक्तलक्षणोपेतस्त्वादिशैव कुलोद्भवः ३३
सुस्नात्वा चन्म्यविधिवत् सर्वालङ्कारसंयुतम्

नीत्वा जलोषितं बिम्बं स्नापयेत् पञ्चगव्यकैः ३४
स्नानवेद्युपरिस्थाप्य सुस्नाप्य विधिपूर्वकम्
गणाम्बिकेतिमन्त्रेण अष्टमृत्सलिलेन तु ३५
तदाम्ले लेपनाद्यैश्च बिम्बशुद्धिं यथोचितम्
गन्धपुष्पादिनाभ्यर्च्य बीजमुख्येन देशिकः ३६
ततः सुवर्णसूत्रेण बध्वा प्रतिसरं बुधः
घृतः शिरोर्पणं कृत्वा हेमदूर्वाङ्कुराक्षतैः ३७
शयने शाययेच्छक्तिं शिरः पूर्वमुखोर्ध्वतः
वस्त्रैराच्छादयित्वा तु पुण्याम्बुनि तु देशिकः ३८
स्थण्डिले तूपवेद्यां तु निष्कलङ्काञ्शुभां दृढान्
वस्त्रहेमसमायुक्तान् सूत्राक्षतसपल्लवान् ३९
लोकपालाधिपानष्ट कुम्भान् पूर्वादितः क्रमात्
आवृतान् कलशांश्चैव हैमसूत्राष्टसंयुतान् ४०
सकूर्चान् सा पिधानांश्च वस्त्रयुग्मेन वेष्टितान्
वामादिशक्ति संयुक्ता नष्टौ संस्थापयेद्धृदा ४१
गन्धपुष्पादिनाभ्यर्च्य हृदयेन विचक्षणः
वर्धनी सूत्रसंयुक्तान् वस्त्रयुग्मसमावृतान् ४२
सकूर्चां सा पिधानांश्च आदिशक्त्यधिदैवतान्
हेमपङ्कजनिक्षिप्तां नवरत्नसमायुतान् ४३
बिम्बस्य शिरसश्चैव भावे संस्थाप्यबीजतः
गन्धपुष्पाक्षताद्यैश्च सम्पूज्याग्निमथारभेत् ४४
नवपञ्चाग्निकं वापि त्रयं वा चैकमेव वा
योन्याकाराणि विधिवत् ततः कुण्डं प्रकल्पयेत् ४५
अग्न्याधानां ततः कृत्वा पूर्ववत् षोडश क्रियाम्
आहूयाग्नौ तु तच्छक्तिं बीजमुख्येन मन्त्रवित् ४६
पूर्ववत् समिधाज्यैस्तु होमं कृत्वा स्वमन्त्रतः

स्पर्शाहुतिं ततः कृत्वा तत्तन्मन्त्रेण मन्त्रवित् ४७
प्रभाते सुमुहूर्ते तु सर्वातोद्यसमायुतम्
आचार्यमूर्तिपांश्चैव दैवज्ञं सम्प्रपूजयेत् ४८
पूर्णाहुतिं ततो दत्वा बीजमुख्येन मन्त्रतः
शक्तिबिम्बन्ततोत्थाप्य स्नानवेद्युपरिन्यसेत् ४९
वर्द्धनीं तु ततोत्थाप्य देशिकश्चोत्तराननः
बिम्बस्य हृदये मूर्ध्नि नाभौ मूले तु विन्यसेत् ५०
न्यस्त्वा ब्रह्माङ्गमन्त्राणि विन्यसेत् सर्वमात्रकाः
वर्धकुम्भस्थ शक्तीश्च बिम्बे संयोज्यमूलतः ५१
बीजमुख्येन मन्त्रेण तज्जलेनाभिषिच्य वै
वामादि शक्तिकुम्भाद्भिः संस्थाप्य स्वस्वमन्त्रकैः ५२
स्नानलेपादिभिरद्भिः स्वस्वमन्त्रैर्विशेषतः
पाद्यमाचमनं चार्घ्यं दद्याद् देव्यै हृदादिभिः ५३
अभ्यर्च्य गन्धपुष्पाद्यैः सर्वालङ्कारसंयुतम्
पायसं हविषं तत्र हृदयेन प्रदापयेत् ५४
एवमेवं समाख्यातं युक्तं तत्र वदामिते
मण्डपं विधिना कृत्वा तन्मध्ये वेदिकां क्रमात् ५५
सर्वालङ्कारसंयुक्तां वितानध्वजभूषिताम्
तन्मध्ये स्थण्डिलं कृत्वा वह्निं तत्रैव संयजेत् ५६
तत्र मानुषनाहे तु उमारुद्रौ तु वारुणे
वामभागे ह्युमां न्यस्त्वा सर्वालङ्कारसंयुताम् ५७
नववस्त्रैरुमारुद्रौ प्रशान्तायेति भूषयेत्
आचार्यो ब्रह्मवद्ध्यात्वा विवाहे सर्वकर्मणि ५८
पूर्वोक्तेन विधानेन अग्न्याधानादिकं तथा
विष्णुं तत्रैव चाहूय देवीमुदकपूर्वकम् ५९
रुद्रस्य दक्षिणे हस्ते बीजमुख्येन दापयेत्

वामे श्मानं तु संस्थाप्य गौरीगायत्रिमंत्रतः ६०
देव्याः पादं च रुद्रेण स्पर्शयित्वाश्मनि न्यसेत्
शिवमन्त्रेण मन्त्रज्ञो लाजं हुत्वा त्रयं बुधः ६१
शक्तियुक्तं ततः सर्वं प्रभूतहविषं ददेत्
युक्तमेवमिदं प्रोक्तं सहैव स्थापनं शृणु ६२
आरम्भस्थापनान्तं यत्सर्वकर्म सहैव तु
सहैव इति विख्यातं चोत्सवो विधिचोदितः ६३
एवमेवं तथा प्रोक्तं लक्षः सावित्रयस्तथा
शक्तिसंस्थापनं प्रोक्तं परिवारमथ शृणु ६४
इति शक्तिप्रतिष्ठाविधिपटलः अष्टत्रिंशत्तमः ३८

## अथ परिवारविधिपटलः

अथातः सम्प्रवक्ष्यामि परिवारविधिक्रमम्
द्वारपालादि पीठान्तं परिवारमिति स्मृतम् १
द्वारस्थात् प्रथमंयिष्येत् द्वारपालां ततः परम्
वृषभं वै तृतीयं तु इन्द्रादींस्तु चतुर्थकम् २
पं चमं भद्रपीठं तु तथैव बहिरावृतम्
यत्र यत्र मुखद्वारे कवाटाभ्यां तु देशिकाः ३
तत्र तत्र विशेषेण नवधैवं विसर्जयेत्
भुजंगं च पतंगं च ऊर्ध्वाधः सम्प्रकल्प्य वै ४
उत्तरं च पताकां च तिष्ठतः सव्यवामयोः
विमलं च सुबाहुं च विन्यसेद्वामदक्षयोः ५
श्रियं सरस्वतीं चैव स्कन्दोर्ध्वाधः प्रकल्प्य वै
तस्य मध्ये तु विघ्नेशं स्वनाम्नाबासने सदा ६
स्वनामाद्यक्षरेणैव गन्धपुष्पादिभिर्यजेत्
एवं कृत्वा यथा न्यायं द्वारेद्वारे विशेषतः ७

सुदृढं वृक्षसारैस्तु कवाटौ तु सलक्षणौ
शून्यमेक कपाटं चेत् द्विकपाटे तु शान्तिकम् ८
दराडानुपरिबध्वाथ अथस्थाद्दारुजानपि
पुलकान्नर्धचन्द्रादीञ्छल्पशास्त्रोक्तमार्गतः ९
उत्सेधस्याष्टभागैक ऊर्ध्वाधस्तु घनं क्रमात्
विस्तारस्तु चतुर्भागं घनं वै दक्षिणोत्तरे १०
कपाटलक्षणं ह्येवं तत्र स्थान्प्रथमं यजेत्
द्वारे तु देवता प्रोक्ता द्वारपालां ततः शृणु ११
अभ्यन्तरग्रहद्वारे शक्तिद्वारमिति स्मृतम्
दक्षिणे ज्ञानदाशक्ति धर्मदा चैव चोत्तरे १२
एकवक्त्रो द्विहस्ते च मध्यक्षामेस्तनान्विते
कुङ्कुमाभो महाकालः परशुच्छायुधस्तथा १३
अनन्तेशः पशुपतिर्दक्षिणे द्वारपालकौ
अनन्तो रक्तवर्णस्तु वस्त्रायुधसमन्वितः १४
पशुपद्मोत्पलवर्णः शक्तिहस्तोऽग्रलोचनः
पश्चिमद्वारपालौ च दरिडमुराडीशसंज्ञकौ १५
दराडी सुरेन्द्रचापास्त्र खट्गहस्तोऽग्रदंष्ट्रकः
मुराडीकुन्देन्दुवर्णाभभिरिडपालायुधस्तथा १६
विजयश्चैव भृङ्गीशश्चोत्तरद्वारपालकौ
भ्रंशो भृङ्गश्च वर्णास्तु क्षुरिकायुधहस्तकः १७
विजयश्चेन्द्रको लोहः शूलहस्तोभयं करः
सर्वे त्रिभङ्गियुक्तश्च सर्वे कुञ्चितपादकाः १८
उग्रदंष्ट्राः सुवृत्ताश्च सर्वा निर्देशहस्तकाः
सर्वे चतुर्भुजोपेता द्विभुजा वा त्रिणेत्रकाः १९
द्विनेत्राश्चोऽग्रदंष्ट्राश्च हलपल्लवहस्तकाः
द्वारोत्सेधसमाभद्राः किरीटाद्यङ्गदोज्ज्वलाः २०

प्रासादे मराडपे द्वारे द्वारेद्वारे च कीर्तिताः
महामर्यादिभित्तिस्था द्वारगोपुर पार्श्वयोः २१
चतुर्दिक्षु विशेषेण महाकाराणि कारयेत्
संवर्तकं श्रियावर्तं कुराडोदर बृहोदरौ २२
सिंहमुखोहय मुखस्त्वेक पादस्त्वधोमुखः
श्वेतवर्णस्तथा न्यस्त्वास्त्व परांश्यामसन्निभः २३
द्विनेत्रा द्विभूजाः सर्वे शूलखट्गायुधास्तथा
भूतौ द्वौ द्वौ प्रकर्तव्यौ वासवादिप्रदक्षिणम् २४
अथाहपरिवाराणां पिठं चेदन्तरावृते
तेषां विमानमन्विच्छेत् द्वितीयेऽपि च हारके २५
। । । । । । । । आग्नेय्यां पावकं तथा
मातृंस्तु दक्षिणे भागे वीरविघ्नसमन्वितम् २६
विष्णुं वा तत्र संस्थाप्य आसीनमथवा स्थितम्
विघ्नेशन्नैर्ऋते भागे सुब्रह्मरायं तु पश्चिमे २७
ज्येष्ठायां वायुदिग्भागे श्रियं वै स्थापयेत् गुरुः
दुर्गां वै चोत्तरे कुर्यात् ब्रह्माणमथवापि वा २८
चराडेशमैशदिग्भागे भास्करं पूर्वतो दिशि
कूपस्थानं तथैशान्यामाग्नेय्यां पचनालयम् २९
अन्तरालेष्वनुक्तेषु यथा रुचिविशेषतः
शयनस्थानमाख्यातं पार्वती सहितं तथा ३०
परिवारालयं सर्वं बाह्येवाभ्यन्तरेऽपि वा
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ३१
इन्द्रादिलोकपालांश्च स्वेस्वे स्थानेऽष्टदिक्षु वै
शक्रशांकरयोर्मध्ये पित्रस्थानं विधीयते ३२
निर्ऋतिर्वरुणयोर्मध्ये चाप्सरो गण एव च
वरुणवायुदिशोर्मध्ये आदित्या द्वादशोच्यते ३३

भास्करक्षेत्रपालौ च शंकरे वा विशेषतः
चक्रपावकयोर्मध्ये अश्विन्यौ द्वौ तु विन्यसेत् ३४
आग्नेयधर्मयोर्मध्ये संस्थाप्यसप्तरोहिणीः
याम्यनैर्ऋतयोर्मध्ये पितृस्थानं विधीयते ३५
निर्ऋतिर्वरुणयोर्मध्ये पित्रस्थानं विधीयते
निर्ऋतिर्वरुणयोर्मध्ये चाप्सरोगण एव च ३६
वरुणवायव्ययोर्मध्ये मुनीनां स्थानमुत्तमम्
वायव्यसोमयोर्मध्ये चान्ते तु वसवस्तथा ३७
उत्तरेशानयोर्मध्ये रुद्रैकादश एव हि
बलिपीठं ततः कृत्वा चतुर्दिक्षु विचक्षणः ३८
बाह्याभ्यन्तरयोः पीठौ पूर्वद्वारे प्रकल्पयेत्
अन्तरे सर्वभूतांस्तु पिशाचान् बाह्यपीठके ३९
यक्षाणां दक्षिणेपीठे राक्षसानां तु पश्चिमे
अधमं हि तदग्रे तु अथवाभ्यन्तरे बुधः ४०
गर्भगेहस्य पञ्चांशे चतुष्कं चोत्तमोन्नतम्
त्रिभागं मध्यमप्रोक्तं द्विभागमधमं स्मृतम् ४१
द्वारोत्सेध समञ्ज्येष्ठं तत्त्रिभागं तु मध्यमम्
द्वाराणामधमं विद्धि उत्सेधसमविस्तृतम् ४२
उत्सेधसंविभज्याथ भागमेकोनविंशतिः
भागेनोपानमेकेन चतुर्भुजगतिस्तथा ४३
कुम्भं कृत्वा त्रिभिर्भागैस्तदूर्ध्वे केन पट्टकम्
कण्ठं कुर्यात् त्रिभिर्भागैरेके चैवोर्ध्वपट्टिका ४४
महापट्टिका द्विंशेन दलोत्सेधं गलोष्टकम्
कर्णिकाचैकभागेन प्रोक्तमुत्सेधमुत्तमम् ४५
प्रवेशनिर्गमं वक्ष्ये विस्तारं षोडशांशकम्
समस्तांशमुपानं तु मन्वन्तं जगतीं तथा ४६

भान्वंशं कुमुदं विद्यात् दिगंशं पट्टिकास्तथा
अष्टांशं कण्ठविस्तारं दशांशं चोर्ध्वपट्टिका ४७
द्वादशांशं महापट्टं वेदिकायां दशांशकम्
अष्टांशं दलविस्तारं त्रियंशेन तु कर्णिका ४८
चतुरश्रं यथा पीठं कुर्यात् पददलं विना
स्थापनान्ते त्वथैतानि पूजयेत्तु विशेषतः ४९
प्रतिष्ठाविधि मार्गेण कारयेद् देशिकोत्तमः
एवं तथोत्तमं विद्धि सर्वसिद्धिप्रदायकम् ५०
द्वारकान् भूतपीठान्तं कल्पयेच्चक्रमाद्गुरुः
सूर्यार्कवारुणेयात् तु नांशे हर्म्याणुकल्पयेत् ५१
आग्नेय्यां तु प्रकर्तव्यं च्छात्रादीनां तु मण्डपम्
नैर्ऋत्यां दिशि कर्तव्यं धर्मश्रवणमण्डपम् ५२
गीताभ्यां सर्वविख्यातं वायव्यां तु विशेषतः
यागानामुत्सवादीनां ऐशाने मण्डपं स्मृतम् ५३
विख्यातं मध्यहारायां मर्यादिभित्तिके शृणु
गोपुरेशानयोर्मध्ये धान्यस्थानमुदाहृतम् ५४
कुर्याञ्जननशालां तु याम्यपावकमध्यगः
याम्यनैर्ऋतयोर्मध्ये कुर्यादायुधमण्डपम् ५५
वरुणनैर्ऋतयोर्मध्ये कुर्यादास्थानमण्डपम्
पाशभृद्वायुमध्ये तु नृत्तां व्यासस्य मण्डपम् ५६
कुबेरानिलयोर्मध्ये धनसञ्चितमण्डपम्
ईशानसोमयोर्मध्ये कर्तव्यं पुष्पमण्डपम् ५७
मर्यादिभित्तिके ख्यातं महामर्यादिके शृणु
चतुर्दिक्षु महाद्वारे गोपुराणिप्रकल्पयेत् ५८
अन्तरालेषु सर्वेषु क्रमेणैवप्रदक्षिणम्
ऋग्यजुःसामाथर्वाणाञ्छन्दोज्योतिषयोस्तथा ५९

शीक्षाकल्पनिरुक्तानां ततो व्याकरणस्य च
शैवसिद्धान्तशास्त्रस्य तथा पाशुपतस्य च  ६०
सोमसिद्धान्ततन्त्रस्य बौद्ध अर्हतयोस्तथा
पाञ्चरात्राख्य तन्त्रस्य व्याख्यानाभ्यासनानि वै  ६१
विप्राणां भोजनार्थाय लिङ्गानां भोजनाय वै
आदिशैवानुशैवानां स्थापनापरिकल्पयेत्  ६२
परिवारसमायुक्तं प्राकाराणां प्रकीर्तितम्
अतः परं विशेषेण वृषभस्थापनं शृणु  ६३
इति परिवारविधिपटल एकोनचत्वारिंशत्तमः  ३९

अथ वृषभस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि वृषभस्थापनं परम्
अन्तरावरणे देवा भिद्यते शिवशासने  १
तेषु देवा स्थिते तस्मात् परिवारस्य वस्थता
वृषभस्य सहस्रांशा भिद्यन्ते मूर्तयस्तदा  २
त्रिविधं स्थापनं प्रोक्तं शैलं लोहं सुधामयम्
लोहजं स्थानके कार्यं  शयने वा विशेषतः  ३
शिलासुता प्रकर्तव्यं शयने तु विचक्षण
त्रिविधं तत्र कर्तव्यं सर्वसम्पत्करं नृणाम्  ४
लोहजेन तु विघ्नेशकृतं चेदुत्तमं सृतम्
शैलं च मध्यमं प्रोक्तं सुधाया चाधमं भवेत्  ५
वृषभस्य तदुत्सेधं द्वारमानेन वै शृणु
द्वारोत्सेधं चतुर्थां शमर्धपादोनकं तथा  ६
समं वा द्विगुणं वापि त्रिगुणं वा विशेषतः
तत्काले वृषभायामं द्विसप्तत्यङ्गुलं स्मृतम्  ७
चतुर्भागमुखं तत्र त्रिभागं नासिका तथा

द्व्यङ्गुलं तु तथा नेत्र मन्त्रः पादसुविस्तरम् ८
शृङ्गायामं द्विभागं तु तन्मूलं भागविस्तरम्
तीक्ष्णाग्रौ तु प्रकर्तव्यौ चानुपूर्वात् क्रमेण तु ९
कर्णायामं दशांगुल्यं तद्विस्तारं तदर्धता
कला तु कर्णमूलं हि तदन्तश्च तदेव तु १०
त्रिभागं नेत्रयोर्मध्ये तद्वच्छृङ्गौ तु मध्यमम्
अक्षिकर्णान्तरं भागं कर्णाच्छृङ्गान्तरं तथा ११
द्व्यङ्गुलं नासिकाद्वारे तद्वक्रं भागमानतः
जिह्वासौ दन्तपङ्क्ती च यथा युक्त्या च कारयेत् १२
अष्टादशाङ्गुलं चोरु तन्नाहं त्रिगुणं तथा
जङ्घादशाङ्गुला ज्ञेया तदूर्ध्वे तु चतुष्कला १३
षडङ्गुलं ततः पादं तदर्धं खुरमुच्यते
जङ्घायाः पश्चिमं पादं कलोर्ध्वे तु कलाधिकम् १४
पुच्छं स्यादग्रमूलान्तं चतुरङ्गुलविस्तृतम्
मध्यमं द्व्यङ्गुलं तारमग्रमेकाङ्गुलं स्मृतम् १५
वृषणौ द्विकलायामौ विस्तारं स्याच्चद्व्यङ्गुलम्
वृषस्यलक्षणं प्रोक्तं स्थापनं तस्य वै शृणु १६
लोह । । । । श्चैव विना शैले सुधामये
जलाधिवासं शयनं सुधायां च न कारयेत् १७
नेत्रेण मोचयं नेत्रं शयन । । । । ।
दिक्पालकलशानष्टौ लोकपालाधिपास्ततः १८
वृषकुम्भं तु तन्मध्ये वृषभं गौः समावृतम्
घण्डमालारवोपेतं श्वेतवर्णं महाद्युतिम् १९
। । । । । । । त्तत्रमूलमन्त्रेण देशिकः
नवपञ्चत्रयं वापि एकाग्निमथवा पुनः २०
शिवाग्निं पूर्ववत् कृत्वा मध्ये चाहूय तद्वृषम्

पूर्वोक्तमूलमन्त्रेण हुत्वा तत्र शताहुतिम्  २१
शिवाङ्गैः शैवमन्त्रेण हृदयादीनि संस्पृशेत्
प्रभाते विमले तत्र पूर्णां हुत्वास्त्रमन्त्रतः  २२
। । स्वनाममन्त्रेण कलशैरभिषेचयेत्
वृषगायत्रि मन्त्रेण मध्यकुम्भेन देशिकः  २३
गन्धपुष्पादिना यष्ट्वा मुद्गान्नं दापयेत् ततः
वृषयागं ततः कृत्वा नवसप्ताहपञ्च वा  २४
त्रयाहैकाह्नमेवाथ उत्सवं विधिचोदितम्
प्रदक्षिणे वृषं पूर्वं कुर्यादन्यानि तत्समम्  २५
वृषयागमिदं ख्यातं वह्नेः संस्थापनं शृणु
इति वृषभस्थापनविधिपटल चत्वारिंशत्तमः  ४०

अथ वह्निस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि वह्नेः संस्थापनं शृणु
परिवारेऽप्यथाग्नेय्यां विमाने पूर्ववत् कृते  १
तत्र बेरन्तु कर्तव्यं पूर्वोक्तेन प्रमाणतः
हस्तमानेन वा चार्धकरेणैव तु पीठकम्  २
त्रिमेखलं भवेत्पीठं पद्मपीठमथापि वा
पीठस्थं वाथ बेरं वा प्रतिष्ठां सम्यगाचरेत्  ३
यत्ते नाद्यस्वरोपेतं प्रथमं बीजमिष्यते
रेफेणैकादशोपेतं द्वितीयं स्याच्च वह्निना  ४
द्वादशान्तस्वरोपेतं वह्निबीजं तृतीयकम्
शिखानां द्वादशान्तं यत् स्वरयुक्तं चतुर्थकम्  ५
जीवान्तबीजमुद्धृत्य काले वह्निसमायुतम्
तेनैव नीलमायाभ्यां वह्नेः पिण्डं तु पश्चिमे  ६
मौलिना भूषिताः सर्वे भुक्तिमुक्तिफलप्रदम्

वच्मीह वह्निरूपं तु रक्तवर्णं चतुर्भुजम् ७
वरदाभयहस्तं च । । । । । । । । ।
शक्तिः स्यादपरेवामे दक्षिणे तु सृचन्धरम् ८
एकाननं त्रिणेत्रं च रक्तकोशोर्ध्वमेव च
वह्निरूपं समाख्यातमेवं धामनि विन्यसेत् ९
यजने चाग्निमध्ये च पूर्वोक्तेन स्वरूपतः
संस्पृश्य होमयेद्धीमान् बीजैः पिण्डैश्च पञ्चभिः १०
धामाग्रमण्डपे रम्ये मध्ये वेदिसमन्वितम्
प्रागुक्तेन क्रमेणैव पञ्चाग्निं सम्प्रकल्पयेत् ११
त्रेताग्नौ वाथ कुर्वीत एकाग्निमथवा पुनः
लोहं चेद्रत्नविन्यासं कृत्वा नयनमोक्षणम् १२
जलाधिवासयेत् बिम्बं शैलजे तु विशेषतः
ततोऽक्षिमोचनादींश्च बाह्ये कृत्वाथ धामनि १३
प्रतिष्ठा लग्नपूर्वे तु पीठे रत्नादिविन्यसेत्
निर्दोषां नवकुम्भाश्च वर्धन्यां सहसूत्रके १४
संयोज्यगन्धतो येन पूरयित्वा सकूर्चकान्
वितानक्षौमपट्टाढ्या हेमरत्नसमन्वितान् १५
स्थण्डिलं वेदिकोर्ध्वे तु पद्मयुक्तसमन्वितम्
आलिख्यकर्णिकायां तु प्रधानाख्यं पठं न्यसेत् १६
वर्द्धनीं तस्य वामे तु परितोष्टौ च दिक्षु च
अष्टकुम्भांस्तु विन्यस्य विद्येशोमाशुशुक्षणीन् १७
स्वाहां देवीं तु वर्धन्यां शिवं पूर्वपदं तदा
भास्करं वामके कुम्भे लोकेशां स्वस्वदिक्षु च १८
विन्यस्याभ्यर्च्य गन्धाद्यैः कुम्भानां दक्षिणे तथा
संकल्प्यचासनं प्राग्वत् तस्मिन् बिम्बं सुशाययेत् १९
आरभ्यचार्चनं ध्यानं ततो होमं समाचरेत्

शिवाग्निं पूर्ववत्कल्प्य सर्वकुराडेषु बुद्धिमान् २०
अग्निमूर्तिं तु संकल्प्य समिधान्याज्यलाजकैः
तिलेन पञ्चबीजेन होमयेत् तु शतं शतम् २१
प्रभाते सुमुहूर्ते तु शयनात् बिम्बमुद्धरेत्
समभ्यर्च्य तु गन्धाद्यैः कृत्वा धामप्रदक्षिणम् २२
स्नानवेद्यां न लोहं हि शैलं चेद्धाममध्यमे
पीठे वा न्यस्य बिम्बं तु रत्नन्यासादनन्तरम् २३
हृदये पञ्चमं बीजं मूर्ध्निवक्त्रे च नाभिके
गुह्ये चैव तु शेषाणि बीजानि क्रमशो न्यसेत् २४
गन्धाद्यैरर्चयित्वा तु पद्ममुद्रां प्रदर्शयेत्
पूर्णाहुतिं ततो दद्यात् बीजैः पिराडेन मन्त्रवित् २५
ततः कुम्भान् सुमुद्धृत्य मध्ये कुम्भं तु पञ्चभिः
बीजैः पिराडेन बिम्बं तु प्रागुक्तन्यासमार्गतः २६
तत्कुम्भवर्धनीभ्यां तु स्नापयेत् बीजपिराडकैः
तत्कुम्भस्थजलैरेव स्नापयेत् स्वस्वमन्त्रकैः २७
यष्ट्वागन्धादिकैर्द्रव्यैः प्रदद्यात् तु महाहविः
देशिकं पूजयेत् तत्र वस्त्रहेमांगुलीयकैः २८
वह्निसंस्थापनं प्रोक्तं मातृणां स्थापनं शृणु
इति वह्निस्थापनविधिपटल एकचत्वारिंशत्तमः ४१

## अथ मातृस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि मातृणां स्थापनं परम्
नैर्ऋतस्य वधार्थाय ब्रह्मणाचापि निर्मिताः १
ब्रह्माणीं ब्रह्मवत् कुर्यात् महेशीमीश्वरोपमाम्
कुमारवच्चकौ मारीं विष्णुवद्वैष्णवीं तथा २
क्रोधाननां तु वाराहीं वामिनीं तु हलायुधाम्

चक्राणीं चक्रवत् कुर्यात् चामुण्डीमुग्ररूपिणीम् ३
सुविकीर्णजटाभारां श्यामवर्णां चतुर्भुजाम्
कपालशूलहस्तां च चामुण्डीं कारयेत् ततः ४
वरदाभयहस्तास्तु तत्तदायुधधारिणः
तत्तद्वर्णसमायुक्ता वाहनध्वजसंयुताः ५
चतुर्भुजास्तु सर्वाश्च नलिनास्ताश्च संस्थिताः
वीरभद्रं तु पूर्वे तु विघ्नेशं पश्चिमं दिशि ६
वीरासनस्थं वीरेशं विघ्नेशं च तथा कुरु
मृद्दारुशैललोहैर्वा कृत्वा तु प्रतिमां बुधः ७
रत्नन्यासं ततः कृत्वा जले चैवाधिवासयेत्
नेत्रस्य मोक्षणं पश्चाच्छयने वाधिवासनम् ८
शिखाग्नौ विधिवत् कृत्वा ध्यात्वा होमं समाचरेत्
स्थापयेत् सुमुहूर्ते तु सुनामाद्यैश्च मन्त्रतः ९
मातृणां हविषं दत्वामातृगायत्रि मन्त्रतः
यामलोक्त क्रमेणैव मातृयागं समाचरेत् १०
मातृणां स्थापनं प्रोक्तं विघ्नेशस्थापनं शृणु
इति मात्रस्थापनविधिपटल द्विचत्वारिंशत्तमः ४२

## अथ विघ्नेशस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि विघ्नेशस्थापनं परम्
आदौ त्वहमुमासार्धं क्रीडार्थं हिमवद्वने १
करेणुश्च गजेन्द्रेण सम्भोगमकरोत्ततः
यदृच्छया तु तं दृष्ट्वा तदा कारमगामहम् २
करेणवराकृतिं चोमां तदा क्रीडमहं भृशम्
तस्यां तु गर्भमदधात् तस्मिन्काले तपोभवेत् ३
महेश्वरसहस्रांशाद् दशांशं तत्तद्रूपकम्

एकोनविंशत्यर्णेन भान्तं वह्निसमायुतम् ४
मनुस्त्रयो दशान्तं च बिन्दुनादसमन्वितम्
मूलमन्त्रमिदं ख्यातं विघ्नेशस्य महात्मनः ५
द्वितीयस्य तृतीयेन एकमात्रस्वरान्वितम्
ब्रह्मजज्ञं तु विख्यातं षडंगं दीपसंयुतम् ६
अङ्गान्ते सविसर्गोऽत्र शेषस्तु स्वरसंयुतम्
आखुध्वजाय विद्महे इत्युक्त्वा तत्तदागुरुः ७
दन्तिहस्ताय धीमहे तन्नोदन्तिः प्रचोदयात्
फलदक्षिणहस्ते तु वमहस्ते स्वशृङ्गकम् ८
पाशाङ्कुशोर्ध्वहस्ते तु गजहस्ते तु लड्डुकम्
करण्डमकुटं प्रोक्तं सर्वाभरणभूषितम् ९
शिरश्चक्रप्रभां कृत्वा पद्मपीठोपपरि स्थितम्
डाडिमी पुष्पसंकाशं सर्वाभरणभूषितम् १०
आसनं स्थानकं वापि कारयेद्विघ्ननायकम्
पञ्चतालप्रमाणेन मानेनोक्त प्रमाणकम् ११
तन्मानं नवधा कृत्वा मुखमानं द्विभागतः
मेढ्रतन्तु चतुर्भागमुलूकातमिति स्मृतम् १२
जान्वन्तमेकभागेन नलकान्तं तदा भवेत्
चरणं चानुकर्णं च भागेनैकेन बुद्धिमान् १३
वाग्वायाम द्विभागं तु मणिबन्धान्तकं यथा
हस्तायामाष्टतालैक हीनं तस्य प्रकोष्टकम् १४
हस्तादप्यर्धमायामं गजहस्तस्य कीर्तितम्
कर्णोत्तुङ्गं तथैकांशं तत्पादोनं सुविस्मृतम् १५
कर्णतारोर्ध्वमानेन दन्तायाममिहोच्यते
नवाङ्गुलानि सर्वं तत्पूर्वोक्तेन प्रमाणतः १६
एवं तु कथितं प्रोक्तं स्थापनं च शृणुष्व हि

कृत्वालयं तु पूर्वोक्तं प्रथमं चाथ बुद्धिमान् १७
प्रासादस्याग्रतः कुर्यात् मरडपं चतुरश्रकम्
सर्वलक्षणसंयुक्ता वेदिका तस्य मध्यमे १८
विस्तारस्य त्रिभागैकं वेदिविस्तारमात्र वै
जानुमात्रं तमुत्सेधं कुरडानि परितः क्रमात् १९
रत्नन्यासं ततः कृत्वा जले चैवाधिवासयेत्
नेत्राणि नेत्रमन्त्रेण मोचयेत् तु यथा विधि २०
वस्त्रैरास्तीर्यशयनं शाययेच्छयनोपरि
सर्वलक्षणसंयुक्तं सूत्रेणैव तु वेष्टितम् २१
सकूर्चं सा पिधानां च सवस्त्रं वारिपूरितम्
सहिररायं न्यसेत् कुम्भं गन्धपुष्पादिनार्चयेत् २२
तद्रूपं मूलमन्त्रेण प्रत्यङ्गमङ्गसंयुतम्
ध्यात्वा कुम्भे तु विन्यस्य स्वापमुद्रां प्रदर्शयेत् २३
आवृतान् कलशानष्टौ लोकपालादिकान् क्रमात्
पच्छाद्धोमं तु कर्तव्यं नवपञ्चत्रयैककम् २४
समिदाज्यं चरुं लाजान् सकूर्चं सर्षपं तथा
लड्डुकं गुलखराडं च फलं क्षीरं तथैव च २५
शिवाग्निं पूर्ववद्ध्यात्वा गणेशं वह्निमध्यमे
विघ्नगायत्रि मन्त्रेण सर्वद्रव्याणि होमयेत् २६
स्पर्शाहुतिं ततः कृत्वा तन्मन्त्रेणैव देशिकः
पूर्णाहुतिं ततो हुत्वा मूलमन्त्रं समुच्चरेत् २७
कलशस्थं यथा तत्वं प्रतिमायां तु विन्यसेत्
कलशैः स्नाप्य विघ्नेशं गन्धपुष्पादिभिः सह २८
गुलोदनं तु हविषं फलयुक्तं निवेदयेत्
कर्तव्यमुत्सवं तन्त्र कर्मवित्तानुसारतः २९
तवैतत्स्थापनं प्रोक्तं स्कन्दस्य स्थापनं शृणु

इति गणेशस्थापनविधिपटलस्त्रिचत्वारिंशत्तमः ४३

## अथ स्कन्दस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि स्कन्दस्य स्थापनं परम्
तस्योद्भवं समासेन शृणु पूर्वं गजानन १
देहत्यागे पितां दृष्ट्वा तद्योगमहमभ्यसन्
सतीचाङ्गं पुनर्गत्वा सुताहिमवतस्तथा २
गिरिपार्श्वे तपः कृत्वा तत्सुतापार्वती भवेत्
आवयोः संगमं तत्र देवैः सम्प्रार्थितोयतः ३
रेतोवह्निस्तु संग्राह्य क्षिप्त्वा शरवणे च तु
तस्माच्छरवणो भावो नाम इत्यपि कीर्तितः ४
षट्कृत्तिकायां स्थपनं षण्मुखस्त्वभिधीयते
तेनैव कार्तिके यस्तु बालहीनां हि तद्भवेत् ५
आदिशक्तेः सहस्रांशात् कुमारस्योदयस्तथा
पुराह्यखिलजं प्रोक्तमिदानीं स्थापनं शृणु ६
प्रासादं विधिवत् कृत्वा प्रतिमान्तदनन्तरम्
शिलामृद्दारुलोहैर्वा नवतालेन मानयेत् ७
द्विहस्तो वा चतुर्बाहुरष्टबाहुरथापि वा
द्विभुजं पद्महस्तं तु वज्रं शक्तिं तथा परे ८
अभयं वरदं पूर्वे चतुर्बाहुरिति स्मृतम्
खड्गखेटकमूर्ध्वे तु पाशं पद्मं तथाष्टकम् ९
आसनं स्थानकं वापि यानं वै त्रिविधं तथा
आसनं द्विभुजं प्रोक्तं स्थानकं स्याच्चतुर्भुजम् १०
यानमष्टभुजे कुर्यात् स्थापनं परिवारके
स्कन्दं पद्मगजारूढमुपवीतसमन्वितम् ११
डाडिमीपुष्पसंकाशं सर्वाभरणभूषितम्

सर्वलक्षणसंयुक्तं पूर्वोक्तेन विधानतः १२
विद्यामेधा च सहिते शुक्लश्यामनिभे तथा
सर्वालङ्कारसंयुक्ते द्विभुजे पद्मधारिके १३
स प्रतीकारमेवं हि प्रतिष्ठां शृणु तत्वतः
प्रासादस्य पुरस्तात्तु मण्डपे समलङ्कृते १४
रत्नन्यासं तु कर्तव्यं जले नैवाधिवासनम्
कर्तव्यमक्षिमोक्षं च शयनं त्वधिवासनम् १५
कुम्भं विन्यस्य तत्रैव कलशान्नावृतान् पुनः
प्राग्वत्संस्कृत्य कुम्भानि स्कन्दमध्ये तु मूलतः १६
विन्यसेत् परितो मंत्री लोकेशान् स्वस्वबीजतः
नवपञ्चत्रयैकं वा होमं तत्रैव पूर्ववत् १७
नवाग्निश्चेत्तु दिक्पाला स्कन्दो होमाधिपा स्मृताः
शक्त्यन्तकजलाः सोम स्कन्दापञ्चाग्निमूर्तीपाः १८
त्रेताग्निश्चोत्तमं चैव स्कन्दे होमाधिदेवता
मूलब्रह्मषडङ्गैश्च गायत्र्यागव्यवर्तकैः १९
हुत्वा यथा क्रमेणैव पूर्णाहुतिं तु मूलतः
स्कन्दगायत्रि मन्त्रेण स्पर्शाहुतिमथाचरेत् २०
स्कन्दस्य मूलमन्त्रेण संस्थाप्य स्थापकोत्तमः
पञ्चमादि च सद्यान्तं मूर्ध्निन्यासो हृदाबुधः २१
उत्सवस्नपनं तत्र हविष्यं तु निवेदयेत्
आचार्यो मूर्तिपांश्चैव सम्पूज्यविधिवत् ततः २२
स्कन्दस्य स्थापनं प्रोक्तं ज्येष्ठाया स्थापनं शृणु
इति स्कन्दस्थापनविधिपटलश्चतुश्चत्वारिंशत्तमः ४४

## अथ ज्येष्ठास्थापनविधि पटलः

अथातः सम्प्रवक्ष्यामि ज्येष्ठायाः स्थापनं परम्

आदिशक्तेः समुत्पन्ना पश्चादुदधिसम्भवा ४५।१
उदधौमत्थ्यमाने तु चोत्थिता सा गजानन
कालाञ्जननिभा देवी सर्वाभरणभूषिता ४५।२
कररूढा कले पत्नी सुखघ्नादुहितातनुः
जानुपार्श्वौ मणिर्वाथा वृषास्यं वृषभं तथा ४५।३
वृषभो रक्तवर्णं तु मणिकाञ्चन स प्रभा
रूपाण्येतानि कृत्वा तु प्रतिष्ठां सम्यगाचरेत् ४५।४
रत्नन्यासं ततः कृत्वा तोयमध्ये निवासनम्
ततो क्षिमोचनं कृत्वा शयने चाधिवासनम् ४५।५
कुम्भान्यत्रैव विन्यस्य पश्चाद्धोमं तु पूर्ववत्
शिवाग्निं तत्र कृत्वा तु ज्येष्ठां वह्नौसमावहेत् ४५।६
ज्येष्ठाया मूलमन्त्रेण सर्वद्रव्याणि होमयेत्
संस्थाप्यसुमुहूर्ते तु हविष्यं दापयेत् ततः ४५।७
ज्येष्ठायाः स्थापनं प्रोक्तं दुर्गाया स्थापनं शृणु
इति ज्येष्ठा स्थापनविधिपटलः पञ्चचत्वारिंशत्तमः ४५

अथ दुर्गास्थापनविधिपटलः
अथातः सम्प्रवक्ष्यामि दुर्गायाः स्थापनं परम्
आदिशक्तेः समुद्भूता विष्णुप्राणानुजा शुभा १
शङ्खचक्रधरा देवी धनुः सायकधारिणी
खड्गखेटकसंयुक्ता शूलपाशसमायुता २
चतुर्भुजं वा कुर्वीत सर्वाभरणभूषितम्
श्यामवर्णां सुवदनां महिषस्यशिरस्थिताम् ३
सिंहारूढां च वा कुर्यात् पद्मासनसमागताम्
आलयस्य पुरोभागे प्रपां कृत्वा सलक्षणाम् ४
रत्नन्यासं तु तत्रैव जले चैवाधीवासयेत्

मन्त्रपक्ष्माक्षिमोक्षं तु कृत्वा प्रतिसरं बुधः ५
संकल्पशयनादीनां शाययेत् प्रतिमन्त्रतः
कुम्भमन्त्रैश्च विन्यस्य ध्यात्वा तद्रूपमात्मनि ६
आवृतान् कलशान् स्थाप्य लोकपालांश्च विन्यसेत्
होमं पञ्चत्रयैकं वा प्रागुक्तद्रव्यसंयुतम् ७
वह्निमध्ये तु देवेशिमाहूयाज्यादिभिर्बुधः
आज्यं चरुं तथा लाजानौदुम्बरसमित्तथा ८
दुर्गायामूलमन्त्रेण होमयेद्देशिकोत्तमः
देविमुत्थाप्य शयनात् स्नानवेद्युपरिन्यसेत् ९
कुम्भन्दत्वा तथा बीजं मूलमन्त्रेण योजयेत्
संस्नाप्य कलशैः पश्चात् प्रभूतहविषं तथा १०
दुर्गास्थापनमेवोक्तं चण्डेशस्थापनं शृणु
इति दुर्गास्थापनविधिपटलः षट्चत्वारिंशत्तमः ४६

## अथ चण्डेशस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि चण्डेशस्थापनं परम्
उद्भवं प्रथमं तस्य द्वितीयं स्थापनं क्रमात् १
रुद्रस्यैव तु रुद्रांशं तत्सर्वं चण्डनामतः
गणेशावरणे स्थित्वा दशांशेना युतेन तु २
प्रचण्डादिविनिष्क्रान्ता पञ्चमूर्तिर्विधानतः
प्रचण्डचण्डः प्रथमं ततो विक्रान्तचण्डगः ३
तृतीयो भुविचण्डस्तु वीरचण्डश्चतुर्थकः
एवं वै पञ्चचण्डेशा पञ्चब्रह्मसमुद्भवा ४
कृतयुगाधिपत्यं तु प्रचण्डमिदमुच्यते
विक्रान्तचण्डनामा तु त्रेतायामधिप स्मृतः ५
द्वापरे चाधिपत्यं हि विभुश्चण्डेश उच्यते

कलौ तु वीरचण्डेश स्वाधिपत्यं प्रकीर्तितम् ६
एवं वै पञ्चभेदेन चण्डनामविधीयते
आलयस्यैश दिग्भागे विमानं पूर्ववत् क्रमात् ७
त्रिणेत्रं चतुर्भुजं वापि द्विनेत्रं द्विभुजं तु वा
भमञ्जटासमायुक्तं सर्वाभरणभूषितम् ८
अभयं शान्तदेहं च पाशं वै परशुं तथा
द्विभुजं यदि कर्तुं चेच्छान्तटंकायुतं तथा ९
शुक्लयज्ञोपवीतं च शुक्लाम्बरधरं तथा
स्नानकं चासनं प्रोक्तं पूर्वोक्तविधिना ततः १०
चलस्थापनवत् सर्वं यथा युक्त्याथकारयेत्
स्वनामाद्यक्षरं यत्तु तस्य तन्मूलमन्त्रकम् ११
तस्य ह्रस्वांश्च दीर्घां श्च ब्रह्माङ्गस्तु विनिर्दिशेत्
शिवार्चने तु तस्यैव दशार्णं मूलबीजतः १२
चण्डेश स्थापनं प्रोक्तं इंद्रादि स्थापनं शृणु
इति चण्डेशस्थापनविधिपटलः सप्तचत्वारिंशत्तमः ४७

## अथ चक्रादिस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि चक्रादिस्थापनं परम्
इन्द्रमैन्द्रे तु मतिमांस्त्विन्द्रो वज्रांकुशोधरात् १
श्यामाङ्गं तु गजारूढमप्सरोगणसंयुतम्
कृत्वा चाग्निमजारूढं रक्ताभं रक्तलोचनम् २
शिखाभिरूर्ध्वगाभिश्च युक्तिशक्तिस्त्रवन्धरम्
यमं सुदण्डहस्तं तु महिषासनसंस्थितम् ३
करालं कालवर्णं च फलपल्लवपाणिनम्
खड्गखेटकसंयुक्तं निर्ऋृतिश्यामवर्णकम् ४
करालं विकृताकारं सिंहारूढं द्विनेत्रकम्

वरुणं पाशहस्तं तु शुक्लवर्णसमप्रभम् ५
अन्यहस्तेन वरदं सर्वाभरणभूषितम्
अनिलं धूम्रवर्णं तु मृगारूढं धवं ध्वजम् ६
सव्येंकुशधरं स्यामं चात्मानं विधिवत् गतम्
त्वक्षेशन्तु गदाहस्तं श्यामरूपं भयावहम् ७
द्विबाहु रक्तवस्त्राढ्यं रक्ताक्षं पद्मपाणिनम्
ईशानं तु चतुर्बाहुं त्रिणेत्रं तु जटाधरम् ८
शूलपाणिं वृषारूढं वरदाभयपाणिनम्
कृत्वा वीणाधरं देवं ब्रह्मविष्णू च पूर्ववत् ९
अर्यमा चेन्द्रवरुणौ पूषा विष्णुर्भगस्तथा
अजध्न्योजघन्यं च मित्रो धाता इति स्मृताः १०
विवस्वांश्चैव फर्जन्यात्वादित्या द्वादश स्मृताः
द्विभुजा पद्महस्ताश्च रक्तपद्मासने स्थिताः ११
रश्मिमण्डलसंयुक्ता सुरक्तालोकनायकाः
नासत्यश्चैव दस्त्रश्च अश्विनौ तौ प्रकीर्तितौ १२
शुक्लवस्त्रधरौष्णीषौ पुष्टकाभयपाणिनौ
सोत्तरीयौ स्वरूपौ च शुक्लहेमनिभौ तथा १३
कुम्भिनी ग्रन्थिनी कूर्चकुट्टिनि च विकारिणि
रुद्राणी च विकारी च रोहिण्याः सप्तकीर्तितः १४
नागाभरणसंयुक्ताः केशभारविभूषिताः
नागहस्ता स्वरूपास्तु वरदाभयपाणिकाः १५
पितापितामहौ चैव प्रपितामह एव च
पितरस्तूयमानास्तु तेषां वै लक्षणं शृणु १६
सुदृढा पीतकर्णास्तु च्छत्रदण्डधरास्तथा
शुक्लवस्त्रैः परिच्छन्नाः कीर्तिता पितरस्त्रयः १७
रम्भा च विपुला चैव उर्वशी च तिलोत्तमाः

मध्यक्षामसमायुक्ताः पीनोरुजघनस्तनाः १८
भृगुश्चैव वसिष्ठश्च पुलस्त्यः पुलहः कृतुः
काश्यपः कौशिकाश्चैव आङ्गिरा मुनयस्त्विमे १९
सुवल्कला जटा युक्ताः सुमुखादंशहस्तका
कट्या च मण्डिताकारा शुक्लवस्त्रधराः शुभाः २०
पिङ्गला च स नेत्राश्च पत्नयः सप्तकीर्तिताः
धरोधृवस्तथा सोमसावित्रस्त्वनिलोऽनलः २१
प्रत्युषश्च प्रभावश्च सुदंष्ट्राभीमरूपकाः
खड्गखेटकहस्तास्तु कुञ्चितभ्रूसुलोचनाः २२
सर्वाभरणसंयुक्ता चित्रवस्त्राधरास्तथा
रक्तवस्त्रधरापिताः प्रोक्ता वै वस्त्रतास्त्विह २३
गीरिशातो गिरीशश्च केशनाशस्तथैव च
भूतकासास्तदेकश्च बुद्धिर्भवन एव च २४
कपालीशो ह्यजोबुद्धच्छद्रमौली प्रकीर्तिता
भस्मोद्धुलितदेहाश्च शूलपाशधरास्तथा २५
त्रयस्त्रिंशतिमेदे वा लोकपालास्त्रसंयुतम्
प्रोक्तवर्णाभिधानाश्च सर्वेषां स्थापनं शृणु २६
चलस्थापनवत् सर्वमेकैकं तु विशेषतः
अथवान्यप्रकारेण स्थापनं तु विधीयते २७
तेषां वै मण्डपादीनि कर्माणि च सहैव तु
प्रत्येकं कुम्भमेवं तु प्रत्येकाग्निं विशेषतः २८
कारयेत् स्वस्वमन्त्रेण स्थापयेत् तु पृथक् पृथक्
इन्द्रादि स्थापनं प्रोक्तं आदित्यस्थापनं शृणु २९
इति चक्रादिस्थापनविधिपटल अष्टचत्वारिंशत्तमः ४८

# अथ आदित्यस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि आदित्यस्थापनं परम्
अदितेः पुत्रभावत्वादादित्यस्यति चोच्यते १
ईश्वरस्यार्धभागे तु जगश्चक्षुरिति स्मृतः
द्विभुजं सौम्यमित्युक्वा तस्मात् सौम्यं तु पूजयेत् २
सर्वसिद्धिं समन्विच्छेत् ग्राममध्ये विशेषतः
आलये वामपार्श्वे तु विभवार्थाय देशिकः ३
प्रासादं विधिना कृत्वा चाश्वाकर्णसमायुतान्
मूर्तयस्तु चतुर्दिक्षु सूर्याक्षविभवानुगाः ४
रक्तं श्वेतं च पीतं च श्यामं सूर्यादिवर्णकम्
शिल्पालङ्कारसंयुक्तं प्रासादलक्षणान्वितम् ५
ग्रामस्याभिमुखद्वारमालये पश्चिमे मुखम्
काष्ठलोहशिलाकृद्भिः कृत्वा तु प्रतिमां ततः ६
द्विभुजं पद्महस्तं तु रक्तवर्णं स्वरूपकम्
करण्डमकुटोपेतं सर्वाभरणभूषितम् ७
मकुटद्विगुणं तारं प्रभामण्डलमध्यमम्
उषाश्च प्रत्युषादेवी सव्यासव्ये तु संस्थितः ८
अरुणं चाग्रतः कृत्वा पङ्कजं तत्स्वरूपकम्
सप्ताश्वरथमध्यस्थं भास्करं पापनाशनम् ९
रक्तपद्मासनस्थं हि आसनं तत्र कल्पयेत्
पूर्वोक्तविधिना सर्वमादित्यं परिकल्पयेत् १०
मृण्मयं यदि कुर्वीत दैविके प्रतिमं तथा
शूलरज्जुमृदाद्यैस्तु वर्णभेदं सुशिल्पिकम् ११
कर्माच्च मध्यमे स्थाप्य शैलजं वाथलोहकम्
रत्नादि स्थापनान्तं च संक्षेपाच्छृणु साम्प्रतम् १२
आलयस्याग्रतः कृत्वा मण्डपं विधिनान्वितम्

तन्मध्ये वेदिकां कुर्यात् तत्त्रिभागेति विस्तरात् १३
हस्तमात्रप्रमाणं च दर्पणोदरसन्निभम्
कुण्डानि परितः कृत्वा मृदा वा वालुकैश्च वा १४
शालिभिः स्थण्डिलं कृत्वा रत्नन्यासाय देशिकः
रत्नानामप्यलभे तु मौक्तिकं तु निधापयेत् १५
उत्तराच्छादनं कृत्वा दर्भैर्वस्त्रैः समन्ततः
वस्त्रेण वेष्टयित्वा तु जले चैवाधिवासनम् १६
नीत्वा जलोषितं बिम्बं संस्नाप्य पञ्चगव्यकैः
हेमसूच्याथ मधुना नेत्रं नेत्रेण मोचयेत् १७
बध्वा प्रतिसरं मन्त्रीशयने चाधिवासयेत्
उत्तराच्छादनं कृत्वा दर्भैर्वस्त्रैः समन्ततः १८
शयनस्य च दिग्भागे कुम्भं वस्त्रेण वेष्टयेत्
सकूर्चान् सापिधान् कुम्भान् गन्धाद्यैर्विधिना यजेत् १९
ध्यात्वा तत्तत्स्वरूपाञ्च । । । । । । । ।
आवृतान् कलशानष्टौ लोकपालाधिकान् क्रमात् २०
वस्त्रकूर्च पिधानाद्यै स्थापयित्वा पृथक्पृथक्
पच्छाद्धोमं तु कर्तव्यं नवपञ्चत्रयं तु वा २१
शिवाग्निं पूर्ववद् ध्यात्वा न्यस्त्वा चाद्यं तु मध्यमे
समिदाज्यचरूं लाजान् सक्तुसर्षपमेव च २२
सूर्यगायत्रि मन्त्रेण सर्वद्रव्याणि होमयेत्
स्पर्शाहुतिं ततः कृत्वा तन्मूलेन तु देशिकः २३
प्रभाते सुमुहूर्ते तु पूर्णां दत्वा स्वमन्त्रतः
आचार्यं पूजयेत् तत्र वस्त्रहेमाङ्गुलीयकैः २४
शयनात् बिम्बमुत्थाप्य स्नानवेद्यामथानयेत्
घृतः शिरोर्पणं कृत्वा नीत्वा कुम्भं तु सन्निधौ २५
कुम्भस्थं तु यथा देवं प्रतिमाया हृदि न्यसेत्

संस्थाप्य कलशैरेव गन्धपुष्पादिनार्चयेत् २६
प्रभूतं हविषं दत्वा मूलमन्त्रेण देशिकः
प्रारभेदुत्सवं तत्र कर्ता वित्तानुसारतः २७
तदुत्सवविधौ सर्वमाहशास्त्रे तु चोदितम्
आदित्यस्थापनं प्रोक्तं क्षेत्रपालविधिं शृणु २८
इति आदित्यस्थापनविधिपटल एकोनपञ्चाशत्तमः ४९

अथ क्षेत्रेशस्थापनविधिपटलः
अथातः सम्प्रवक्ष्यामि क्षेत्रेशस्य विधिक्रमम्
ईश्वरस्यायुतांशेन क्षेत्रपालोद्भवं तथा १
ग्रामादावैशदिग्भागे लोकरक्षार्थकारणम्
प्रासादं प्रतिमां तत्र पूर्वोक्तविधिना तथा २
द्वारं तु पश्चिमे मुख्यं दक्षिणे मध्यमं स्मृतम्
कन्यसं चेन्द्रदिग्द्वारं प्रतिमालक्षणं ततः ३
चतुर्भुजं त्रिणेत्रं वा षड्भुजं चाष्टहस्तकम्
सुदंष्ट्रं भैरवाकारं कृष्णावर्णं दिगम्बरम् ४
सर्पयज्ञोपवीतं च शिरोमालाकरोटिकम्
ऊर्ध्वकेशं सुवृत्ताक्षं नागाभरणभूषितम् ५
त्रिशूलं दक्षिणे हस्ते वामहस्ते कपालकम्
खट्गं च दक्षिणे हस्ते वामहस्ते तु खेटकम् ६
एवं चतुर्भुजं विद्धि षड्भूजं च ततः शृणु
नागं च दक्षिणे पाणौ तोमरं वामहस्तके ७
प्रागुक्तायुधसंयुक्तं षड्भूजं त्विति कीर्तितम्
शूलं डमरुखट्वांगं दक्षिणे वामहस्तके ८
एवमष्टभुजं प्रोक्तं षड्भुजायुधसन्निभम्
जलस्थापनवत्कृत्वा रत्नन्यासादि पूर्वकम् ९

क्षेत्रपालं स्वमन्त्रेण प्रतिष्ठां सम्यगाचरेत्
क्षेत्रपालाधिकं प्रोक्तं शूलस्थापनकं शृणु १०
इति क्षेत्रेशस्थापनविधिपटलः पञ्चाशत्तमः ५०

## अथ शूलस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि शूलस्थापनकं परम्
सदाशिवस्य देवस्य चेतनांशूलमुच्यते १
सर्वदेवमयं शूलं लक्षणं शृणु साम्प्रतम्
प्रासाद तुङ्गकं वापि त्वथवा स्तम्भमानकम् २
पादात् पादाधिकं वापि पादार्धं पादमेव वा
अधिकं व्योममित्युक्तं तद्विहीनं विशेषतः ३
तदुत्सेधदशांशैकं पत्रविस्तारमुच्यते
तदर्धं नालविस्तारं तच्चतुर्थं घनं स्मृतम् ४
पार्श्वपत्रे द्वयोरग्रे चूतपत्राग्रवत् कृतम्
पत्रतारं त्रिभागेन पत्राणां तु घनं स्मृतम् ५
घनस्यार्द्धांशमेवोक्तं पत्राणां तु घनं भवेत्
तदूर्ध्वं तारद्विगुणं फलका चतुरश्रकम् ६
तदष्टांशं घनं प्रोक्तं तस्याधः कुम्भमिष्यते
फलकाकार नाहार्धं कुम्भ तुङ्गं तदर्धकम् ७
कुम्भाधश्चोर्ध्वतश्चापि कर्णनाहं नवांशकम्
कुम्भनाहाष्टभागेन कर्णनाहमिति स्मृतम् ८
कुम्भार्धं तदधस्ताच्च तदर्धोदण्डपञ्जरम्
दारुजं चेत् तु कर्तव्यं लोहजं चेत् परं विना ९
फलकातारपञ्चांशं त्रिभागं दण्डनाहकम्
मूलाधस्तासिकान्तं यत्तन्मानं पीठ तुङ्गकम् १०
तदुत्सेधस्य पञ्चांशं त्रियंशं पीठविस्तरम्

अब्जाकारं चतुरश्रं पीठाकारं तथा स्मृतम् ११
अष्टांशं वीभजी कृत्वा त्वैकांशेन तु कर्णिका
चतुरंशं दलोत्तुङ्गं दलाग्रं चैकभागतः १२
पञ्चभागं चतुरश्रं भागादिपाद्य तुङ्गता
पीठस्य घनमाख्यातं फलकायाघनार्धकम् १३
ततो दारुमयैर्दण्डैः पीठोर्ध्वे दण्डपञ्जरम्
दारुदण्डस्य मध्ये तु योगपट्टेन तां दृढम् १४
शूलाग्रमुखसंज्ञाथ मध्यपत्रेब्जमालिखेत्
एवं शूलास्त्रमापाद्य ततः स्थापनमारभेत् १५
जलाधिवासनं स्नानं कृत्वा मण्डपसंस्कृतिम्
वस्त्रैराच्छाद्य शूलं तु स्थण्डिले शयनो परि १६
न्यस्त्वा शूलाधिपां देवानर्चयित्वा यथाक्रमम्
कलशां विन्यसेत्तत्र शूलास्त्राधिपसंयुतान् १७
सकूर्चानस्त्रसंयुक्तान् तदा युधांश्च बैजिकान्
तत्तदग्नौ हुतं हुत्वा तत्तन्मन्त्रैस्तु बुद्धिमान् १८
सुमुहूर्ते सुलग्ने तु तत्तन्मन्त्राणि संस्मरन्
मध्यपत्राधिपो रुद्रो दक्षिणे तु पितामहः १९
वामपत्रे तथा विष्णु स्त्रिपत्राणां तु देवताः
वामा ज्येष्ठा च रौद्री च शूलमूले तु देवताः २०
फलका स्कन्ददैवत्यं कुम्भे तु वरुण स्थिताः
तदर्धं चाग्नि दैवत्यं दण्डैश्चैव सरस्वती २१
पीठे चैवमुमादेवी भूमिभागे वसुन्धरा
स्थापयेत् क्रमशो विद्वान् गन्धपुष्पाक्षतान्वितम् २२
स्वनामाद्येन बीजेन कलशैरभिषेचयेत्
अभ्यर्च्य हृदयेनैव हविष्यं तु निवेदयेत् २३
शूलसंस्थापनं प्रोक्तमस्त्रराजविधिं शृणु

इति शूलस्थापनविधिपटल एकपञ्चाशत्तमः ५१

## अथ अस्त्रराजविधिपटलः

अथातः सम्प्रवक्ष्यामि अस्त्रराजस्य पूजनम्
चतुर्भुजं त्रिणेत्रं च शिखाकूटसमुज्वलम् १
वामसव्ये च शूलं तु वरदाभयहस्तकम्
रौद्रपाशुपतं ह्येवं बलिबिम्बं तथोच्यते २
स्थानकं चासनं वापि प्रभावीं समन्वितम्
कृत्वैवं प्रतिमां तत्र पूर्वोक्तेन प्रमाणतः ३
जलस्थापनवत् सर्वं रत्नादिस्थापनान्तकम्
तन्मन्त्रेणैव संस्थाप्य अन्यत् सर्वं समं भवेत् ४
अस्त्रराजविधिः प्रोक्ता शास्त्रसंस्थापनं शृणु
इति अस्त्रराजविधिपटल द्विपञ्चाशत्तमः ५२

## अथ शास्त्रस्थापनविधिपटलः

अथातः सम्प्रवक्ष्यामि शास्त्रस्थापनमुत्तमम्
शास्ता सर्वस्य लोकस्य तस्माच्छास्तेति चोच्यते १
तस्योक्तं च स्वरूपं च स्थापनं च शृणुष्व हि
समुद्रमथने काले परिग्रह्यामृतं तथा २
हरिर्बभूवस्त्रीरूपा मोहीनीनामनामतः
तन्मोहिनीमहं दृष्ट्वा सङ्गतोऽस्मि कदाचन ३
जातस्तदा महाशास्ता मेद्ध्याहाम्रवतीश्वराः
द्विनेत्रं द्विभुजं कृत्वा सर्वाभरणभूषितम् ४
श्यामवर्णयुतं तेषां शुक्लयज्ञोपवीतिनम्
श्वानकुक्कुटमेषाद्यैः क्रिडन्तं सर्वसिद्धिदम् ५
मदनावर्णनी देवौ पीतौ रससमन्वितौ

सर्वाभरणसंयुक्तौ पार्श्वयोर्विन्यसेत् ततः ६
वामे दमनकं न्यस्त्वा ते द्वेषं विकृतं स्मृतम्
द्विभूजं दक्षिणे हस्ते चक्रदण्डमथेश्वरम् ७
फलपल्लवहस्तं च कुञ्चितां घ्रिकरं द्वयम्
भूताकारं बृहत्कुक्षिं निलालकविभूषितम् ८
शास्तुश्च लक्षणं प्रोक्तं स्थापनं शृणु तत्वतः
प्रासादे नैर्ऋते भागे ग्रामादीनां च नैर्ऋते ९
अष्टदिक्षु च पूर्वादि तद्ग्रामस्य पराङ्मुखम्
प्रासादं कारयेद्धीमान् गजपृष्ठं विशेषतः १०
अथवा मण्डलं वापि कर्तव्यं प्रतिमां ततः
भद्रासने त्वधासीनं तथा वीरासनं तु वा ११
मृद्दारुशैललोहैश्च कारयेच्छास्त्रवित्तमः
शैलस्थापनवच्छेषं मन्त्रध्यानमथोक्तवत् १२
तस्मादाद्याक्षरेणैव मूलमन्त्रप्रयोगवत्
अग्निमध्ये तु तद्रूपं ध्यात्वा होमं तु मन्त्रवित् १३
तद्रूपभावनाविष्टा स्थापनादिसमाचरेत्
तद्रूपं कौतुकं स्थाप्यमूलबेरस्य चाग्रतः १४
लोहादीनि तथा कार्यं मृच्छिलादीनि कारयेत्
अर्चयित्वाथ विधिना हविष्यं तु निवेदयेत् १५
शास्तुः संस्थापनं ह्येवं जीर्णोद्धारविधिं शृणु
इति शात्रस्थापनविधिपटलस्त्रिपञ्चाशत्तमः ५३

अथ जीर्णोद्धारविधिपटलः

अथातः सम्प्रवक्ष्यामि जीर्णोद्धारविधिक्रमम्
जीर्णदेही यथा देहं त्यक्त्वान्यं प्रतिपद्यते १
तथा जीर्णं च चलितं बेरं मुञ्चति देवता

एवमादीनि सर्वाणि राक्षसाद्याविशन्ति हि २
राक्षसाश्चासुराश्चापि पिशाचा ब्रह्मराक्षसाः
तस्मात् सर्वप्रयत्नेन जीर्णोद्धारं तु कारयेत् ३
प्रासादं प्रथमं लिङ्गं पीठं प्राकारमण्डपम्
गोपुरं परिवारं च जीर्णकाले ततोद्धरेत् ४
स्थूपीनासि च शाला च कपोतं कूटपञ्जरम्
पादाधिष्ठानसंयुक्तं यद्भिनन्तद्विवर्जयेत् ५
विमानं पूर्ववत् कृत्वा प्रोक्षणं विधिवत् कुरु
तेष्वैकाङ्गविहीनश्चेत् तत् कुर्यात् पूर्ववत् बुधः ६
आलयानामिदं प्रोक्तं प्रतिमानां ततः शृणु
भ्रूरेखा चक्षुरेखा च नासिका चापि नाक्षयेत् ७
ससूत्राणां च लिङ्गे तु रेखाश्राणां तु पीठके
अन्याङ्गानां क्षयं दृष्ट्वा पीठे लिङ्गविशेषतः ८
उत्तरे जीर्णलिङ्गं तु तस्योद्धारक्रमं शृणु
मण्डलं वर्तयेद्धीमान् शिवलिङ्गस्य दक्षिणे ९
संकल्प्यासनमाराध्य बाह्यपूजां समारभेत्
मन्त्रपूतं हविर्दद्यात् तदग्रेऽग्न्यानने कृते १०
दूर्वाभुक्ति घृतैर्वापि क्षीरेण तिलतण्डुलैः
दशात्मनाशिवाङ्गैश्च पञ्चब्रह्मषडङ्गकैः ११
प्रत्येकं शतमर्द्धं वा होमयेत् पञ्चविंशतिः
लिङ्गस्याचलनार्थाय मूलेनैव शताहुतिः १२
दद्यात् पूर्णाहुतिं तत्र सहस्राक्षरमन्त्रतः
तद्वल्कलेन सम्मिश्रं गोवालकृतरज्जुना १३
कर्तुर्वर्णानुरूपं च वृषभं लक्षणान्वितम्
तरुणं बलवन्तं च भूषयेत् भूषणार्हकैः १४
रज्जुनाबध्यतल्लिङ्गं ककुदग्रे वृषस्य तु

तद्रज्जुनासुबध्वा तु बहुरूपमनुस्मरन् १५
तल्लिङ्गमुद्धरेन्मंत्री वृषभेण शिवेन च
देशिकं पूजयेत् तत्र वस्त्रैः सौवर्णभूषणैः १६
आरोप्यजीर्णलिङ्गं तु शिबिकायां रथेऽपि वा
शङ्खकाहलवाद्यैश्च कुर्याच्छब्दं महारवैः १७
आवृतं शिवभक्तैस्तु स्तुतिस्तोत्रसमन्वितम्
समुन्द्र प्रक्षिपेल्लिङ्गं नमस्कारान्तमन्त्रकैः १८
तटाकादिष्वशोष्येषु खात्वोर्व्यां वाथ निक्षिपेत्
दारुजं चेदथाग्नौ तु जले लिङ्गं व्यपोह्य च १९
प्रतिलिङ्गं च पीठं च कृत्वा पूर्वोक्तलक्षणैः
स्थापयेद्विधिनाधीमां नृपराष्ट्रहिताय वै २०
जीर्णोद्धारे कृतं सर्वं मण्डलस्थाय शम्भवे
विज्ञापयेत् प्रणम्यादौ शिवमस्त्विति चोच्चरेत् २१
शिवं प्राग्वत् समभ्यर्च्य शिवास्त्रं तु विसर्जयेत्
तस्याच्छिद्रापनोदार्त्थमघोरास्त्रेण मन्त्रवित् २२
आज्येनाष्टशतं हुत्वा व्याहृत्याहुतिमाचरेत्
अग्निस्थं शिवमुद्वास्य होमशेषं समापयेत् २३
सकलानि च जीर्णानि उद्धरेदेवमेव तु
वृषं विना चलानां तु क्रमादेवं समुद्धरेत् २४
मृद्दारुरूपबिम्बानि उद्धृत्याशुविनिक्षिपेत्
उद्धृते लोहबिम्बे तु तद्रव्येण पुनर्नवम् २५
कुर्यात् सामान्यमेवं तु विशेषमधुना शृणु
द्रव्योत्कृष्टेन कर्तव्यं तत्प्रमाणाधिकं तथा २६
इतरं तु न कर्तव्यं कृतं चेत् कर्तृनाशनम्
प्राकारमण्डपादीनां यज्जीर्णं तत्र तद्विना २७
कृत्वा तत् पूर्ववद् धीमान् सुदृढं हि मनोरमम्

अन्यथा यदि कुर्याच्चेत् दोषावहं नृणां भवेत्  २८
सर्वनाशं भवेदत्र सर्वं  निष्फलमेव हि
यदा मासा तदर्धेषु अशुभानि शुभानि च  २९
अपरीक्ष्य तदा कुर्यादुद्धारं स्थापनं पुनः
जीर्णोद्धारमिदं प्रोक्तं प्रायश्चित्तमथ शृणु  ३०
इति जीर्णोद्धारविधि पटलश्चतुःपञ्चाशत्तमः  ५४

## अथ प्रायश्चित्तविधिपटलः

अथातः सम्प्रवक्ष्यामि प्रायश्चित्तविधिक्रमम्
प्राशब्दाख्यो विनाशस्तु प्रायश्चित्तमिति स्मृतम्  १
अर्चनादिहुतान्तं च प्रायश्चित्तं वदाम्यहम्
अर्चनाकालहीने तु शिवमन्त्रं जपेच्छतम्  २
अर्चनाकालहीने तु सन्ध्याया द्विगुणं तथा
एकाहे चाङ्गविच्छेदे हृन्मन्त्रेण शताहुतिः  ३
एकाहे चार्चहीनेन स्नपनं नवकुम्भकैः
द्विदिनेत्रि दिने हीने पञ्चविंशतिकुम्भकैः  ४
चतुर्थाहे तु पञ्चाहे पूजाहीने तु सम्भवे
पञ्चादौ दशके हीने स्नपनं शतकुम्भकैः  ५
पूजाहीने तु मासान्तं त्रिशतैः कलशैः पुनः
त्रिमासमर्चनाहीने सहस्रकलशैः क्रमात्  ६
षाण्मासोर्ध्वेऽर्चनाहीने सम्प्रोक्षणमथाचरेत्
सन्ध्यायां बलिहीने तु रुद्रमन्त्रं शतं जपेत्  ७
द्विसन्ध्यं बलिहीने तु शताद्यर्धं  जपेद्गुरुः
त्रिसन्ध्यं बलिहीने च स्नपनं कारयेत् ततः  ८
द्वियहादि च मासान्तं बलिविच्छेदकर्मणि
शिवाग्निं पूर्ववद् ध्यात्वा स्नपनं तु शताष्टकम्  ९

बलिर्मासोर्ध्वहीने तु शिवाग्निं तत्र बुद्धिमान्
सहस्राज्याहुतिं चाङ्गैः शिवेनैव तु देशिकः १०
अष्टोतरशतैः कुम्भैः स्नपनं कारयेद्बुधः
नित्योत्सवं पुनः कुर्यात् पूर्ववच्च विशेषतः ११
बलि भ्रमणकाले तु लिङ्गं पतितमेव वा
स्फटितं चलितं भग्नं च्छिन्नं भिन्नं तु सम्भवेत् १२
तत्रैव कारयेद्धोममथवालय मध्यमे
पूर्ववद्बलिलिङ्गस्य कृत्वा तत्र प्रदक्षिणम् १३
अथवा पूर्ववत् कृत्वा भ्रमणान्ते हुतं क्रमात्
मूलमन्त्रं जपेत् तत्र शतमष्टाक्षरं बुधः १४
अगम्यमिति गम्यं वा मूलमन्त्रं शतञ्जपेत्
तत्काले दीपहीने तु स्थित्वा तत्र बलिं ततः १५
पुनर्दीपं समावाह्य कृत्वा शेषं प्रदक्षिणम्
नैवेद्ये च विहीने तु द्विगुणं तु निवेदयेत् १६
हविर्द्रव्यविहीने तु द्विगुणेन तु बुद्धिमान्
नित्यं द्रव्यविहीने तु तदान्ये द्विगुणं चरेत् १७
नित्याग्निकार्ये हीने तु हृन्मन्त्रेण शता हुतिः
उत्सवे तु विशेषेण प्रायश्चित्तं ततः शृणु १८
ध्वजस्य ध्वजदण्डस्य घण्डायास्तु विशेषतः
छिन्ने भिन्ने च पतिते चोरग्रस्तादि सम्भवे १९
कृत्वा तत्पूर्ववत्सर्वं पुनरुत्थापनं कुरु
हृदयेन शतं हुत्वा स्नापयेत् पञ्चगव्यकैः २०
यागकाले विहीने तु मूलमन्त्रेण होमयेत्
होमद्रव्यविहीने तु हृदयेन शताहुतिः २१
बलिप्रदानवेलायां शुनानीतेति रिक्तके
हृन्मन्त्रेण शतं हुत्वा सर्वशान्तिनिमित्तकः २२

शूलास्त्रं पतितं वापि आयुधं चाष्टमङ्गलम्
शूलस्य स्नपनं तत्र अन्येषां च शताहुतिः २३
प्रतिमां प्रतिमां वापि स्पृष्टां वै चान्त्यपायिभिः
कृत्वा तु स्नपनं तत्र मूलमन्त्रेण हूयते २४
प्रमादात् भिन्नच्छिन्नादि सम्भवे पूर्ववत् कुरु
सर्वेष्वङ्गेषु हीनं चेत् पुनरङ्गं नियोजयेत् २५
कण्ठोर्ध्वहीनं बिम्बं तु जीर्णोद्धारं तु कारयेत्
तिथिवारमुहूर्तानि निरपेक्षेण बुद्धिमान् २६
अधिवासनादिकार्याणि सद्य एव समाचरेत्
प्रतिष्ठाप्य विशेषेण प्रायश्चित्तं शृणुष्वहि २७
स्नपने कालहीने तु शिरसा तु शताहुतिः
स्नपनद्रव्यहीने तु शिखया तु तदर्धतः २८
सुषिरं पतितं भिन्नं भेदनं छेदनं हि वा
व्यपोह्यकलशं तत्तु पूर्ववत्कल्पयेद्बुधः २९
अस्पृश्य स्पर्शने वापि श्वानकाकादि स्पर्शिते
अन्यं कलशमादाय मन्त्रतो येन पूरयेत् ३०
हृदयेन शतं हुत्वा स्नपनं तत्र पूर्ववत्
करुणालयहीनश्चेत् कृत्वा तत्पूर्ववद्बुधः ३१
तरुणं लिङ्गपीठे वा च्छिन्नभिन्नादि संश्रिते
तल्लिङ्गं तु जले त्यक्त्वा लिङ्गं संस्थाप्य पूर्ववत् ३२
पतितं चलितं लिङ्गं पूर्ववत् स्थापयेत् क्रमात्
मूललिङ्गे च विघ्नेश वक्ष्येऽहमधुना शृणु ३३
लिङ्गं तु स्फटितं भिन्नं जीर्णं छेद्यं तथैव च
ईदृग्लिङ्गं ततस्त्यक्त्वा स्थापयेत्तु नवीकृतम् ३४
चलितं पतितं वापि नदिस्रोतेन पातितम्
गजेनोत्थापितं वापि चोरैरुन्मत्तकैरपि ३५

तल्लिङ्गं तत्र संस्थाप्य पूर्ववच्छेषमाचरेत्
गम्भीरे च महालिङ्गे स्रोतसा चलिते सत् ३६
अन्यस्यां प्रतिमायां वा शतदण्डात् तु योजयेत्
मूललिङ्गमदृश्यं चेन्नवलिङ्गं तु पूर्ववत् ३७
एवं वै पिण्डिकायास्तु तथान्यप्रतिमासु च
प्रतिष्ठालयहीने तु मूलेनैव शताहुतिः ३८
क्रियाहीने यथा शास्त्रं मूलेनैव समाचरेत्
क्रियायां मन्त्रहीने तु शिखया तु शताहुतिः ३९
द्रव्यहीने तु विघ्नेश सहस्राहुति वर्मणा
क्रियातिरिक्ते सर्वत्र न्यूनेमूलं शतं जपेत् ४०
काकश्वानखरोष्ट्रैश्च मत्तोन्मत्तैश्च दूषयेत्
स्पर्शाहुतिं च कुर्वीत पुण्याहं तु विशेषतः ४१
हुत्वा तु शिवमन्त्रेण सहस्रं वा शतं हि वा
चण्डालाद्यैस्तु परितः संस्पृष्टं वा समीपगम् ४२
सम्प्रोक्षणं प्रतिष्ठां च कुर्वीत स्नपनं पुनः
प्रासादे पतिते भिन्ने च्छिन्ने नष्टे तथैव च ४३
बालालये शिवं नित्वा विमाने पूर्ववत्कृते
विधिवत्प्रोक्षणं कृत्वा पश्चादुत्सवमारभेत् ४४
गर्भगेहे स्थले निम्ने कलकाद्यैर्द्रवं पुनः
तदन्ते वास्तुहोमं च पुण्याहं तत्र वाचयेत् ४५
बलिपीठविनाशे तु स्थापयेत् बलिपीठकम्
परिवारालये हीने पूर्ववत् परिकल्पयेत् ४६
तद्बिम्बे पतिते भिन्ने च्छिन्ने भेदे तु वर्जयेत्
हुत्वा तु शिवमन्त्रेण कुर्यात् बिम्बानि पूर्ववत् ४७
प्रतिष्ठां कारयेत् प्राग्वत् स्वकीयेन विधानतः
अथाद्भुतानां शान्तिं तु वक्ष्ये दोषविनाशनम् ४८

सर्वं विवर्णं सम्प्राप्ते प्रतिमारोदनेऽपि च
ज्वरमारिसमुत्पन्ने रोगस्फोटादि सम्भवे ४९
नवप्रासादपतने चैत्य वृक्षस्य पातने
एवमादिसमुत्पन्ने ग्रामादीनां च दोषकम् ५०
तद्दोषशमनार्थं तु त्रिसप्ताहं तु शान्तिकम्
भूमिकम्पे दिशान्दाहे प्रतिसूर्यप्रदर्शने ५१
दिवा नक्षत्रमुत्पन्ने रात्राविन्द्रधनुस्थिते
दुर्भिक्षं शत्रुवर्धन्यां राजराष्ट्रभयंकरः ५२
मासपूर्णं तथा शान्तिं कुर्याद्दोषनिवृत्तये
प्रासादमण्डपाद्येषु वल्मीकं यत्र दृश्यते ५३
रत्नकन्यासमुत्पन्ने प्रासादे मधुसंश्रिते
प्रविष्टे पिपीलिकालूकौ प्रासादाभ्यन्तरे तथा ५४
तत्प्रदेशं खनित्वा तु पूरयेच्छुद्धपांसुभिः
पञ्चगव्येन सम्प्रोक्ष्य पुनः शान्तिं तु कारयेत् ५५
शान्तिं संक्षेपतो वक्ष्ये शृणु तत्वं गजानन
हविषं द्विगुणं कृत्वा दीपैः पूष्पैर्विशेषतः ५६
शीतकुम्भं तु विधिना शिवस्योर्ध्वन्निदापयेत्
दिशाहोमन्ततः कृत्वा मूर्तिहोमं विशेषतः ५७
चतुर्दिक्षु चतुर्वेदैः पूर्वमध्यापनं तथा
यथावत् स्नपनं नित्यं तथा वित्तानुसारतः ५८
गृतं क्षीरं यथा शक्ति अभिषेकं तु नित्यशः
नालिकेरस्य सलिलैरभिषेकं समाचरेत् ५९
तदन्ते रात्रिचूर्णं तु लिङ्गमुद्वर्त्यशोधयेत्
प्रभूतहविषं नित्यं तदन्ते द्विगुणं स्मृतम् ६०
एवं शान्तिस्तु तत्प्रोक्तं सर्वारिष्टविनाशनम्
शान्तिरेवं कृतं यत्र धनधान्याभिवर्धनम् ६१

अनुक्तानां तु सर्वेषां विदित्वा गुरुलाघवम्
उक्तैरेवं प्रकारैस्तु प्रायश्चित्तानि कारयेत् ६२
शान्तिहोमं गुरुः कुर्यात् शेषाणां तु यथोक्ततः
प्रायश्चित्तमिदं प्रोक्तं तन्त्राणां संकरं शृणु ६३
इति प्रायश्चित्तविधिपटलः पञ्चपञ्चाशत्तमः ५५

अथ तन्त्रसंकरविधिपटलः

अथातः सम्प्रवक्ष्यामि तन्त्राणां संकरं परम्
शैवं पाशुपतं सोमं लाकुलं तु चतुर्विधम् १
तेषां भेदोपभेदैश्च तत्तच्छास्त्रे समाचरेत्
चतुर्विधेषु तन्त्रेषु यथेष्टं तेन बुद्धिमान् २
कर्षणादि प्रतिष्ठान्तं कर्म कुर्याद्विचक्षणः
कर्षणादि प्रतिष्ठान्तमेक तन्त्रेण कारयेत् ३
भुक्तिमुक्तिप्रदं मुख्यं सर्वसिद्धिमवाप्नुयात्
पूर्वमेकेन कृत्वा तत्पश्चादन्येन वै कृतम् ४
एतत् तु संकरं तेन राज्ञो राष्ट्रस्य दोषकृत्
आचार्यश्चैव कर्ता च नाशनं त्वखिलं तथा ५
यच्छास्त्रेण यदारब्धं तच्छास्त्रेणैव तत्कुरु
कृतं चेदन्यशास्त्रेण तन्त्रदोषाय कल्पयेत् ६
सौम्यं रौद्रं द्विधावत्स शैवं सौम्यमिति स्मृतम्
तदन्यं त्रिविधं तत्र रौद्रमेवेति कीर्तितम् ७
रौद्रेण पूजितश्चाहं तथा रौद्रफलप्रदम्
सौम्येन पूजितश्चाहं वत्ससौम्यफलप्रदम् ८
रौद्रं सौम्येन यष्टव्यं सौम्यं रौद्रेण नार्चितम्
वैदिकाचार सम्बन्धात् सौम्यं श्रेष्ठमिति स्मृतम् ९
श्रुत्युक्ताचारबाह्यत्वादपरं रौद्रमुच्यते

सौम्येन स्थापयेत् ग्रामे रौद्रेण तु न कारयेत्  १०
रौद्रेण स्थापितं मोहात् ग्रामनाशं भवेद्ध्रुवम्
सौम्यरौद्रमयं सर्वं  जगत्येवं चराचरम्  ११
तस्मात् सर्वप्रयत्नेन रौद्रं सौम्येन पूजयेत्
सर्वसिद्धिकरं चैतत् एतदुक्तं शिवात्मना  १२
पूर्वं  सौम्येन संस्थाप्य पश्चाद्रौद्रेण पूजयेत्
मोहेन चेत्कृतं तेन राजराष्ट्रं विनश्यति  १३
किमत्र बहुनोक्तेन सौम्येनैव तु पूजयेत्
कामिकाद्यष्टविंशच्च तन्त्रं शैवमिति स्मृतम्  १४
तदेव सौम्यमाख्यातं सिद्धान्तं हि तदेव तु
तदन्यं रौद्रमाख्यातं तन्त्रं पाशुपतादिकम्  १५
शैवसिद्धान्ततन्त्रेषु तन्त्रैकेन तु कारयेत्
अनुक्तेऽस्मिन् तथान्येन संकरं तु न दोषभाक्  १६
तथा वै चान्यतन्त्राणां तेषु तेषु न दोषकः
तन्त्राणां संकरं चैव समासात् परिकीर्तितम्  १७
षष्ठपञ्चाशत् पटलैः क्रियापादं सुकीर्तितम्
क्रियापादमिदं वत्स चर्यापादमथ शृणु  १८
तन्त्राणामवतारणादि सकलं संक्षेपतो भाषिते
तेषां संकरमन्त्यमेव तु मया शैवेषु सिद्धान्तकम्
पञ्चाशत् पटलश्चषष्ठमधिकं तत्संख्यया विद्यते
तत्पादं त्वखिलादिशैवसहितं नो पूजितं दुर्जनैः

इति तन्त्रसंकरविधिपटलः षट्पञ्चाशत्तमः  ५६

इति सुप्रभेदे क्रियापादः समाप्तः

शिवमयम्

# सुप्रभेदम्
## अथ चर्यापादे शैवोत्पत्तिविधिपटलः

अथातः सम्प्रवक्ष्यामि चर्यापादविधिक्रमम्
तस्य पादस्य पूर्वे तु शैवानामुद्भवं शृणु १
शैवं पाशुपतं सोमं लाकुलं तु चतुर्विधम्
एतच्चतुर्विधं शास्त्रं भेदाभावमिति स्मृतम् २
चतुर्विधेषु शास्त्रेषु यो भक्त्यदीक्षितः क्रमात्
त्रयाणां चास्त्रनाम्ना तु प्रोच्यते सकलावधि ३
चतुर्थे तु स्थितानां तु निष्कले कलवर्जितम्
शैवे तु वर्तते पुंसां शैवाश्चेति प्रकीर्तिताः ४
पाशुपतादिशास्त्रेषु तथा नामान्युदीरिताः
त्रिषु शास्त्रेषु भेदानि भिद्यन्ते स्वस्वमार्गकैः ५
इदानीं शैवभेदानि वक्ष्यन्ते तु समासतः
शास्त्रं चतुर्विधं ज्ञेयं वामदक्षिणमिश्रकम् ६
सिद्धान्तेन समायुक्तं चतुर्थैवं प्रकीर्तितम्
वामादिशास्त्रभेदेषु ये दीक्षां वर्तते क्रमात् ७
वामी च दक्षिणी मिश्री सिद्धान्तीति च कीर्तिताः
वामं हि शाम्भवं शादे दक्षिणं भैरवात्मकम् ८
मिश्रं यामलमित्युक्तं सप्तमातृप्रधानकम्
सिद्धान्तं शुद्धशैवं तु केवलं शाम्भवस्तथा ९
सिद्धान्तं सर्वसारं हि तत्त्वशुद्धं शिवं स्मृतम्
वामं च दक्षिणं चैव तद्द्वयोर्मिश्रकं तु हि १०
शैवबाह्याः समाख्याता ते तु शैवेऽप्यपूजिताः
कामिकादिप्रभेदेन चाष्टाविंशतिसंहिता ११
शुद्धं शैवान्तसिद्धान्तं तेषां भेदोपभेदकैः
सिद्धान्तं मिश्रमित्युक्तं नवयामलसंज्ञकम् १२

वामाचारस्तु वै पञ्च दक्षिणेऽपि तथैव च
द्वयोर्मिश्रं च गुरवः पञ्चपञ्चैव चोदिताः १३
सिद्धान्तं मिश्रशैवानां पञ्चानां लक्षणं शृणु
आचार्यः साधकश्चैव समयि पुत्रकस्तथा १४
चित्रकेटक इत्युक्तो मातृयज्ञेषु पूजितः
शुद्धशैवाख्य सिद्धान्तं दीक्षयादीक्षितः क्रमात् १५
साधकादि चतुष्काणामाचार्यस्त्वधिप स्मृतः
मातृणां स्थापनं पूजा तासां वह्नेस्तु तर्पणम् १६
स्नपनोत्सवशान्त्यादिस्त्वाचार्येणैव कारयेत्
तम्मिश्रोक्तानि कर्माणि कुर्यात्तैः साधकादिभिः १७
शिवाग्रजान्वयो भूत्वा आचार्यादि चतुष्ककाः
उक्तः पारशिवं चैव चित्रकेटकनामतः १८
समासमिश्रशैवानां यथा तथ्यं शृणूद्भवम्
अनादि शैवाः प्रथमं महाशैवा द्वितीयकम् १९
आदिशैवास्तृतीयं चतुर्थं चानुशैवकाः
पञ्चमेऽन्तरशैवास्तु शैवाः पञ्चविधा स्मृताः २०
शक्तिमूर्तीविशक्ती च नादो बिन्दुरिति स्मृतम्
सदाशिवेश्वरश्चैव षट्स्थाने ये च संस्थिताः २१
अनादिशैवा इमे प्रोक्ता महाशैवास्ततः शृणु
अनन्तादिशिखण्ड्यन्तास्तथा मन्त्रमहेश्वराः २२
मायाद्यवनिपर्यन्तं रुद्रा ये च महाबलाः
अनन्तेश्वर शिष्यास्ते दैत्याश्च ऋषयस्तथा २३
ब्रह्मविष्णादि देवास्तु यक्षोरक्षगणैः सह
महाशैवास्तु विख्याता आदिशैवान् शृणुष्व हि २४
अनुशैवा स्मृता ह्येते यक्षरक्षोरगैः सह
ब्राह्मणादि चतुर्वर्णा काश्यपादि समुद्भवाः २५

परमेश्वरप्रसादेन अधिकारे नियोजिताः
शिवधर्मप्रकाशाय सर्वेषां बोधनाय च २६
स्थापना प्रोक्षणादीक्षा विधिना कृत्यकारणात्
ऋषीणां मूर्तिमास्थानि शिवेन परमात्मना २७
अनुग्रहीताश्च ये सर्वे शैवास्त्वे वान्तर स्मृताः
शिवज्ञानयुताः सर्वे शिवधर्मपरायणाः २८
आचार्याः शिवशास्त्रज्ञा मोक्षज्ञाः शिववत् भुवि
शिववत् चिन्तयेत् सर्वे इति शास्त्रस्य निश्चयः २९
गोचरं गोत्रसूत्रौ च संक्षेपेण वदाम्यहम्
गोचरं शिवचिन्हं हि गोत्रं स्वमुनिवर्गकम् ३०
सूत्रमाचारमेवं हि शैवानामुच्यते क्रमात्
शिवः शिखा तथा ज्योतिः सावित्री व्योमगोचराः ३१
एतानि पञ्चनामानि शैवानां शिवशासने
गोचरं कुलमित्युक्तं तच्चिन्हं चातुर्वर्णिनाम् ३२
काश्यप कौशिकश्चैव भारद्वाजोऽथ गौतमः
आत्रेयः पञ्चधा ज्ञेयाः सम्प्रोक्ता मुनयस्त्विह ३३
काश्यपादिमुनीनां तु शिवगोचरमुच्यते
काश्यपोनमुचिश्चैव मनुजोमनुभः सह ३४
विश्वामित्रश्च वाल्मीकः पुलस्त्यः पुलहः क्रतुः
सनत्कुमारो मेधावी सवक्रश्च पराशरः ३५
सनन्दनः सदीर्घश्च सनकश्च सनातनः
एतेषां ऋषिवर्गाणां गोचरं शिवगोचरः ३६
कौशिकादिमुनिनां तु शिखागोचरमुच्यते
कौशिकः कुशिकश्चैव प्राजापतिस्तु पञ्चमः ३७
शङ्ख्यायन्तं तथा भूमि सनन्तः खद्यपूरणः
शाण्डिल्यो जनकश्चैव सुवर्णस्थाण्डिरेव च ३८

शंखस्थूलो ऋतुश्चैव वीरजो रोमहर्षणः
सर्वे तेषामृषीणां च शिखागोचरमुच्यते ३९
मुनीनां भारद्वाजादि ज्योतिर्गोचरमुच्यते
भारद्वाजो वसिष्ठश्च मार्कण्डस्थण्डिलो गुरुः ४०
स्थापनं प्रोक्षणं दीक्षा विधिनाकृत्यकारणात्
ये शिवं निर्मितायेन शिवेन परमात्मना ४१
सशैव ब्रह्मवक्त्रे च मर्त्यलोकं व्रजेत् क्रमात्
काश्यपादीनि नामानि ऋषिरूपैश्च कीर्तिताः ४२
आदौ शिवस्त्वमस्तीति आदिशैव उदीरितः
शिवेन दीक्षिताश्चैते ते शिवब्राह्मणा स्मृताः ४३
सर्वोत्तमाः पराचार्याः विप्रोत्तमाः शिवोत्तमाः
द्विजोत्तमोत्तमाश्चैव शिवभेदाः शिवात्मकाः ४४
एषां पर्याय नामानि संक्षेपात् कथितं तव
क्रिमिकीटपदंकेभ्यः पर्शपः प्राज्ञयाज्ञकाः ४५
पशुभ्योऽपि नराः श्रेष्ठास्तेषु श्रेष्ठा द्विजास्तथा
द्विजातिष्वधिका विप्रा विप्रेषुक्र तु बुद्धयः ४६
क्रतु बुद्धेषु कर्तव्यास्तेभ्यः सन्यासयोऽधिकाः
सन्यासयोऽधिकात् श्रेष्ठास्तेषु शङ्करपूजिताः ४७
इति चर्यापादे शैवोत्पत्तिविधिपटलः प्रथमः १

## अथ जातिभेदविधिपटलः

अथातः सम्प्रवक्ष्यामि जातिभेदविधिं क्रमात्
शिवसृष्टिः पुरा पश्चात् ब्रह्मसृष्टिः प्रवर्तते १
गोचरास्तु ततो भेदाः शिवभेदा द्विधा स्मृताः
मुखेषु ब्राह्मणाजातास्तद्बाह्वोः क्षत्रियास्तथा २
वैश्या ऊरुश्च विज्ञेयाः पादयोः शूद्रजातयः

चतुर्वर्णस्य संयोगात् प्रतिलोमानुलोमतः ३
तेषां तद्योगकाले तु जायन्ते चान्तरालकाः
ततो वृत्तेश्च जायन्ते तेषां चैवोद्भवं शृणु ४
वर्णोवर्णो यथा मातः शक्तिशम्भुमयात्मकाः
शक्तिस्त्रीरूपमित्युक्तं पुरुषः शम्भुरुच्यते ५
शक्तिशम्भुमयं प्राहुर्जगदेतच्चराचरम्
ब्राह्मणादि चतुर्वणाः सुस्नानं ह्यनुपूर्वशः ६
तेषां वृत्तिसमाचारं ततः स्नत्वं वदाम्यहम्
शिवसृष्ट्या यथा यस्माज्जायन्ते केवलं मुखात् ७
चतुर्वर्णा शुद्धवर्णा दीक्षायां प्रापयेच्छिवम्
लौकिकाचारमार्गेण सर्वेषां वर्तनं शृणु ८
अद्ध्यनं चाद्ध्यापनं यजनं याजनं तथा
दानं प्रतिग्रहं चैव तेषां कर्माणि चोच्यते ९
जायन्ते ब्रह्मबाह्वोश्च क्षत्रियास्तु महामते
नृपक्षत्रियराजानौ राजाभूपाश्च भूपकाः १०
षडेते निजनामानि तेषां पर्यायवाचकाः
जगतः पालनन्तेषां स्वधर्मपरिपालनम् ११
ब्रह्माण ऊर्वोर्वैश्यानाञ्जननं तु विधीयते
पीतायां न्यास्तु वणिजः कामदाः सर्वलौकिकाः १२
पञ्चैतानि मयोक्तानि वैश्यपर्यायवाचकाः
गोपाल कृषिवाणिज्य कर्मत्रयसमायुताः १३
पादयोस्त्वं सृजच्छूद्रान् स्त्रीवर्णानामुपासकान्
शुश्रूषां तु द्विजानां च शूद्राणां वृत्तिरुच्यते १४
कृष्णाश्च कार्षकाः शूद्रा वृषला प्रेष्यकारकाः
एतानि पञ्चनामानि शूद्रपर्यायवाचकाः १५
अथितश्चाथ शूद्रस्तु सच्छूद्रं वैश्यवत् स्मरेत्

अमद्यपाः कुलीनास्तु सत्शूद्रास्ते प्रकीर्तिताः १६
तत्तद्वर्णेषु विधिना जायन्ते क्रमशः तथा
ब्राह्मणादि चतुर्वर्णाः वर्णानां स्वस्वजातयः १७
चातुर्वर्णा इमे प्रोक्तास्त्वनुलोमानि मे शृणु
स्वर्णं प्रथमं विद्यादम्बष्ठश्च द्वितीयकम् १८
पारशैवस्तृतीयं तु जायन्ते ब्राह्मणोद्भवैः
मद्गुरूत्युग्रनामा च जायेते तौ नृपस्य तु १९
वैश्यस्य चूचुको ज्ञेयस्त्वनुलोमाः षडैव तु
सम्प्राप्य विप्रोधर्मेण रक्तकन्यां समन्त्रकम् २०
तत्र जातः सवर्णस्तु जानुलोमेषु पूजितम्
तद्ब्राह्मणस्तु संज्ञो वै कर्माधर्मण विस्मृतः २१
हयङ्गजं रथं वापि वाहयेद् वा नृपा ज्ञया
सेनापत्यं च मूनां वा कुर्यादा जीवसंयुतः २२
पीतस्त्री विप्रसंयोगा दम्बष्ठोनामजायते
तस्य वृत्तिर्भवेत् कक्ष्या तथैव ज्वालनर्तनम् २३
शूद्रस्त्री विप्रसंयोगाज्ञातः पारशव स्मृतः
शूलं चक्षुद्र वाद्यं च नालिशंसन जीवनम् २४
नृत्तं वाद्यं च कर्तव्यं तथामद्दल वृत्तिका
रक्तस्य पीतकन्यायां जातोमद्गुरिति स्मृतः २५
महाश्रेष्ठी तु नाम्ना च वैश्य प्रत्युपजीवनम्
इयं तत्रैव वृत्तिस्तु नक्षत्रं कर्म आचरेत् २६
कृष्णाया रक्तसंयोगाज्ञात श्रोत्र इति स्मृतः
दण्डकर्मसुरक्तस्तु दण्डं तत्रैव कारयेत् २७
कृष्णायां पीतसंयोगाज्ञातश्चूचुक एव वा
काष्ठं चैव तृणादीनि वन्यजातीववृत्तिकः २८
क्रमुकानां फलैः पत्रैर्विक्रियाजीववृत्तिका

अनुलोमा इमे प्रोक्ताः प्रतिलोमास्ततः शृणु २९
वैदेह पुल्कसं चैव चण्डालश्च तथैव च
आयोगो मागधश्चैव जायन्ते कामतश्च तु ३०
सूतो नृपस्य एवं च प्रोच्यते प्रतिलोमतः
वैश्यायां कृष्णसंयोगाज्जातो वै देहकः स्मृतः ३१
गवां महिषमेषाणां कुर्यात् सम्यक् प्रपालनम्
पालिप्रत्युपजीवी च तेषां तत्क्रयविक्रयम् ३२
रक्तायां कृष्णसंयोगाज्जातः पुलस उच्यते
सुरासं ग्रहणं कृत्वा विक्रयं जीवनं स्मृतम् ३३
श्वेतायां शूद्रसंयोगाज्जातश्चण्डाल उच्यते
कर्णौ संधाय्यगोचर्म आयसाभरणं तथा ३४
झल्लरी कक्षतो वापि मलं सर्वं व्यपोह्य च
पूर्वाह्णे संविशेद्ग्राममपराह्णेन संविशेत् ३५
रक्तायां पीतसंयोगाज्जातस्त्वा योगवस्मृतः
वस्त्रतन्त्रोपजीवी च तन्तु वाया भवेत्खलु ३६
विप्रस्त्रीपीतसंयोगाजातो मागध उच्यते
सर्वांश्च वन्दनं कृत्वा कीर्तनं च विशेषतः ३७
अधसं स्पृश्यं तु कृष्णं चेत् तस्यान्नं तु न भुज्यते
सर्वेषां प्रेषणं कृत्वा तज्जं वारिकवृत्तिका ३८
विप्रायां तु नृपस्यैव विधिना यदि जायते
पूजितः प्रतिलोमेषु ससूतो नाम नामतः ३९
श्वेतत्वप्रतिलोमेषु अस्यैव तु विधीयते
तेषामध्ययनं प्रोक्तं धर्माणामनुबोधकम् ४०
प्रतिलोमा इमे प्रोक्ताः गूढजातास्ततः शृणु
ब्राह्मण्यां ब्राह्मणस्यैव प्रमादात् गूढजातकः ४१
सोऽपि विप्रस्तु विज्ञेयो यागाध्यापनवर्जितः

नृपायां ब्राह्मणस्यैव चोररूपेण जायते ४२
ज्योतिषं गणितं चैव भूततन्त्रार्थनिश्चितम्
आयुर्वेदमथाष्टाङ्गमुच्यते गणिकस्य तु ४३
वैश्यायां ब्राह्मणस्यैव चोरा वै कुम्भकारकाः
कुलालवृत्या जीवी च ना पिताश्च तदेव तु ४४
सूतके प्रेतके चान्ये नाभेरूर्ध्वं तु चार्पयेत्
शूद्रायास्तु द्विजस्येव चोराज्ञातो निषादकः ४५
अन्तव्यालमृगादीनि संग्रहादुपजीवकः
श्वेतायां तु नृपाच्चोराज्ञातः सोरथ कारकः ४६
आचरेच्छूद्रवन्नित्यं श्वेतत्वप्रतिवर्जितः
वाहनानि तु सम्प्रेष्य तेषां तु परिचारकम् ४७
रक्तायां रक्तसञ्चोरात् सोऽपि रक्त इति स्मृतः
अभिषेकं विना तस्य शासनी पट्टबन्धनम् ४८
आचारं रक्तवन्नित्यं भोज इत्यभिधीयते
पुनर्भूकरणे जातो रक्तायां रक्तनामतः ४९
भोजैः समन्तं विद्यात नृपं कानि नमेव च
वैश्यायां रक्तसंञ्चोरा दश्वव्यापारमुच्यते ५०
वृषल्या रक्तसञ्चोराच्चूलिको नाम उच्यते
रज्ञश्चैव नियोगेन शूलकर्मस्वयोजितः ५१
ब्राह्मण्यां पीतसञ्चोराज्ञातः कालरिति स्मृतः
वस्त्राणां जलसेकं तु क्षालनं वृत्तिरस्य तु ५२
रक्तायां पीतसञ्चोरादारण्या जीववृत्तिकः
पीतायां पीतसञ्चोरामणिकारक उच्यते ५३
मणीनां विक्रयं कृत्वा शम्बायां वलय क्रिया
वृषल्यां पीतसञ्चोरात् कटप्यापार उच्यते ५४
श्वेतायां कृष्णसञ्चोराद्वेदकारक उचयते

रक्तायां कृष्णसञ्जोराञ्जातो वैणक उच्यते ५५
अस्पृश्याश्च त्रिभिर्वर्णैर्वैणवं जपमाचरेत्
पीतायां कृष्णसञ्जोराञ्जातो लवणविक्रयः ५६
स एव च क्रिको ज्ञेयस्तैलपिण्याकवृत्तिकः
कृष्णायां कृष्णसञ्जोराञ्जातो मालव उच्यते ५७
तद्वृत्तिर्गोगजाश्वानां तृणभारं च वा भयेत्
अन्तराल इमे प्रोक्ता वृत्याश्चैव तत शृणु ५८
अनुलोम प्रतिलोमानां चातुर्वर्णेषु कारणम्
तत्र जातमनुष्याणां वृत्ताभिख्यासुरत्र वै ५९
अबष्ठस्य तु विप्रायां जातो वापकवृत्तिकः
रक्तायां पीतवद्योगा दधो नापित उच्यते ६०
रोमाणां वपनं कुर्यात् वृत्तिर्नाभेरधस्ततः
विप्रस्त्रीचूचुकस्यैव जातस्तक्षकनामतः ६१
रक्तायामेव तस्यैव जातोमाल्यस्य बन्धकः
पीतायामपि जातोऽसौ सामुद्रः पश्यजीवकः ६२
मञ्जाततस्तु विप्रायां श्रवणं च विधीयते
रक्तायामेव सञ्जातः कर्मकार इति स्मृतः ६३
अग्रस्त्रीपुष्कलयोश्च जातोरजक उच्यते
चण्डालस्य तु विप्रायाञ्जातः श्वपच उच्यते ६४
श्वमांसं भक्षणं तेषां श्मशाने तु निवासयेत्
एवमादीनि भेदानि युक्तियुक्तानि योजयेत् ६५
इह तस्माच्च भेदानि वक्तुं वर्षशतैर्न हि
समासोक्त्या तु भेदानि चोक्तं दीक्षार्भकान् शृणु ६६
ब्राह्मणाक्षत्रिया वैश्याः शूद्राश्चैव प्रकीर्तिताः
एतेषां चातुर्वर्णानामाचार्यत्वं नियोजयेत् ६७
स तु संस्कारमन्येषां कुर्यात् तद्देशिकोत्तमः

अनुलोमाश्च षट्प्रोक्ताः प्रतिलोमास्त्रय स्मृताः ६८
सूतश्च मागधश्चैव आयोगावसृतीयकः
अन्तरालश्च सर्वे च दीक्षा कर्मणि योजिताः ६९
व्रात्यः सर्वे तु संयोज्याः सर्वकर्मबहिष्कृताः
जातिभेदं मया प्रोक्तं मण्डलं च ततः शृणु ७०
इति जातिभेदविधिपटलो द्वितीयः २

## अथ मण्डलविधिपटलः

अथातः सम्प्रवक्ष्यामि मण्डलं सार्वकामिकम्
मण्डलं सारमित्युक्तं सर्वदेवालयं कृतः १
मण्डलन्तेन विख्यातं शिवेन परमात्मना
सर्वपापानि मुच्यन्ते ततो मण्डलदर्शनात् २
दीक्षाकालस्य पूर्वे तु मण्डलं विधिना बहुः
यथा भूमिं परिक्ष्याथ तथा भूमिपरिग्रहम् ३
महेन्द्रे मलये विन्ध्य हिमवत् पारियात्रके
गङ्गातीरे सरित्पुण्ये सामुद्रायाश्रितेऽपि वा ४
पुष्पोद्यानेऽथवा नित्यं क्षीरवृक्षसमीपके
शुद्धदेशे मनोरम्ये ग्रहे देवालयेऽपि वा ५
प्रागुदक्प्लवणे देशे मण्डलं त्वालिखेद्बुधः
सप्तम्यां च नवम्यां च एकादश्यामथापि वा ६
त्रयोदश्याममावास्यां दीक्षाकर्मप्रशस्यते
नक्षत्राणि शुभान्याहुरादित्ये सोमवासरे ७
गुरुशुक्रेन्दु सूनौ च दीक्षाकर्मणि शोभनम्
शिष्यान् संवत्परात् पूर्वे परीक्ष्यात्र गुणागुणान् ८
गुणयुक्तां तु सङ्ग्राह्य गुणहीनांश्च वर्जयेत्
अङ्कुरानर्पयित्वा तु पूर्वोक्तविधिनैव तु ९

प्रथमं मराडलं विद्याद्दीक्षा कर्म द्वितीयकम्
तृतीयमभिषेकं तु क्रमेरौव विधीयते १०
ऋधुना मराडलं यत्तत् समासाच्छृरणु सुव्रत
हस्तमात्रं खनेद्भूमिं तन्मृदापूर्यचावटम् ११
तथाधिकापिसा श्रेष्ठा समासामध्यमा स्मृता
न्यूनैव कन्यसाभूमिस्तद्वत् भूमेस्तु तत्फलम् १२
उत्तमं सर्वसिद्ध्यर्थं मध्यमं स्वेष्टकामदम्
वर्जितं चाधमं यत्र तन्मध्योत्तमके शुभे १३
चतुरश्रं समं कृत्वा सम्प्रोक्ष्य पञ्चगव्यकैः
मराडपं वा प्रपां वापि सर्वालङ्कारसंयुतम् १४
विंशत् षोडशहस्तैर्वा हस्तैर्द्वादशभिस्तु वा
दिग्रन्ध्रवसुहस्तैर्वा मध्यस्तम्भविहीनकम् १५
चतुर्द्वारसमायुक्तं चतुस्तोररणभूषितम्
तन्मध्ये वेदिकां कुर्यात् तन्मध्ये मराडलं बुधः १६
शिवभक्तान्भोजयेच्च प्रोक्षयेदस्त्रवारिरणा
वास्तुपूजाविधानेन वास्तुहोमं तु कारयेत् १७
स्थरिडलन्तत्र कर्तव्यं शिवाख्यं कलशं न्यसेत्
वर्द्धनीं वामपार्श्वे तु हेमरत्नाम्बुसंयुतम् १८
वस्त्रयुग्मसमायुक्तौ सकूर्चौ सा पिधानकौ
शिवाख्यं शिवमन्त्रेण उमाख्यं गौरिनामतः १९
सम्पूज्यैवं विधानेन तत् कुम्भाभ्याञ्जलैः शुभैः
भूमिं द्रव्यारिण शिष्यांस्तु सम्प्रोक्ष्यास्त्रोदकेन तु २०
ऋषियज्ञमिदं कृत्वा पूर्वरात्रौ तु देशिकः
ऋधिवास्य ततः पश्चाच्छिवमन्त्रगरौः सह २१
शिवद्रव्येरण संयुक्तं शिवयज्ञमथाखिलम्
योगपीठं न्यसेन्मध्ये तत्वत्रयसमन्वितम् २२

शिवं यष्ट्वा विधानेन कुण्डे वा स्थण्डिलेऽपि वा
शिवाग्निं जनयित्वा तु पूर्ववद्विधिना यथा  २३
सम्पूज्य विधिना चाग्निं शिष्यांश्चैवाधिवासयेत्
विप्रादीनांश्च वर्णानां स्त्रीपुमांश्च नपुंसकान्  २४
चोदितां छिवभक्तांस्तु दीक्षयेन्मन्त्रवित् सदा
चरुन्दत्वा ततस्तेषां शिवमन्त्रैस्तु साधितम्  २५
आनयित्वा ततस्थालीं क्षालयित्वा शिवाम्भसा
गन्धपुष्पार्चितां कृत्वा तण्डुलैराढकैर्युतम्  २६
पुष्पैर्दर्भैस्तु परितः कवचेन तु बुद्धिमान्
कपिलायास्तु पयसा घृतमिश्रेण पूरयेत्  २७
न्यस्त्वाग्निमध्यमे स्थालीं शनैर्मृद्वग्निनापचेत्
यदा पक्वं चरुन्तत्र तदा तमवतारयेत्  २८
गोघृतेन हृदा मन्त्री चरुं तत्राभिघार्य च
सम्पाद्य विधिना हुत्वा मन्त्रैः सर्वैः सकृत्सकृत्  २९
सेत्यग्नौ तु हुतं हुत्वा आज्यशेषमथोदरे
निवेदयित्वा देवस्य चर्तर्भागैकभागिकम्  ३०
उपोषितानां शिष्याणां त्रिभागं चैव दापयेत्
दन्तैरस्पृश्य विधिवत् पञ्चब्रह्माप्यनुस्मरन्  ३१
भक्षयित्वा विधानेन पिण्डं प्रत्याचरेद्बुधः
दन्तकाष्ठं ततः कृत्वा पञ्चगव्यं तु पाययेत्  ३२
दशाक्षरञ्जपित्वा तु विद्याङ्गैर्ब्रह्मभिर्युतम्
बीजमुख्यं ततो जप्त्वा क्षुरिकां तु विशेषतः  ३३
ततः प्रतिसरं बध्वा शिष्यानाचार्यकः पृथक्
गन्धपुष्पादिनाभ्यर्च्य शिवपार्श्वे स्वपेन्निशि  ३४
भस्मशय्या समारूढः शिवद्ध्यानपरायणः
ॐ शम्भवे त्रिणेत्राय पिङ्गलाय महात्मने  ३५

वामाय विश्वरूपाय स्वप्नाधिपतये नमः
इमं मत्रं जपित्वा तु शिष्यं तु शयने तथा ३६
यागस्थाने वसेन्मंत्री शिष्यैः सार्धं शिवाग्रतः
ततः प्रभाते यत् स्वप्नं रात्रौ दृष्टं गुरोस्तदा ३७
स्वप्नं संश्राव्ययत्तथ्यं शुभवाप्यशुभं तथा
शुभे सुखमवाप्नोति शिष्याणां त्वैहिकं फलम् ३८
अशुभं चेत्तदामोक्षमैहिकी सिद्धिवर्जितम्
शिष्यद्रव्येण कर्तव्यं दीक्षायज्ञमथाखिलम् ३९
त्यक्त्वा प्रतिसरं धीमान्ततः स्नानं विधानतः
रात्रा वै वंकृते पश्चात् प्रभाते मण्डलं लिखेत् ४०
तद्दृष्ट्वा मुच्यते देही त्वशेषपशुबन्धनात्
एकहस्तं द्विहस्तं वा चतुर्हस्ताष्टहस्तकम् ४१
द्वादशं षोडशं हस्तं मत ऊर्ध्वं न कारयेत्
सूत्राणामन्तरं बध्वा द्वित्रिभागस्तु लक्षयेत् ४२
वामदेवेन मन्त्रेण सूत्रपातस्तु कारयेत्
पूर्वपश्चिमदिग्भागे सूत्रं दत्वा समाहितः ४३
तत्वसूत्रं प्रसार्याथ दक्षिणोत्तरगं शुभम्
तस्य सूत्रं ततो ग्राह्य आश्रमेन विनिर्मिते ४४
पूर्वादिचोत्तरान्तं च सूत्रं तत्र प्रसारयेत्
आग्नेय्यां प्रभवं सूत्रं वायव्यां तु विसार्य च ४५
ऐशान्यां प्रभवं सूत्रं नैर्ऋत्यां तु विसारयेत्
चतुरश्रं समं कृत्वा नवभागं विभज्यताम् ४६
मध्यभागेन पद्मस्य कर्णिकायां समालिखेत्
चतुर्भागैस्तु तत्पद्ममष्टपत्रोपशोभितम् ४७
प्रथमं कर्णिकाभागं द्वितीयं केसराणि वै
तृतीयं दलसन्धौ तु दलाग्राणि चतुर्थकम् ४८

प्रतिमावरणे रेखां पद्मबाह्ये तु बुद्धिमान्
पद्मस्यैवं प्रमाणं तदनन्तत्वाच्छिवस्य च ४६
स्वल्पे स्वल्पं तु कर्तव्यं विस्तारे विस्तरं भवेत्
वीथिः पद्मार्धमानेन पद्ममानेन वा पुनः ५०
वीथ्यासमो भवेत् पद्मं शोभापद्मं समाश्रिता
तत्समानकपोले तु शोभान्तुल्यापशोभका ५१
पञ्चमं तु समद्वारं चतुर्दिक्षु विशेषतः
द्विहस्तमेकहस्तं वा अत ऊर्ध्वं विवर्जयेत् ५२
निस्थूलं न कृशं हीनं वक्रबिन्दुविवर्जितम्
देवस्य भवनं कृत्वा प्रोक्तं तन्मोक्षसिद्धिदम् ५३
स्थूलं सर्वभयं प्रोक्तं वक्रे कलहमादिशेत्
हीने तु सिद्धिहीनं तु बिन्दौ शत्रुभयपदम् ५४
कृशे व्याधिसमुत्पन्नं दुर्भिक्षं वर्णमिश्रके
सान्निध्यं न भवेच्छोभा राजतः सूत्रलघने ५५
तस्मात् सर्वप्रयत्नेन कर्तव्यं लक्षणान्वितम्
शुक्लं रक्तासितासूत्रं रजतस्त्रिविधं स्मृतम् ५६
वामे ज्येष्ठा च रौद्री च वर्णानामधिदेवता
मुहूर्तस्य प्रकाशार्थं शुक्लवर्णस्य पातनम् ५७
तद्राग जननार्थाय रक्तवर्णस्य पातनम्
तामसस्तु निव्रत्यैव कृष्णवर्णं प्रपातयेत् ५८
तेषां यागफलप्राप्त्यै पीतवर्णं प्रपातयेत्
आलिख्य शुक्लवर्णाद्यैः कनिष्ठाङ्गुलिनाहतः ५९
सूत्रान्तरं यवं प्रोक्तं ह्रस्वाद्ध्रस्वन्तरं स्मृतम्
असव्येन तु मुक्त्यर्थी भुक्त्यर्थी सव्यकेन तु ६०
सर्वसिद्धिकराग्रेण श्रीकामिमुष्टिना लिखेत्
मुक्ताचूर्णैस्तु सम्मिश्रं शुक्लवर्णं विशेषतः ६१

पद्मरागस्य चूर्णैस्तु रक्तवर्णं प्रशस्यते
इन्द्रनीलस्य चूर्णैस्तु कृष्णवर्णं प्रकीर्तितम् ६२
चामीकरस्य चूर्णैस्तु उमावर्णमुदाहृतम्
अलाभे संखचूर्णैश्च जातिलिङ्गस्य चूर्णकैः ६३
कृष्णाञ्जनस्य चूर्णैस्तु मनःशिलायाश्च चूर्णकैः
तेषामलाभे चूर्णानां शालितण्डुलचूर्णकैः ६४
पक्वेष्टकायाश्चूर्णैश्च दग्धतण्डुलचूर्णकैः
ततो हरिद्रा चूर्णैस्तु कारयेदब्जमत्र वै ६५
कर्णिकापीतवर्णेन पुष्करा हेमसन्निभैः
यवमात्रोन्नतास्तस्यां पञ्चविंशति पुष्करम् ६६
केसरागुणसङ्काशास्त्वधोर्ध्वे शुक्लवर्णकाः
पद्मस्याष्टदलं श्वेतं कृष्णं रेखान्तरेषु वै ६७
रेखापार्श्वे तु रक्तान्तौ तथैव प्रतिवारणम्
रक्तवर्णेन वीथी स्यात् पद्मस्य परितस्तदा ६८
द्वाराणि पीतवर्णानि कर्तव्यौ द्वारपार्श्वयोः
शोभाश्चाप्युपशोभाश्च सर्ववर्णैस्तु कारयेत् ६९
एवं समाप्तेन लिने शिवमावाहयेद्बुधः
मद्ध्ये सदाशिवं यष्ट्वा गन्धपुष्पादिभिर्युतम् ७०
गर्भावरणसम्पूज्य विद्येशावरणं ततः
गणेशावरणं पश्चाल्लोकेशावरणं ततः ७१
अस्त्रावरणमेवं तु पूजयेत् तु यथा विधि
ईश्वरं दक्षिणे यष्ट्वा गौरीं तस्यैव वामके ७२
मण्डलस्य विधिः प्रोक्तं दीक्षाविधिमतः शृणु
इति मण्डलविधिपटलस्तृतीयः ३

## अथ दीक्षाविधिपटलः

अत ऊर्ध्वं प्रवक्ष्यामि दीक्षामार्गं विशेषतः
दीयते तच्छिवत्वं हि क्षीयते पापपञ्जरः १
क्षयदानविशेषत्वाद्दीक्षा चेत्यभिधीयते
मण्डलं पूजयित्वा तु तदग्रे चाग्निपूजनम् २
शिवाग्निं विधिवद्धुत्वा प्रागुक्तविधिना हुतः
ततस्तु दीक्षयेच्छिष्यान् ब्राह्मणादि क्रमेण तु ३
आचार्यलक्षणोपेतः शैवसिद्धान्तवित्सुधीः
नैष्ठिकः शिवयोगज्ञः सर्वेषां तु गुरूत्तमः ४
सुस्नात्वा शैवमन्त्रज्ञः सकलीकृतविग्रहः
प्रोक्षणं प्रथमं कृत्वा दीक्षां कुर्याद्दिनान्तरे ५
सम्पूज्य विधिवच्छिष्यां दीक्षां कुर्यात् द्वितीयकम्
विप्रादीं च ततः शिष्यान् शुचिस्नात्वा जितेन्द्रियान् ६
उत्तराभिमुखान् पुष्पैः कुशैरास्तीर्यमण्डले
शिवाम्भसा तु सम्प्रोक्ष्य चाङ्गुल्यास्त्रेण भस्मना ७
दहेत्कालाग्निना सर्वं शरीरं शुष्ककाष्ठवत्
ततो स्यालभतं कार्यं शिववीजेन मुद्रया ८
हृदा हृदयमालभ्य शिरसा तु शिरस्तथा
शिखया तु शिखां स्पृष्ट्वा कवचेन स्तनान्तरम् ९
नेत्रेण नेत्रं स्पृष्ट्वा तु सर्वेष्वङ्गेषु चा स्मृतः
शिवहस्तं तु दातव्यमीशानोद्याभिमन्त्रितम् १०
तेषां मूर्धसुतद्धस्तं त्रिधा संस्वापयेद्बुधः
गन्धाद्यैस्तु समभ्यर्च्य प्रोक्षणं चैवमुच्यते ११
तस्याग्रे मण्डलं कृत्वा चतुरश्रसमन्वितम्
पिष्टचूर्णैरलङ्कृत्य दर्भैरास्तीर्य पुष्पकैः १२
ईशानं मध्यमे स्थाने वक्त्रमैन्द्र तु बुद्धिमान्
अघोरं दक्षिणे न्यस्त्वा पश्चिमे सद्य एव तु १३

उत्तरे वामदेवं तु आग्नेय्यां हृदयं ततः
ब्राह्मशिरस्तु नैर्ऋत्यां शिखां वै वायुदेशके १४
कवचं त्वीशदिग्भागे तत्तन्नाम्ना समाचरेत्
देवस्याभिमुखाञ्छिष्यान् भस्मोद्धूल न विग्रहान् १५
नेत्रे च नेत्रमन्त्रेण संवेष्ट्य नववस्त्रकैः
विप्रादीनां तु शिष्याणां तद्वर्णं समपुष्पकम् १६
निक्षिप्यमण्डले मध्ये शिवमन्त्रं समुच्चरन्
यस्मिन् च नृपतेः पुष्पं नाम गोत्रं तदात्मकम् १७
ईशानवक्त्र विद्येशान घोरब्रह्मसद्यकम्
रुद्रो वामश्च हुंकारो नवधा नाम उच्यते १८
ब्राह्मणादि चतुर्णां तु गणान्तान्तं शिवादिकम्
स्त्रीणां तु शक्तिनामान्तं दीक्षनाम विधीयते १९
नैष्ठिकानां विशेषोऽस्ति गोचरं गोत्रसन्ततिः
शिवः शिखा तथा ज्योतिः सावित्री चेति गोचराः २०
दूर्वासादिचतुर्णां तु तद्वर्णं गोत्रमुच्यते
चर्यापादे तु यत्प्रोक्तं तत्सूत्रं शिवभाषितम् २१
आचार्यं गोचरं गोत्रं सूत्रं तस्य विधीयते
प्रागुक्तवत् समयिनां तेषामभिमुखं गुरुः २२
करन्यासं पुराकृत्वा दहनप्लावनं चरेत्
अष्टत्रिंशत् कलान्यासं कृत्वा तास्तु पुरोक्तवत् २३
हृदयानि षडंगानि पञ्चब्रह्माणि विन्यसेत्
रुद्रमन्त्रदशात्मानं प्रासादं विन्यसेत्ततः २४
षडध्वानां तु संकल्प्य शिवास्यं न कथं यथा
करादिपां नदान्तस्य स्वमूर्ध्नादि यथा क्रमम् २५
तच्छिष्यानां तु देहेषु एकैकं विन्यसेत् ततः
षडध्वशोधनं ह्येनं ततो होमं समाचरेत् २६

तत्वाध्वा च पदाध्वा च वर्णाध्वा भुवनात्मकम्
मन्त्राध्वा च कलाध्वा च एकैकं होमयेच्छतम् २७
विद्येशानां स्वमन्त्रैश्च गणेशानां स्वमन्त्रकैः
लोकेशानां स्वमन्त्रैश्च दशास्त्राणां समन्त्रकैः २८
घृतेन होमयेद् विद्वान् प्रत्येकं तु शताहुतिः
एवं कर्तुमशकश्चेत् तत्वदीक्षां समाचरेत् २९
संश्राव्य समया पश्चात् देवदेवस्य चाग्रतः
शिवशास्त्रमनिन्द्यं हि प्रविशेद्दीक्षितान् सदा ३०
आचार्यस्य तु ज्येष्ठानां लिङ्गस्तायां न लंघयेत्
अदीक्षिता च या नारी सङ्गमं वर्जयेत् तदा ३१
निर्माल्यं तु न भुञ्जीत भस्मयुक्तां न निन्दयेत्
इत्यष्टौ समयास्त्वेते दीक्षितानां प्रकीर्तिताः ३२
पालनीयास्तथा ह्येते दीक्षितानां वचः शृणु
सुशीलः सुवृतश्चैव शिवभक्ति गुरुस्तथा ३३
शिवशास्त्रे रतिश्चैव यदा क्षान्ति जितेन्द्रियः
इत्यष्टा वस्तिचेत् पुंछः सयान्ति परमांगतिम् ३४
न पालयन्ति ये मोहात्ते यान्ति नरके भृशम्
कृत्वा तु दिग्बलिं तत्र गन्धपुष्पादिभिर्युतम् ३५
सपत्नीकाश्च शिष्याश्च ततः स्वश्रमसंयुता
इत्येवं विधिवत् कृत्वा पश्चाद्धोमं प्रकीर्तितम् ३६
शिवाग्निं पूर्ववत् कृत्वा शिष्यानाहूयमन्त्रवित्
अभिमुखे तथा सीनाश्चार्घ्य पाद्यादिनार्चयेत् ३७
वक्ष्येऽहं तद्यथा युक्तं पञ्चधा शृणु साम्प्रतम्
उक्तासुतासु सर्वा तु श्रेष्ठा चेत्यभिधीयते ३८
पृथिव्यापसथा तेजोवायुराकाशमुच्यते
काला न याच्छिवं यावत् पञ्चतत्वैर्व्यवस्थितम् ३९

पार्त्थीवं तु निवृत्यां वै शतरुद्रमवस्थितम्
आपत्प्रतिष्ठाया विद्या यावच्च प्रकृतिं नरम् ४०
तेजो वै विद्यया ज्ञेया यावद्विद्येश्वरान्तकम्
वायुः शास्त्या तु विज्ञेयास्ततः सदाशिवान्तकम् ४१
शक्त्यन्तं नाभिरित्युक्ताः शान्त्याती तेन बुद्धिमान्
निवृत्तिर्जानुपर्यन्तं प्रतिष्ठानाभि सीमकान् ४२
विद्या कर्णान्तमेवं हि मुखान्तं शान्तिरेव तु
शान्त्यातीतं तदूर्ध्वे तु परापर शिवान्तकम् ४३
निवृत्तिं सद्यमन्त्रेण प्रतिष्ठां वाममन्त्रतः
विद्याघोरेण होतव्यं शान्तिस्तत्पुरुषेण तु ४४
शान्त्यातीतमथैशान मन्त्रेण जुहुयाद्बुधः
एकैकस्य शतं हुत्वा तदर्धं वार्धमेव वा ४५
एवमेव हुतं हुत्वा बुधस्तत्वैस्तु पञ्चभिः
अन्यजन्मविनाशाय हृदयेन शतं हुनेत् ४६
पशुत्वं नाशनं तस्माच्छिवत्वं हि निवर्तते
ततः पूर्णाहुतिं हुत्वा पञ्चब्रह्मभिरेव तु ४७
एवं समाप्य तद्दीक्षामभिषेकं ततः शृणु
सर्वालंकारसंयुक्तं मण्डपे समलंकृते ४८
शिवाग्निं पूर्ववत् कृत्वा अभिषेकं समाचरेत्
हस्तादि पञ्चहस्तान्तं यथा वित्तानुसारतः ४९
स्नपनस्य विधानेन स्थापयेत् कुलशानि वै
भद्रपीठे समास्थाय शिष्यस्थानं दृढवृतम् ५०
अर्चयित्वा यथा न्यायं न्यासं कृत्वा यथा विधि
निष्कलं तु यथा चार्यः सकलः साधकः सदा ५१
ततोऽभिषेकं तस्यैवमाचरेद्देशिकोत्तमः
दशाक्षरेण मन्त्रेण कूटकैरष्टभिः क्रमात् ५२

यथा वित्तानुसारेण पुण्याहं जयमङ्गलैः
स्नापयित्वा ततो मंत्री शुक्लवस्त्रैर्विभूषितः ५३
गन्धपुष्पैः समभ्यर्च्य योगपीठोपरिस्थितः
उष्णीषं बन्धयेत् सूक्ष्मं सितशुद्धेन वाससा ५४
ललाटपट्टं दातव्यं यथा राज्ञः प्रकीर्तितम्
मकुटं कुण्डलाद्यैस्तु सर्वैराभरणैरपि ५५
च्छत्रं ह्युपरिसन्धार्य चामरं च विधानवित्
द्रव्याणामप्यलाभे तु दर्भैरेतानि कल्पयेत् ५६
अथवा मनसा सर्वं शिवमन्त्रेण चिन्तयेत्
रुद्राक्षमुपवीतं च उष्णीषं चोत्तरीयकम् ५७
पुस्तकं सृक्स्रृवं चैव करणीं कर्तरीं तथा
शिवार्चनाग्निकार्यं च जपध्यानं च शक्तितः ५८
व्याख्यामनुग्रहं कार्यमेवं भवतु सर्वदा
सर्वाधिकारभावं च दत्वा शिष्यस्य देशिकः ५९
ब्राह्मणक्षत्रिया वैश्याः शूद्राः शुद्धकुलोद्भवाः
आचार्यदेहि विज्ञेयानान्येषां तु कदाचन ६०
सर्वमन्त्रजपध्यानज्ञानं सद्भावभावितम्
सर्वेषां तु समं ज्ञेयं होत्रया दीक्षिताद्ध्वरे ६१
एवं मन्त्रप्रभावेन कुर्यात् संस्कारकर्मणि
चातुर्वर्णानि चान्यानि शिवयागे तु दीक्षयेत् ६२
अनुलोमान् प्रतिलोमांश्च सुज्ञात्वा दीक्षयेद्गुरुः
दक्षिणां गुरवे दत्वा वित्तशाठ्य विवर्जितः ६३
वस्त्रमाभरणं चैव मकुटं कुण्डलं तथा
हेमयज्ञोपवीतं च हेमपुष्पोपहारकम् ६४
मुद्राशय्यासनादीनि आचार्यस्य प्रदापयेत्
तेषां षोडशकर्माणि शृणु तत्त्वं विनायक ६५

इति दीक्षाविधिपटलश्चतुर्थः ४

## अथ षोडशक्रियाविधिपटलः

अथातः सम्प्रवक्ष्यामि शैवानां षोडशक्रियाः
शिवाध्वरे च ये मर्त्या दीक्षायोग्यतया स्थिताः १
तेषां तु षोडश प्रोक्तं शिवेन परमात्मना
ऋतुसङ्गमनं चाद्ये गर्भाधानं द्वितीयके २
पुंसवनं त्रितीयं तु सीमन्तं हि चतुर्थकम्
पञ्चमं जातकर्मं च षष्ठं चोत्थानमेव च ३
सप्तमं नामकरणमन्नप्राशनमष्टकम्
नवमे वा सगमनं दशमे पिण्डवर्द्धनम् ४
समावर्तनकं पश्चाद्विवाहं षोडशो भवेत्
एतानि षोडशानी ह पृथग्वक्ष्ये समासतः ५
प्रथमे ऋतुसंयुक्ते ऋतुसङ्गमनं तथा
त्रिरात्रं ऋतुसंयुक्तं चतुर्थेह निशुद्ध्यति ६
आर्तवे पूर्वरात्रौ तु तद्रात्रं प्रतिगृह्य च
आर्तवे पररात्रौ तु तद्रात्रं परिवर्जयेत् ७
प्रथमे हनि चण्डाली द्वितीये ब्रह्मघातकी
तृतीये रजकी प्रोक्ता चतुर्थे हनि शुद्ध्यति ८
त्रिरात्रं मलविद्धा सा स्नानादीनि विवर्जिता
एकभुक्ता न खर्वेण वरिसाञ्जलि ना पिबेत् ९
ग्रहेक्षणदिवा स्वप्नं न शुल्पेनाश्नियात् ततः
चतुर्थे दन्तकाष्ठाद्यैः स्नात्वा चामलकादिभिः १०
शुद्धवस्त्रानुलेपाद्यैस्त्रीशूद्राणां न भाषयेत्
स्नातायां तु दृशापश्येत् तादृशं लभते सुतम् ११
अपश्येदपरं तस्माद्भरारं दर्शयेत्तु सा

कन्याया प्रथमे चेति सर्वालङ्कारसंयुता १२
शास्त्रोपदिष्टकल्याणं कृत्वा तत्वविशेषतः
शिवाग्निं पूर्ववत् कृत्वा पूर्वोक्तविधिना यथा १३
शिवं मध्ये तु संस्थाप्य सम्पूज्य पूर्ववत्क्रमात्
शिवाङ्गं ब्रह्ममन्त्रैस्तु होममेवं प्रकारयेत् १४
ऋतु स्नातान्तरितं कृत्वा तत्र वामे तु संस्थिता
सुस्नात्वा चम्य विधिवत् बस्मोद्धूलितविग्रहा १५
वह्नेः पश्चिमदिग्भागे पूर्वस्याभिमुखस्थिता
आचार्येणार्चितं चाग्निं ततो मन्त्रेण हूयते १६
परिषेकं ततः कुर्याद् विद्याङ्गैरभिमन्त्रितः
सहस्रं वा शताष्टं वा हुत्वा वै ब्रह्मपञ्चकैः १७
लक्ष्या तु पटश्रंगे च हविष्यं चैव निक्षिपेत्
नासिका दक्षिणे पुत्रमपरे दुहितेश्च या १८
निर्वीवनं न कर्तव्यं शोषरोषौ च वर्जयेत्
पुत्रार्थमेव संकल्प्य न भोगाय कदाचन १९
आर्तवाद्द्वादशान्तं वा षोडशं वा प्रचक्षते
प्रधानं त्रिदिनं त्यक्त्वा चतुर्थदिवसागमम् २०
युग्मके तु पुमान्विद्धित्वयुग्मेस्त्रीप्रजा तथा
शुक्लवृद्ध्या तु पुरुषो रक्तवृद्ध्यास्त्रीप्रजायते २१
रक्तशुक्लौ समं चेत् तु षण्डं तत्र प्रजायते
पुन्नागमुकुलं यद्वत् तद्वद्गर्भाशयोगतम् २२
गर्भाशयगतो बिन्दुर्वायुच्छेद्य द्विधापुनः
द्विधागर्भं समादाय शरीरं द्विविधं स्फुटम् २३
आयुः कर्म च वित्ताद्या वर्तन्ते चेश्वरेण वै
ऋतु संगमनं प्रोक्तं गर्भाधानं ततः शृणु २४
सद्योग्रहीत गर्भाया लक्षणं मन्निबोधतः

शरीराटोपसंक्लेशस्थितद्वेषकभर्त्रका २५
अत्र चिंखरतायोने स्फुरणेन समन्विता
आलक्ष्यगर्भं सवीक्ष्य शुभनक्षत्रसंवृतः २६
अग्निं पूर्ववदाराध्य सद्येनाष्टशतं हुनेत्
यवं चापि पयो दत्वा पयो दधिघृतं समम् २७
एतत्तु प्रथितं प्रोक्तं प्रासयेदीशमन्त्रतः
तत्पत्नीं सकली कृत्य पुरुषेणोदरं स्पृशेत् २८
गर्भाधानमिदं प्रोक्तं ततः पुंसवनं शृणु
द्विमासे प्रथमे गर्भे चतुर्मासेऽथवा पुनः २९
शुभनक्षत्रसंयोगे चाग्निमाराद्ध्य पूर्ववत्
वामदेवेन साहस्रमथवाष्टशतं हुनेत् ३०
तत्र पृथक् च सहितो माषधान्यं प्रवेशयेत्
याज्ञिकैर्वृक्षमुकुलैः क्षीरयुक्तं विमत्थ्य वै ३१
तद्द्रव्यं नववस्त्रेण पत्न्यानासापुटे बुधः
वामदेवेन मन्त्रेण शिवं स्मृत्वा तु दापयेत् ३२
शैवान् सम्भोजयित्वा तु आचार्यं पूजयेत् ततः
एवं पुंसवनं प्रोक्तं सीमन्तं च ततः शृणु ३३
चतुर्थे षष्ठमेवाष्टमासे सिमन्तकर्मकम्
पूर्वे वा शुभनक्षत्रे वह्निं पूर्ववदाचरेत् ३४
अघोराष्टशतं हुत्वा व्याहृतिस्तत्र हूयते
दर्भोदुम्बरमाल्यादि बध्वासीमन्तकर्मणि ३५
ललाटच्छिरमध्यान्तं समालिख्य समापयेत्
विद्याङ्गेन तु तत्कर्म नववस्त्रं तु दापयेत् ३६
सम्पूज्य हेमस्रग्गन्धैः सीमन्तोन्नयनं ततः
पुरस्तादीशमन्त्रेण पूर्ववक्त्रवृतं चरेत् ३७
पुरुषेणोदकं स्पृष्ट्वा जपित्वा शिवमन्त्रतः

प्रोक्तं सिमन्तमेवं हि जातकर्म ततः शृणु ३८
सूतिकाग्रहमन्वीक्ष्य शुद्धिं कृत्वा पुरातनम्
तिलसर्षपचूर्णैस्तु धूपयित्वाग्रहान्तरम् ३९
सूतिकायात्वथेऽष्टाभिस्तर्जां स्त्रीभिः प्रवेशयेत्
ग्रहसारं तु सम्पूज्य तदज्ञात्वा ग्रहस्थितिम् ४०
कुमारोजायमानश्चेत् विरह्यमपरं ततः
अस्त्रेणैव शतं हुत्वा सर्वरक्षार्थमेव च ४१
जाते पुत्रे शिवं ध्यात्वा मुखं वामेन दर्शयेत्
नाभिसूत्रमथास्त्रेण छित्वाङ्गानि विशोद्ध्य वै ४२
पञ्चब्रह्मसमुच्चार्य पुत्रमूर्ध्नि जिघृक्षयेत्
तस्यैव दक्षिणे श्रोत्रे जप्त्वा तत्पुरुषं ततः ४३
मध्वाज्यगुलसम्मिश्रं दत्वा ब्रह्मवृतं तथा
सुवर्णदर्भया बध्वा ते नैवाज्य हृदा सह ४४
दत्वा हिरण्यरूपेति दातव्यं साधकोत्तमः
मातृहस्ते च दत्वातं सद्येन क्षालयेत् स्तनौ ४५
प्रशान्तायेति मन्त्रेण दातव्यं दक्षिणं स्तनम्
कुम्भमाराध्य तत्रैव अघोरास्त्रेण मन्त्रतः ४६
पूर्णोदकं शरस्थाने रक्षार्थं स्थापयेद्बुधः
होतव्यं दशरात्रौ तु सायं प्रातरतन्द्रितः ४७
एतत् कर्म च भर्तुश्च कर्तव्यं हि दिनेदिने
त्रयः पञ्चाहसप्ताहे शयनादीनि शोधयेत् ४८
जातकर्ममिदं प्रोक्तमुत्थानं शृणु सुवृत
दशारात्रे त्वतीते तु कृत्वोत्थापनकर्मकम् ४९
सर्वद्रव्याणि भाण्डानि वर्जयेत्तानि यत्नतः
कं सदार्वायसादीनि मानसाशुद्धिरुच्यते ५०
संशोध्यकारुणा वस्त्रं भस्मना हेमशुद्धिकम्

मृद्गोमयोदकैरेव तद्ग्रहं चोपलेपयेत् ५१
कृत्वा तु मलिनस्नानं दम्पत्योः क्षुरकर्मकम्
तत स्नानं तु कर्तव्यं तदा पर्यग्निकं बुधः ५२
प्रक्षिप्यनवभाराडानि पञ्चगव्यं तु प्राशयेत्
पुरायाहं वाचयित्वा तु प्रोक्षयित्वा जनान् क्रमात् ५३
कुशोदकं शरावे तु शिवमन्त्रगणैः सह
शिवभूतं च तत्तोयं दम्पत्योः प्राशयेत् क्रमात् ५४
उत्थापनमिदं प्रोक्तं नाम निर्देशनं शृणु
एकादश्यां वा द्वादश्यां नाम निर्देशनं क्रमात् ५५
शिवाग्निं विधिवत् कृत्वा पुत्रं संस्पृश्यमन्त्रवित्
पुत्रस्य देवतोद्दिश्य नामकर्म च कारयेत् ५६
प्रथमं तु महादेवं द्वितीयं तु महेश्वरम्
तृतीयं शंकरं प्रोक्तं चतुर्थं वृषभध्वजम् ५७
पञ्चमं कृत्तिवासस्तु षष्ठं वै कामनाशनम्
सप्तमं देवदेवेशं श्रीकराठं चाष्टमं स्मृतम् ५८
नवमं ईश्वरं प्रोक्तं दशमं पार्वती प्रियम्
रुद्रमेकादशं चैव द्वादशस्तु शिवस्तथा ५९
तानि द्वादश नामानि कृत्तिकादिषु बुद्धिमान्
शिवान्तं मुक्तिनामानि वाचयेदग्निसन्निधौ ६०
दूर्वां कुराक्षतैर्मिश्रैः पाणौ वा दक्षिणोत्तरम्
पादादिमूर्ध्निपर्यन्तं शिवाङ्गेन निदापयेत् ६१
शिवमन्त्रं समुच्चार्य कन्यायाः शक्तिनामतः
अम्बिका पार्वती गौरी भवानी च सुरार्चिता ६२
दाक्षायणीहैमवती महादेवी हरिप्रिया
उमाशिवकरी चेति गिरिजा द्वादशैव तु ६३
शक्तेर्नाम इति ख्याता कृत्तिकादिषु योजयेत्

आचार्यपूजनं कृत्वा शैवांस्तान्परिपूजयेत् ६४
नामनिर्देशनं प्रोक्तं ततोऽन्नप्रासनं शृणु
षाण्मासे शुभनक्षत्रे चान्नप्राशनकर्मकम् ६५
नोच्छिष्ट स्पर्शनं बालं सुमुहूर्ते शुभे दिने
पक्वान्नं पयसाज्येन वह्निमाराध्यपूर्ववत् ६६
बीजमन्त्रेण मतिमान् कांसपात्रे तु संस्थितम्
भोजयेत्पायसेनैव जनान् सर्वान्विशेषतः ६७
होमान्नं कारयेद्धीमानन्नप्राशनकर्मणि
अन्नप्राशनमेवं हि प्रवासगमनं शृणु ६८
तद्दिने सुमुहूर्ते तु सङ्ग्रहे तु मनोरमे
अग्न्याधानं ततः कृत्वा सद्येनाष्टशतं हुनेत् ६९
पितापुत्रमलंकृत्य शिवघोषं विशेषतः
पिता तत्पुरुषेणैव तत्पुत्रं मूर्ध्नि जिघ्रति ७०
शिवमन्त्रं ततो जप्त्वा गत्वा देवालयं शनैः
वृषगायत्रि मन्त्रेण वृषगर्भं प्रणम्य च ७१
देवदेवं नमस्कृत्वा पुत्रेण सह बान्धवैः
गुहालयं ततो गत्वा प्रणम्यगुहमव्ययम् ७२
शनैः शनैर्ग्रहं नित्वा रक्षां कृत्वा तु भस्मना
पिण्डवर्धनकं वक्ष्ये अग्न्याधानं तु पूर्ववत् ७३
विधिवत् ब्रह्मशिरसा हुत्वा चाष्टशतं पुनः
दक्षिणांगुष्ठमारभ्य ईशानं तदनुक्रमात् ७४
जपित्वा कारयेद्विद्वान्येवं वापि दशाक्षरम्
मधुराक्षारसद्रव्यैः शैवान् सम्भोज्ययत्नतः ७५
पिण्डवर्धनमेवं हि क्षुरकर्म ततः शृणु
त्रिवर्षे शुभनक्षत्रे सुतिथौ चोतरायणे ७६
तद्दिनात् पूर्वदिवसे कृत्वा नान्दीमुखं पुनः

चौलोपनयने चैव समावर्तनके तथा ७७
पाणिग्रहणके तेषां पूर्वे नान्दीमुखं स्मृतम्
वितृदैवतमावाह्य गन्धपुष्पादिनार्चयेत् ७८
पितृन् पितामहांश्चैव तथा वै प्रपितामहान्
एतैर्नामभि संकल्प्य शिवभावादनुक्रमैः ७९
एवं नान्दीमुखं कृत्वा यथा शक्त्या तु दक्षिणाम्
अस्त्रमन्त्रेण सम्प्रोक्ष्य बध्वा प्रतिसरन्निशि ८०
प्रभाते चौलकार्यार्थं स्थण्डिलं तत्र वित्तमः
शिवाग्निं विधिवद्धुत्वा रुद्राण्यष्टशताहुतिः ८१
अग्नेः पूर्वे तु तद्बालं न्यस्त्वा गव्यादिनार्चयेत्
हरहरे तु घोषैस्तु ततो मङ्गलवाचकैः ८२
दूर्वाक्षताद्यैः स्तोत्रैस्तु कृत्वा घृतशिरोर्पणम्
क्षुरश्चास्त्रेण संस्पृश्य पितापुत्रं च वापयेत् ८३
ईशाद्यजानुकै ब्रह्मैः शिवपूर्वादितस्तथा
पात्रस्थं गोशक्रं मध्ये तत्तत्केशान्विनिक्षिपेत् ८४
शिरोमध्ये शिखांविद्धि पञ्चविंशति भागतः
समवृत्तां शिखां कृत्वा शेषान्त्यक्त्वोर्ध्वनापितः ८५
प्रवासगमने चैव पिण्डवर्द्धनकेऽपि च
चौलकर्मणि कल्याणे श्रद्धावित्तान्वितेऽपि च ८६
होमं विना कूमारीणां ततो मन्त्रेण चाचरेत्
स्नानं तत्र प्रकर्तव्यं मुक्त्वा प्रतिसरं तथा ८७
वस्त्राद्यैः समलं कृत्य हारिद्रगन्धपुष्पकैः
अग्नेः पूर्वं सुखासीनमक्षताद्यैः समर्चयेत् ८८
हुत्वा तु शिवमन्त्रेण सहस्रं वा शतं बुधः
पूर्णाहुतिं ततः कृत्वा पूर्वोक्तेनैव मन्त्रतः ८९
आचार्यं पूजयेत् पश्चात् सवत्साङ्गां तु दापयेत्

गोशकृत् सास्त्रकेशांश्च संग्राह्यं धान्यसंयुतम्  ९०
गवामभिमुखं कृत्वा निक्षिपेत्पङ्कमध्यमे
दर्भोदुम्बरमूले वा कृत्वा चम्यविशेत्पुनः  ९१
चौलकार्यमिदं प्रोक्तमौपनायनकं शृणु
जातसंवत्सरादूर्ध्वे पञ्चषट्सप्तवत्सरा  ९२
अष्टमे वा नवाब्दे वा क्रमात् ज्ञानं स्वरूपकम्
ब्रह्मवर्चसमायुष्यं श्रीप्रदं च विशेषतः  ९३
अथवा षोडशाब्दान्तमौपनायनमाचरेत्
षोडशाब्दादतीते तु उद्दालान्ते समाचरेत्  ९४
द्विमासंयावकं भुक्त्वा मासं क्षीरं तु दापयेत्
आमीक्षिकायाः समार्धं भक्षयेत् दिनेदिने  ९५
पक्वं पयसिदध्योङ्गया तु सामीक्षिका स्मृता
कृष्णायां कपिलायां वा अष्टरात्रं क्षितौशयेत्  ९६
शयाच्चिव्रतं तु षड्रात्रं त्रिरात्रमुदकं तथा
उपवासमहोरात्रमतीते द्वापरे युगे  ९७
एकवृत्तं च कर्तव्यमुद्दालकमनुक्रमम्
स्नानं वाचाश्वमेधान्ते वाक्यैस्तौ मे विनायक  ९८
गर्भाधानमिदं कर्मपूर्ववत्कारयेत् क्रमात्
वृतान्तेऽथ प्रकर्तव्यं वसन्ते चोत्तरायणे  ९९
शुभनक्षत्रसहिते सुमुहूर्ते विशेषतः
अङ्कुरार्पणकं त्वेह सप्ताहे पञ्चमेऽपि वा  १००
उपवीताजिनं मौञ्जी दण्डं तत्रैव साधयेत्
उपवीतविधिं वक्ष्ये चोष्णीषं चोत्तरीयकम्  १०१
शुभनक्षत्रयोगे च तान्या पाद्ययत्नतः
ब्राह्मणीराजपुत्री वा वैश्यकन्याथवा पुनः  १०२
तिसृभिर्निर्मितं सूत्रं अथवा शूद्रकन्यया

अन्यस्त्रीनिर्मितं सूत्रं वर्जितव्यं प्रयत्नतः १०३
अथवा तं तु कार्येषु संग्राह्यं साधकोत्तमः
सूत्रसंग्रहणे काले शोधयेत्तोयभस्मना १०४
प्राज्ञः प्रारभ्यपूर्वाह्णे सद्यमन्त्रेण तन्तुकम्
चतुरङ्गुलमात्रेण षरणवती च सूत्रकम् १०५
तेनैव त्रिगुणं यत्तत्सूत्रं दिग्धमिहोच्यते
पूर्वपश्चिमतः स्थित्वा दक्षिणोत्तरमेव हि १०६
हस्तदक्षिणमूर्ध्वे तु पृष्टा वै प्रथमं तथा
पश्चाद्वामिकं चोर्ध्वे त्रिगुणान्ते विशेषतः १०७
भूमावन्यत्र वा क्षिप्य पूर्वाग्रे चोत्तराग्रकम्
पत्रं पुष्पं तृणं दत्वा कृतलोलवशं कृतम् १०८
सम्प्रोक्ष्य वामदेवेन रज्जुं गृह्णीतसाधनम्
ग्रीवायाहस्तयोस्तिर्यक् चाङ्गुष्ठाद्बाहुचान्तकम् १०९
तत्समं चैकसूत्रं तु त्रिगुणं चोपवीतकम्
रज्जुं तद्ग्रन्थिके तस्मिन् वाग्देवी सुप्रतिष्ठिता ११०
सावित्री चैव गायत्री वसेतामग्रमूलयोः
ब्रह्माविष्णुश्च रुद्रश्च त्रिसूत्राणां तु देवता १११
अघोरास्त्रेण तद्बध्वा बहुरूपेण धारयेत्
नाभिप्रदक्षिणं कार्यं नाभेरूर्ध्वं विधानतः ११२
तत्सूत्रं ब्रह्मचारीणां ग्रहस्थानां षडेव हि
नवकं वानप्रस्थानां यतीनां द्वादशं स्मृतम् ११३
उपवीतविधिः प्रोक्तमुत्तरीयमथ शृणु
वाससा त्रिविशुक्लेन कर्तव्यं चोपपीतवत् ११४
उत्तरीयमिदं प्रोक्तमुष्णीषं त्विह वक्ष्यते
हत्वाधस्ताच्छिरोऽन्तं यत्कर्णौ संच्छाद्ययत्नतः ११५
शिरोवेष्टनकं नाममृदुना शुक्लवाससा

उष्णीषलक्षणं प्रोक्तं कृष्णाजिनमथ शृणु ११६
चर्मकृष्णाजिन मृगस्यैव नान्योपयोगतः
कामं त्वरोगसंयुक्तं स्वतोऽथ मरणं ध्रुवम् ११७
त्रियङ्गुलं समं वापि तथैवाङ्गुलविस्तृतम्
उपवीतसमायाममिति कृष्णाजिनं स्मृतम् ११८
सद्यमन्त्रं समुच्चार्य बध्वातच्चर्मरज्जुना
कार्पासरज्जुना वापि मेखलं शृणुतत्वतः ११९
शुद्धदेशे स्थितं मौञ्जीं गृहीत्वा शोषणं ततः
सूच्यग्रेणैव तां भित्त्वा त्रिवृद्रज्जु त्रिरावृतम् १२०
समासान्मेखला प्रोक्ता दण्डस्य लक्षणं शृणु
पलाशबिल्वखदिरं शमी वै कंकतं तथा १२१
तस्य मूर्ध्नासमदीर्घं सितबाहुसमं तु वा
चर्मयुक्तमृजु स्निग्धं। । । । । । । । । १२२
पूर्वे नान्दीमुखं कृत्वा तदन्ते चोपनायनम्
शिवाग्निं पूर्ववत् कृत्वा चौलवद्वापयेत् ततः १२३
अधोमुखगतान् केशान् त्यक्त्वा तत्र शिखाभ्रुवौ
स्नानं तत्रैव कर्तव्यं सर्वाभरणभूषितम् १२४
भोजयित्वा चरूं विद्वान् कायशुद्ध्यर्थमेव च
उपवीतादि चिह्नानि चोत्तरे स्थापयेत् क्रमात् १२५
शुची वो भव्य मन्त्रातः सम्प्रोक्ष्य देशिकोत्तमः
ततः शिष्यं समाहूय वह्नेर्दक्षिणत स्मृतम् १२६
सम्प्रोक्ष्य पञ्चब्रह्मैस्तु शुची वो हव्य मंत्रितः
उत्तराभिमुखं शिष्यं समभ्यर्च्याक्षतादिभिः १२७
प्रारभेयं प्रधानं च परिषेचन पूर्वकम्
ब्रह्माङ्गैस्तपसं देव्या प्रत्येकं पञ्चकाहुतिः १२८
परिषेचनं तु कर्तव्यं शिवे गन्धादिनार्चयेत्

बध्वा वै तां नवं रज्जुमियन्द्रक्तेति मेखलाम् १२९
शाटिं कौपीनवत् कृत्वा शेषं पृष्ठेव लम्बितम्
स्वयमुच्चार्य तन्मन्त्रं उपवीतं तु दापयेत् १३०
कृष्णाजिनं तु सन्धार्य बहुरूपेण बुद्धिमान्
उत्तरीयं तु दातव्यं प्रशान्तायेति मन्त्रतः १३१
तस्योष्णीषं विना तन्त्रं तदान्याश्रमिणां तु तत्
दण्डं दत्वास्त्रमन्त्रेण पवित्रं तदनामिके १३२
अग्निं प्रदक्षिणं कृत्वा नमस्कृत्वा विशेषतः
पादौ प्रक्षाल्य विधिवत् द्विराचम्य विशेषतः १३३
ब्रह्मकूर्चं पिबेद्गव्यं शिवमन्त्रेण मन्त्रवित्
पञ्चगव्यं कुशोपेतं ब्रह्मकूर्चमिति स्मृतम् १३४
पुनराचम्य विधिना सावित्री वृतबन्धनम्
प्रदक्षिणं हि मूर्धानं पञ्चब्रह्मैस्तु हूयते १३५
सावित्री काण्डर्षयेति हुत्वेदं वृतबन्धनम्
सावित्रीं चैव गायत्रीं जपित्वाष्टा परं ततः १३६
कृत्वा प्रदक्षिणं चाग्निं नमस्कृत्वा यथा विधि
क्त्वा तत्परिषेचं तु शिवास्त्रेण शताहुतिः १३७
समद्भिन्नभित्वा वै शतेन त्वभिमन्त्रितैः
परिषेचं तु कर्तव्यं गायत्रीं व्याहृतिं ततः १३८
ब्रह्माङ्गैर्जुहुयात् सम्यक्प्रत्येकं सप्तसप्त च
देवदेवं नमस्कृत्वा गुरुपूर्वं यथार्हतः १३९
आचार्यं पूजयेत् तस्मात् यथा वित्तानुसारतः
भिक्षापात्रं सुवर्णाद्यैर्दातव्यं पुरुषेण तु १४०
दण्डं तद्वामहस्ते तु भिक्षापात्रं तु दक्षिणे
भवति भिक्षां देहीति वाच उक्त्वा पृथक् पृथक् १४१
आत्मार्थं तण्डुलं ग्राह्यं प्रतिग्रहे ग्रहे तु च

यात्राकाले तु दराडेन पश्वादीनि च ताडयेत् १४२
सुस्नात्वा विधिना चम्य त्रिषुकालेषु नित्यशः
पूर्वमुक्तेन मन्त्रेण विधिनित्यं विधानवित् १४३
शैवशास्त्रानुसारेण गुरुपारम्परेण तु
संयमेन यनो भूत्वा पूततोयं पिबेत्सुधीः १४४
सिवसूर्याय दत्वार्घ्यं कुशपुष्पाक्षतान्वितम्
ततो गायत्रिमन्त्रं तु त्रिसन्ध्यां तु पृथक्पृथक् १४५
अष्टोत्तरशतं चैव शिवं ध्यायं जपेद्बुधः
दिनेदिने प्रकूर्वीत सर्वपापविशोधनम् १४६
विधिनाचाग्निमन्त्रज्ञः सायं प्रातः सुपूजयेत्
कृत्वा वै मन्त्रभावेन व्याहृत्यादि घृतेन च १४७
पूर्वोक्तेनैव मन्त्रेण समिद्भिश्चैव हूयते
एवं दिनत्रयेषूक्तं चतुर्थे दराडमोचनम् १४८
पूर्वोक्तविधिवद्धुत्वा सद्येनाष्टशताहुतिः
प्रातर्विसर्जनं कृत्वा पूर्वोक्तेन तु मन्त्रतः १४९
पर्यूषितोपवीतानि त्यक्त्वा दक्षिणतो बुधः
नवयज्ञोपवीताद्यैः पूर्ववत्परिकल्पयेत् १५०
परिषिच्याथ विधिवद्व्योमव्यापि दशाहुतिः
शिवाय शिवमन्त्रेण स्वाहेत्यष्टशतं हुनेत् १५१
एवं घृताहुतिं हुत्वा शिवोपकरणं स्मृतम्
ब्रह्मचर्यं ततः काले अर्थयेत्साधकोत्तमः १५२
ब्रह्मचारी द्विधा तत्र शान्तयः शिवशासने
भौतिको नैष्ठिकश्चैव प्रोक्तौ तौ ब्रह्मचारिणौ १५३
ग्रहस्थस्याश्रमं प्राप्तं भौतिकस्य विधीयते
ब्रह्मचर्य वृतिर्यावं नैष्ठिकस्य विशेषतः १५४
ताभ्यामेकं विनिश्चित्य घृताहुतिशतं पुनः

पूर्णाहुतिं ततो हुत्वा तदहं प्रत्यहं यजेत् १५५
नद्यां वापि तटाके वा उपवीतादिकान्त्यजेत्
स्नात्वा चम्य यथान्यायं देवदेवं प्रणम्य च १५६
पूजाविधिं ततो ज्ञात्वा सम्पूज्य परमेश्वरम्
वह्निस्थं देवदेवेशं विधिना पूजयेत्ततः १५७
गुरुं प्रणम्य विधिवत् तस्माद्वै गुरुपूजकः
तत्रर्ग्वेदमयं सद्यं वामदेवं यजुर्मयम् १५८
सामवेदमघोरं च वक्त्रं चाथर्वणं स्मृतम्
सर्वदेवमयेशानमङ्गयुक्तं शिवं तथा १५९
साक्षात् शिवमयं प्रोक्तं कामिकाद्यागमं त्विह
इमान्यध्ययनान्येव तदेवाद्धययनं स्मृतम् १६०
अध्यापनानितानिह तस्याद्ध्यापनमेव हि
शिवायाराधना तस्य यजनं याजनं तथा १६१
शिवमुद्दिश्ययद्द्रव्यं दत्तं तद्दानमेव च
प्रतिग्रहं ततो वाथ तस्य षट्कर्ममुच्यते १६२
शिवसद्भावयुक्तस्य शुद्धशैवस्य धीमतः
संस्कारप्रमुखां चैव नान्यसूत्रं समाचरेत् १६३
आचरेदन्यहोमेन सर्वकर्मबहिस्कृतः
वृतभृष्टस्त्विति ज्ञात्वा पुनर्दीक्षां समाचरेत् १६४
काण्डोपकरणं कृत्वा वृतारम्भविधिं तथा
वृते परिसमाप्ते तु कृत्वा तद्व्रतमोक्षणम् १६५
समावर्तनपूर्वे तु कृत्वा वैश्वक्रिया वृतम्
अग्निं नन्दीमुखं कृत्वा क्रियां रात्रौ तु चारभेत् १६६
पूर्वयामस्य चान्ते तु बध्वा प्रतिसरं क्रमात्
पुरुषेणैव मन्त्रेण सौवर्णं क्षौममेव च १६७
अस्त्रेण प्रोक्षयित्वा तु वस्त्रैरेवावकुण्ठनम्

व्योमव्यापि जपित्वा तु रस्वप्नं न तु वाचकम् १६८
प्रभाते चोत्तरं तत्र चैवं वैश्वक्रियावृतम्
अग्निं पूर्ववदारभ्य मूलेनैव शतं हुनेत् १६९
ब्रह्मचारी वृतं मत्वा ग्रहस्थाशममाश्रयेत्
चौलवद्वपनं कृत्वा शिखाप्रकोष्ठ वर्जितम् १७०
तत्र संशोध्यदशनं स्नापयेद्रजनीयुतः
ईशानाद्यैः शतं हुत्वा मुक्त्वामौञ्ज्यादिकास्ततः १७१
दत्वा तदुपवीतं च षट्सूत्रं पूर्वमन्त्रतः
कुण्डलाद्यैस्तु सम्भूष्य हृदयेन तु मन्त्रतः १७२
गन्धादीनि ततो दत्वा वामदेवेति मन्त्रतः
नयने चाञ्जनं दत्वा दर्पणं दर्शयेद्बुधः १७३
मधुपकर्मन्तु दातव्यं वामवेतिमन्त्रतः
अग्निं प्रदक्षिणं कृत्वा नमस्कृत्वा तु चाग्रतः १७४
छत्रोपानहदण्डादि सन्धार्योत्तरदिग्गतः
निवृत्यबन्धुभिस्तत्र सुस्थितस्त्वासने तु सः १७५
पितृभ्रातृपित्रव्यैस्तु भोक्तव्यं सहबान्धवैः
तत्समावर्तनं प्रोक्तं तत्पाणिग्रहणं शृणु १७६
सर्वकाले विवाहं स्यात् माघप्रोष्ठविवर्जिते
विवाहमष्टधा प्रोक्तं शिवेन परमात्मना १७७
ब्राह्मं च दैविकं चैव प्राजापत्यमथार्षकम्
पञ्चमं त्वासुरं प्रोक्तं गान्धर्वं राक्षसं तथा १७८
पैशाचमष्टमं ज्ञेयमुच्यन्ते तानि वै पुनः
वयो वृत्तं च सम्पन्नं वृत्तरूपाभिजात्यकम् १७९
कन्यां दत्वा समाहूय गोभूमिसहिरण्यकम्
तद्ब्राह्ममिति निर्दिष्टं विवाहेषूत्तमं वृतम् १८०
यज्ञेषु ऋत्विजस्यैव कन्यादानं तु दैविकम्

विप्रस्यैव सुशीलस्य विवाहापेक्षि तस्य च १८१
होमकर्मस्वयं कृत्वा वस्त्राभरणकन्यकाम्
बुद्धिपूर्वं तु यद्दत्तं प्राजापत्यमिति स्मृतम् १८२
सुरूपां कन्यकांश्चैव दत्वा गोमिथुनद्वयम्
अथ गोमिथुनैकं वा विवाहमार्षकं स्मृतम् १८३
आरोप्याहरणं कन्यां याच्यमाने मुहुर्मुहुः
धनं दत्वा तु यः कन्या संग्रहणं तु यत्तदा १८४
आसुरन्तु सविज्ञेयमविद्वद्भिरनुष्ठितम्
उभयोरपि संवादे स्त्रीपुंसौ यदिरागतः १८५
दानन्तस्यैव तां कन्यां गान्धर्वमिति पठ्यते
कृत्वा युद्धं महाघोरं वधबन्धनताडकैः १८६
अपहृत्य बलात्कन्यां रुदन्तीं रक्षसामिदम्
कन्यां सुप्तां प्रमत्तां च चौर्यापात हृतं तु वा १८७
पैशाचमिति विख्यातं प्राक्पञ्चोदकपूर्वकम्
तेषां पूर्वचतुष्कं तु ब्राह्मणस्य महात्मनः १८८
कर्तव्यमासुरं वापि त्रीणि चान्यानि वर्जयेत्
सुशीलां रूपसम्पन्नां कुलजां बानवान्विताम् १८९
असगोत्रां हि कुशलां वधूं संग्राह्यबुद्धिमान्
गन्धादिभिरलं कृत्य वस्त्रहेमन्तु दापयेत् १९०
तयोर्गात्रं च नाम्नी च पूर्वमुच्चार्यबुद्धिमान्
दत्वोदकन्तु तद्धस्ते पिताभ्राता तु मातुलः १९१
दानमेतदिदं प्रोक्तं विसंवादे तु पूर्ववत्
स्थण्डिलेऽग्निं समाराद्ध्य ग्रहीतां वै तदग्रहे १९२
पुनस्तोयं तु दातव्यं भर्तुर्वाथपि तुर्ष्वपि
एवं पुनर्जलं दानं विवाहं शृणु सुवृत १९३
अग्नेः पश्चिमभागे तु आसनं सम्प्रकल्प्य वै

पतिपत्न्योः समाहूय सर्वालंकारसंयुतौ १९४
शिवात्मकेति मन्त्रेण वस्त्रं पुष्पं तु दापयेत्
दक्षिणे तु पतिं चैव वामे पत्निं निधाय वै १९५
परिषेचनं ततः कृत्वा ब्रह्माङ्गैरेव हूयते
मम हृदयेत्युच्चार्य पत्यातद्धृदयं स्पृशेत् १९६
आत्मानं शिववद् ध्यात्वा पत्निं शक्तिस्वरूपवत्
शतं हुत्वा तु मूलेन स्वाहान्तं प्रणवादिकम् १९७
मधुपर्कं तु सम्प्राश्य प्रागुक्तविधिनाचरेत्
वृतं गायत्रिमन्त्रेण दर्शयित्वा धनं तथा १९८
पुनराचम्य विधिवद् व्याहृत्या तु शताहुतिः
अग्नेर्दक्षिण पार्श्वे तु प्राणाग्निं संयजेत् क्रमात् १९९
गोर्द्धेनुहव्यमन्त्रेण गोवत्सं तत्र दर्शयेत्
स्वाहान्तं शिवमन्त्रेण शताष्टकहुतं पुनः २००
अग्नेश्च वामपार्श्वे तु गत्वा सप्तपदं ततः
संस्थाप्य पश्चिमे श्मानमक्षतादिभिरर्चयेत् २०१
पत्न्यास्तु दक्षिणं पादं पतिहस्तेन चोद्धृतम्
शिवगायत्रिमन्त्रेण पादमश्मनि विन्यसेत् २०२
क्रमात् सप्तपदं गत्वा वाममन्त्रेण बुद्धिमान्
भर्तुर्दक्षिणहस्तेन तस्याहस्तं तु संग्रहेत् २०३
उमामहेशमन्त्रेण हुत्वा लाजाञ्जलित्रयम्
देवदेवं नमस्कृत्वा विज्ञाप्याङ्गविभूषणम् २०४
व्योमव्यापिनि मन्त्रेण ग्रहस्थानि च हूयते
आद्यन्तं व्याहृतिं हुत्वा प्रायश्चित्ताय सर्वतः २०५
औपासनाग्निकं हुत्वा ब्रह्माङ्गैर्दिवसं प्रति
हस्तं प्राग्वच्च संग्राह्य गच्छतान्तु शुभे ग्रहे २०६
सर्वालङ्कारसंयुक्ते मुक्तादामविभूषिते

सद्येन शोधनं कृत्वा कतैराप्तोपधानकैः २०७
उपलं शक्तिवत्स्मृत्वा दम्पत्योर्मध्यमे क्षिपेत्
रात्रौ दिनाधिपं कृत्वा पूर्वं सोमाधिदैवतम् २०८
गान्धर्वं च द्वितीये तु तृतीये चाग्निदैवतम्
तत्तन्मन्त्रं तु मतिमाञ्जपेत् त्रिंशं नमोन्तकम् २०९
तयोः स्वप्ने तु रात्रौ तु स्पर्शनं ननुवाचकम्
सुस्नात्वा चम्यविधिवदौपासनं दिनेदिने २१०
चतुर्थे हनिपूर्वाह्ने तैलेनाभ्यञ्जनं तथा
सहैव स्नापयित्वा तु रात्रौ वह्निं प्रकल्प्य वै २११
ब्रह्माङ्गैर्जुहुयात् तत्र दर्शयित्वा त्वरून्धतीम्
अरुन्धतीति मन्त्रेण तां विज्ञाप्य प्रणम्य वै २१२
अश्मानं पूर्ववत् कृत्वा ततस्त्वायतनं तु वा
हृदाचोत्थाप्यशयनं सम्प्रोक्ष्यशिवमन्त्रतः २१३
खट्गं चैव कटंवाथ संविकीर्योपधानकम्
शयनं पूर्ववत् कृत्वा तस्मिन् सम्पादयेत् ततः २१४
आत्मानं शिववद्ध्यात्वा तत्पत्निं शक्तिवद्बुधः
ऋतुसङ्गमनात् कृत्वा सर्वं वामेन मन्त्रतः २१५
सहैवार्त गृहं गत्वा गणानां च बलिं पुनः
अभ्यागतातिथिं चैव पूजयेत्तु दिनेदिने २१६
शुद्धशैवोद्भवानां तु प्रोक्तं वै षोडशक्रिया
तेषां वृतं समाचारं शृणुतत्वं विनायक २१७
इति षोडशक्रियाविधिपटलः पञ्चमः ५

## अथ वृताचारविधिपटलः

अथातः सम्प्रवक्ष्यामि संक्षेपाद् वृत्तमुत्तमम्
वृतं हि द्विविधं प्रोक्तं सामान्यं च विशेषतः १

ब्रह्मचारी ग्रहस्थश्च वानप्रस्थश्च भिक्षुकः
चतुराश्रममेवं हि सामान्यं विधिचोदितम् २
चतुर्णां गोचराणां तु सममेतच्छिवागमे
ब्रह्मचारी द्विधा ज्ञेया भौतिको नैष्ठिकस्तथा ३
शेषान् क्रमात्तु सप्राप्तो ब्रह्मचारी तु भौतिकः
मरणान्तं ब्रह्मचर्यं पालनं नैष्ठिकस्य तु ४
शिखीमुण्डी जटीवापी सकौपीनः समेखलः
सदण्डीसोपवीतश्च भस्मरुद्राक्षसंयुतः ५
त्रिस्नायि च जित क्रोधः सुयमः सत्यभाषणः
एककालं तु भैक्षाशि वसेन्नित्यं गुरोर्ग्रहे ६
वर्ज्यं तद्गन्धमाल्यादि दर्पणं पादुकं तथा
हरिद्रमञ्जनं चैव ताम्बूलं लवणं तथा ७
शिखा वृतेश्वरं यागं कृत्वा चार्यपरिग्रहे
ब्रह्मचारी वृतं ह्येवं ग्रहस्थानां वृतं शृणु ८
गृहिणी संग्रहं कृत्वा विवाहं विधिना तथा
अभ्यागता तिथिंश्चैव यथा शक्तिः सुपूजनम् ९
देवाग्नि गुरुपूजा च ग्रहे धर्मं च नित्यशः
शिवागमोक्त षट्कर्म श्रद्धाभक्त्या तु वर्धयेत् १०
शिखी वा बद्धके शीवा शुक्लयज्ञोपवीतकम्
स्वर्णरजत ताम्रैश्च स्फटिकैश्चापि भूषयेत् ११
सुदारान् संग्रहं नित्यं ऋतुकाले विशेषतः
चन्दनादीनि माल्यानि त्वलं कृत्य शुभे ग्रहे १२
ग्रहस्थानं वृतं ह्येतद्वानप्रस्थाश्रमं शृणु
अपत्नीकः सपत्नीको द्विविधं शिवभाषणे १३
वने संवासिको नित्यं शाकमूलादिभक्षयेत्
ग्रहस्थस्य वृतं यद्वत् सपत्नीकस्तथैव तु १४

सपत्निकवृतं प्रोक्तमपत्निकवृतं शृणु
ब्रह्मचर्यं चरेन्नित्यं प्रतिग्रहविवर्जितम् १५
सुभूमौ वान्तिने वापि कुशे वा शयनेऽथवा
सर्वेषु हेद्रियार्थेषु सप्तमं तु विवर्जयेत् १६
कृत्वा स्नानं त्रिकालेषु देवाग्नि गुरुपूजनम्
वनेषु वासयेन्नित्यं फलमूलादिभक्षणम् १७
अपत्निकवृतमिदं यतिनां च वृतं शृणु
आत्मानं शिववद्दृष्ट्वा सर्वकर्मसमर्प्य च १८
सुशिष्ये स्वाधिकारं च स्वयं दीक्षा विवर्जितः
सर्वाणि चान्यरूपाणि ममत्वं हि सुभावितम् १९
समत्वं सुखदुःखेषु सर्वारम्भ विवर्जितम्
काञ्चनं कोष्टवत्स्मृत्वा प्रियाप्रिय समं भवेत् २०
स बाह्याभ्यन्तरं शौचा ग्रामान्तेषु निवासनम्
य निवृत्तिरियं प्रोक्तं शृणु वै शेषिकां वृतान् २१
शिवलिङ्गात्तथा ज्योतिः सावित्री चेति गोचरा
शिवदेह समुद्भूतं गोचरं तुलमुच्यते २२
काश्यपादि ऋृषिणां तु शिवगोचरसंज्ञकम्
भारद्वाजमुनिनां तु ज्योतिर्गोचरसंज्ञकम् २३
गौतमादि ऋृषिणां तु नाम सावित्रगोचरः
आत्रेयादि ऋृषिणां तु प्रोक्तं च व्योमगोचरः २४
तेषां वै शुद्धशैवानां वृत्तिवैशेषिकान् शृणु
चतुर्णां गोचराणां तु प्रजापत्यादि कर्मतः २५
प्राजापत्यादिकं पूर्वं महिपालं द्वितीयकम्
कपोतं हि तृतीयं वै चतुर्थं ग्रन्थिकं स्मृतम् २६
ब्रह्मचर्यादिभिक्षान्तं प्राजापत्यादिकत्विह
शिवगोचरसंज्ञानां वृत्तिभेदाः प्रकीर्तिताः २७

धृतराष्ट्र वृतं पूर्वं बलवृत्तिद्वितीयकम्
अंसगोपालकश्चैव ज्योतिर्गोचरवृत्तिका २८
प्रथमन्तुदिकं प्रोक्तं द्वितीयं ममाङ्कुरं तथा
तृतीयं कुलितं प्रोक्तं सावित्री नामगोचरे २९
चतुर्गोचर संज्ञं तु प्रोक्तं भेदानि मे शृणु
स्वाद्ध्यायं कुरु शुश्रूषा संयमः सत्यवाचकम् ३०
प्राजापत्यवृतं चैव ब्रह्मचारि सदाचरेत्
शान्त्यादिकर्मकुशला मारणादि सुपेशका ३१
रक्षकां तु महिसर्वां महिपालवृतात्तु वै
पततिर्णकणान् भूमौ भक्षयित कपोतवत् ३२
कपोत जीविताये च कपोतास्तु प्रकीर्तिताः
सद्ग्रन्थसतताव्यासं धनमात्मानमेव हि ३३
त्यजन्ति देवतानां हि ग्रन्थिकास्तेऽप्युदाहृताः
समुद्रे वा नदीतीरे कुटिं कृत्वा निवासयेत् ३४
ब्रह्मचारि वृतं ह्येते कुटिकान्तं तथा मताः
क्षेमारामे सुतीर्थे वा तत्पत्निसहजीवनः ३५
सदोत्साह समायुक्ता वेतालास्ते भवन्ति वै
दिव्यतीर्थार्क पत्राशी पद्महोमपरायणः ३६
पानप्रस्थाश्रमं कृत्वा पद्म चण्डे प्रकीर्ताः
वैदिकाचार विज्ञान ज्ञानयोगसमन्विताः ३७
अष्टात्विर्गुलिकाभिस्तु भुक्त्वा देशविपत्य वै
आशनं गुलिकामात्रं गुलिकान्ते महावृताः ३८
शरीरदण्डनं कृत्वा वीरासनरतः सदा
वृतैश्च दण्डन अस्मात् तेनैव दण्डनं स्मृतम् ३९
कार्यो गुरुग्रहे वासः त्रिकाल स्नाधिभक्ष्य भुक्
रक्षयेत् ब्रह्मचर्यं तु प्रोक्तं ब्रह्मोदहवृतम् ४०

स्वदारार्चिः शुद्धचेतस्त्वयाचित धनान्वितः
चरन्ति कुटिके यस्मात् ते कुटीचारकास्त्विह ४१
चरन्ति संसवद्ये च निर्मले कलसं श्रये
वने स्मवासिता नित्यं हंसास्ते तु प्रकीर्तिताः ४२
ग्रामैकरात्रि न्यायेन पर्यान् प्रधिनिमिमतम्
वृता वै शेषिकाः प्रोक्ता गोचराणामिदं वृतम् ४३
अन्ते वृतेश्वरं यागं कृत्वा तद्वृतमोक्षणम्
वृतं वृतेश्वरं यागं समासाच्छृणु तत्वतः ४४
चतुरश्रमण्डलं कृत्वा गोमयेनानुलिप्य वै
पञ्चपद्मं लिवेत्तत्र मध्ये श्वेताब्जमुच्यते ४५
पूर्वाब्जं पीतवर्णं तु कृष्णवर्णं तु दक्षिणे
पाण्डरं पश्चिमे भागे रविवर्णमथोत्तरे ४६
ईशानं मध्यपत्रे तु पूर्वाब्जे पुरुषं तथा
अघोरं दक्षिणे पद्मे सद्यं पश्चिमपङ्कजे ४७
सौम्येऽब्जे वामदेवं तु ईशानादिसुपूज्य वै
तत्तन्मन्त्रेण गन्धाद्यैः पूजयेत् सुसमाहितः ४८
तत्तन्मन्त्रजपं कृत्वा शतं वार्द्धार्धमेव वा
व्रतेश्वरं नमस्कृत्वा व्रतपूर्णेच्छया पुनः ४९
व्रतमीशस्य विज्ञाप्य पूर्वाह्ने तु विसर्जयेत्
स्नपनं तु ततः कृत्वा देवदेवं विशेषतः ५०
प्रणम्य वृतनाथन्तु वृतशुद्ध्यं तु श्रावयेत्
व्रतेशपूजनं ह्येवं वृतसिद्धिकराय वै ५१
तदभावे जले लिङ्गे प्रक्षेपणविधिं शृणु
नद्यां वापि तटाके वा तीरे समतले शुभे ५२
अन्नमृद्गोमयाद्यैसु लिङ्गं कृत्वा विशेषतः
सम्पूज्य वृतशुद्ध्यं तु संग्राह्य विधिवत्ततः ५३

व्योमव्यापि शिवे नैव तल्लिङ्गं तु जले क्षिपेत्
स्नपनं वर्जयित्वा तु चान्यत् सर्वं समानकम् ५४
प्रोक्तं वृतेश्वरं यागं समाचारविधिं शृणु
प्रणवं सर्ववर्णाख्यं शिवं सर्वमयं विभुम् ५५
ऋषिः सनत्कुमारस्तु ॐकारः शुक्लवर्णकम्
गायत्रीच्छन्द इत्युक्तं तस्य वै शिवतत्वजः ५६
ओमित्येकाक्षरं ब्रह्म वदन्ते सर्वयोगिनः
प्रणवं तु समासोक्ता ततः पञ्चाक्षरं शृणु ५७
वाचकः स तु विज्ञेयस्तद्वाच्यस्तु शिवं स्मृतम्
जपं भुक्तिप्रदं शस्तं तल्लयो मुनिरिष्यते ५८
ऋषिच्छन्दोवर्ण तत्वदेव तास्तु शृणु क्रमात्
काश्यपः कौशिकश्चैव भारद्वाजश्च गौतमः ५९
आत्रेयास्तु नारदादिमुनयः क्रमश स्मृताः
अनुष्टुप्च त्रिजगती । । । । । । । । ६०
छन्दांसि सर्वमाख्यातं वर्णान्येव मम शृणु
रक्तं कृष्णं तथा श्यामं पीतं स्फटिकसन्निभम् ६१
पृथिव्यादीनि तत्वानि तेषां तत्वं प्रकीर्तितम्
सद्यादि पञ्चब्रह्माणि तेषां देवाः प्रकीर्तिताः ६२
प्रणवेन समायुक्तं जपकाले तथा चरेत्
तथा षडक्षरं प्रोक्तं त्रिशूलास्तु न तत्समम् ६३
जपं चतुर्विधं प्रोक्तं सर्वेषां जपकाङ्क्षिणाम्
मानसं चैव कण्ठे तु ह्युपांशु व्यक्तमेव च ६४
व्यक्तं दशगुणोपांशु तस्मात् कण्ठोष्ठकं शतम्
सहस्रं मानसं तस्मादङ्गुल्यादि जपं शृणु ६५
अङ्गुल्या जपसंख्या तु तुल्या एकफलं तथा
रेखायाष्टगुणं प्रोक्तं जीवैर्दशगुणान्वितम् ६६

सन्ध्याकाले कुशग्रन्थिः प्रवालैस्तु सहस्त्रकम्
मणिभिर्दशसाहस्त्रं मौक्तिकं लक्षमुच्यते ६७
पद्माक्षैः कोटिगुणितं रुद्राक्षैस्तु न विद्यते
रुद्राक्षस्य ततोत्पत्तिं शृणुत्वं वक्ष्यतेऽधुना ६८
दिव्यवर्षसहस्त्रं तु चक्षुरुन्मिलितं मया
मुञ्चन्ति मम नेत्राभ्यामश्रु रुद्राक्षमुच्यते ६९
एकवक्त्रं शिवं साक्षादनन्तं धारणात् फलम्
सन्धार्य मृयते यस्तु सयाति परमांगतिम् ७०
द्विवक्त्रं शक्तिरित्युक्तं त्रिवक्त्रं नादमुच्यते
चतुर्वक्त्रं तु बिन्दुः स्यात् पञ्चवक्त्रं सदाशिवम् ७१
षड्वक्त्रमीश्वरं प्रोक्तं रुद्रः सप्तमुखं स्मृताः
अष्टवक्त्रं तथा विष्णुर्नववक्त्रं चतुर्मुखम् ७२
नववक्त्रैक वक्त्रान्तं फलं दशगुणोत्तरम्
हस्ते कण्ठे शिखाकर्णे सन्धार्य सह भस्मना ७३
सर्वपापात् प्रमुच्यन्ते शिवसायुज्यमाप्नुयात्
दर्शनं पापनाशस्तु स्पर्शनं सर्वसिद्धिदम् ७४
प्रागुक्तं धारणात् पुण्यं सर्वसिद्धिफलप्रदम्
रुद्राक्षं धारणात्पुण्यं रुद्राक्षं धारयेत्सदा ७५
प्रयाणकाले रुद्राक्षं भक्षयित्वा मृतं तु ये
ते रुद्र पदमाप्नोति पुनर्जन्म न विद्यते ७६
तस्मात् सर्वप्रयत्नेन जपं रुद्राक्षकैः सदा
जपकालं च शेषं च वक्ष्यते तु समासतः ७७
पूर्वाह्ने चैव मध्याह्ने चापराह्नेर्धरात्रिके
चतुष्कालं त्रिकालं वा तद्देशं च शृणुष्व हि ७८
नदीतटाकतीरे वा गोष्ठे वाप्यालयेऽपि वा
वने वाथगिरौ देशे पुण्यस्थाने ग्रहे यजेत् ७९

दृष्टे दूरे पिमाने तु नमस्कृत्वास्तु भक्तितः
पथिश्रान्ते विमानं तु यदा दृष्टे नमस्कृते ८०
पूर्वं शान्तं तदर्धाय प्रदक्षिणं तु कारयेत्
लिङ्गदर्शनकाले तु पुष्पं कृत्वा प्रणम्य च ८१
रिक्तपाणिर्न गन्तव्यो देवदेवस्य सन्निधौ
पत्रपुष्पफलैर्वापि न शून्यं मस्तकं तथा ८२
भस्मयुक्ते यदा दृष्टे लिङ्गमुद्रान्तु दर्शयेत्
शिवचिन्हधराश्चैव भक्तियुक्तास्तदन्वगाः ८३
पङ्कमग्नं पशुं दृष्ट्वा तदुत्थाप्याथ गच्छति
पैशुन्यं च शिवेत्यक्त्वा सर्वप्राणिदया परः ८४
अदीक्षितजनं स्पृष्ट्वा पापयुक्तांस्तु वर्जयेत्
जपं समासतः प्रोक्तं पवित्रारोहणं शृणु ८५
इति वृताचारविधि पटलः षष्ठः ६

## अथ पवित्रारोहण विधिपटलः

अथातः सम्प्रवक्ष्यामि पवित्रारोहणं शृणु
सर्वपूजा समृद्ध्यर्थं वृतपूर्णार्थमेव च १
सर्वकर्मसुहीनेषु पूर्णार्थं कारयेद्बुधः
आलये देवमारभ्य सर्वसम्पत्कराय च २
शिवपूजा करो कार्यः पवित्रारोहणक्रियाम्
आषाढे शुक्लपक्षे वा श्रावणे वा विशेषतः ३
प्रोष्ठमासे स्वयुङ्गांसे कृष्णपक्षेऽथवा पुनः
द्वितीयादि चतुर्थादि षष्ठ्यादि च विशेषतः ४
अष्टम्यन्तं प्रकर्तव्यं पवित्रं सर्वसिद्धिदम्
अष्टम्यादि दशम्यादि द्वादशादी च वा बुधः ५
चतुर्दश्यान्तकं कार्यं पवित्रारोहण क्रियाम्

सप्ताहं चैव पञ्चाहं त्रियाहं वापि कारयेत् ६
सप्तम्यां वा त्रयोदश्यां रेवत्यां कृत्तिकान्विते
आर्द्रायां रोहिणी युक्ते कारयेत् तत्पवित्रकम् ७
कृत्वाङ्कुरार्पणं पूर्वे कर्तव्यमधिवासनम्
स्नपनं तु यथा शक्त्या शिवाग्निं तु विशेषतः ८
विशेषपूजनं कृत्वा नमस्कृत्वा विशेषतः
मया कृतानि दानानि द्रव्याणीह वृतानि च ९
अनया पूजया सर्वाः सम्पूर्णास्तु प्रसीदत
एवं विज्ञाप्यतं शम्भु नमस्कृत्वा तु भक्तितः १०
तद्भस्मदन्तकाष्ठानि तोयं सूत्रं समावहेत्
नदिमृद्भस्मपूर्णो वा मलके वा परिग्रहम् ११
पूर्ववत्तस्य संग्राह्य पालाशं दन्तकाष्ठकम्
अथवा याज्ञकै वृक्षैर्नव वा सप्तसंख्यया १२
कनिष्ठाङ्गुलिनाहं तु द्वादशाङ्गुली दीर्घकम्
वस्त्रपूतेन तोयेन सम्पूर्यनवमृद्घटम् १३
द्वात्रिंशत् प्रस्थपूर्णं वा तदर्द्धं त्वर्धमेव वा
सूत्रैः संवेष्टयित्वा तु वस्त्रैरावेष्ट्य यत्नतः १४
पञ्चरत्नानि निक्षिप्य रत्नालाभे हिरण्यकम्
सूत्रं प्रागेव संग्राह्य निर्मितं द्विजकन्यया १५
यथा सम्भवसूत्रं वा शोधयेत्तोय भस्मना
तत्सूत्रं द्विगुणं प्रोक्तं तदेव द्विगुणं भवेत् १६
नवसंख्या तु यत्सूत्रं पवित्रं कनकसिद्धिदम्
वामाद्या शक्तयस्तत्र नवसूत्राधि देवताः १७
लिङ्गोत्सेध समायामं प्रासादे तु पवित्रकम्
हस्तमात्रसमायामं पवित्रमिह शोभनम् १८
सूत्रैर्विवर्धयेद्विद्वान् नवधा तु पवित्रकम्

नवषोडशविंशद्भिरधमत्रयमेव च १६
पञ्चविंशच्च द्वात्रिंशत् षट्त्रिंशे मध्यमत्रयम्
पञ्चाशत्सप्ततिश्चैव नवतिश्चोत्तमत्रयम् २०
एतेषां तु यथा शक्त्या पवित्रं लक्षणान्वितम्
प्रशान्तायेति मन्त्रेण ग्रन्थयित्वा पवित्रकम् २१
तस्य मध्ये दशग्रन्थिं बध्वा सूत्रेति देशिकः
नवसप्ताष्टसूत्रैर्वा ग्रन्थिं कृत्वा विचक्षणः २२
इन्द्रादिलोकपालाश्च ग्रन्थीनामधिदेवताः
आत्मार्थेऽप्येवमाख्यातं सूत्रसंग्रहणं क्रमे २३
सकलानां तु बिम्बानां तदुत्सेधं प्रकीर्तितम्
रात्राधिवासने प्रोक्तं पवित्राणि विशेषतः २४
निर्दिष्टदिवसे सुद्ध पवित्राण्यधिदेवताः
प्राङ्मुखे मण्डपे रम्ये वितानाद्युपशोभितम् २५
मण्डले वर्तयेत्तस्या मध्ये पूर्वोक्तमार्गतः
पूजाविद्ध्युक्तमार्गेण तस्मिन्न्यस्यात् सदाशिवम् २६
हविर्निवेदनं कृत्वा फलभक्ष्यान्यनेकधा
तस्याग्रे तु पवित्राणि तद्रात्रौ चाधिवासयेत् २७
पवित्राणां तथाग्रे तु कुण्डे वा स्थण्डलेऽथवा
शिवाग्निं पूर्ववत्कृत्वा समिदाज्यां न संयुतम् २८
तत्पवित्रविशुद्ध्यर्द्धं तद्रात्रौ चाधिवासयेत्
शालितण्डुलपुष्पाद्यैः स्थण्डलं चतुरश्रकम् २९
संस्तिर्योपरिवस्त्रेण गन्धपुष्पादिभिः सह
वस्त्रोपरि पवित्राणि संस्थाप्याभ्यर्च्य बुद्धिमान् ३०
वस्त्रौराच्छाद्य शिरसा धूपयेद्धृदयेन तु
भस्मदक्षिनतः शुद्धं मृच्चूर्णं पश्चिमे दिशि ३१
सोमे संस्थाप्यतोयं तु दन्तकाष्ठानि पूर्वके

एतानि गन्धपुष्पाद्यैरर्चयेद्धृदयेन तु  ३२
उत्तराच्छाद्नं कृत्वा दर्भैरुपरिदेशिकः
तत्र सम्पूज्य देवेशं गन्धपुष्पस्त्रगादिभिः  ३३
गन्धैराच्छाद्यविधिवत् पुष्पैराच्छाद्ययत्नतः
दर्भैराच्छाद्य पश्चात्तु सूत्रैरावेष्ट्य बुद्धिमान्  ३४
शिवमारोपयेद्रात्रौ पवित्रं पिण्डिकान्वितम्
धूपदीपसमायुक्तं सम्पूज्य हृदयेन तु  ३५
हुत्वा तेऽग्निं समाराध्य पवित्रं लिङ्गवर्ततः
प्रभूतं चैव नैवेद्यं पञ्चवर्णे विशेषतः  ३६
शिवाग्नौ मूलमन्त्रेण शतं हुत्वा विचक्षणः
द्रव्यांस्तु हृदयेनैव होतव्यं व्याहृतिं ततः  ३७
नृत्तगेय समायुक्तं रात्रौ निद्रां विवर्जयेत्
प्रभाते विधिवत्स्नात्वा सकली कृतविग्रहः  ३८
पर्यूषितानि पुष्पाणि पवित्राणि विसर्जयेत्
पूजनं पूर्ववत्कृत्वा स्नपनान्ते विशेषतः  ३९
मृच्चूर्णलेपनं पूर्वं भस्मनालेपनं ततः
दन्तकाष्ठैश्च दन्तानि धावयेद्देशिकोत्तमः  ४०
पूर्णकुम्भोदकैः स्नानं कृत्वा गन्धादिभिः पुनः
वस्त्रैराभरणैश्चैव मूलमन्त्रेण देशिकः  ४१
सम्पूज्य देवदेवेशं नृत्तगेय समन्वितम्
सदाशिवमनुस्मृत्य मूलमन्त्रं समुच्चरेत्  ४२
पवित्रारोहणं कृत्वा देवेशं पिण्डिकान्वितम्
मण्डलस्थं शिवं यष्ट्वा गन्धाद्यैरनुपूर्वशः  ४३
सहस्राक्षरमन्त्रेण हुत्वा तेऽग्निं समर्प्य वै
पवित्रं वह्निमारोप्य परिषेषमथाचरेत्  ४४
पञ्चवरणदेवानां पवित्रं हृदयेन तु

अन्येषां चैव देवानां दापयेत्तु पवित्रकम् ४५
कर्तुश्च देशिकस्यैव तयोः पत्न्याश्च देशिकः
शिष्याणां परिचाराणां दत्वा वै तत्पवित्रकम् ४६
गन्धपुष्पैस्तु सम्पूज्य धूपदीपैर्विशेषतः
प्रभूतहविषं पश्चात्पायसादीनि दापयेत् ४७
होमं तथैव कर्तव्यमाद्यन्तं मुनिभोजनम्
जनानां सर्वदानानि दत्वा तत्र यथार्हकम् ४८
वस्त्रैराभरणाश्चाद्यैराचार्यं पूजयेत् ततः
यतीनां शुद्धशैवानामन्यान्महेश्वरानपि ४९
विशेषभोजनं दानं कृत्वा तत्र स्वशक्तितः
संश्राव्यसमवान् पश्चाद् देवदेवस्य चाग्रतः ५०
एतानि वृतदानानि सम्पूर्णानि प्रसीदतः
एवं विज्ञापयेद्देवं समाप्तिर्नयनं तथा ५१
पाशजालानि संश्छिद्यमोक्षं तद्दातुमर्हसि
प्रणम्यदण्डवत् भूमौ नमस्कृत्वा विशेषतः ५२
तस्मादारभ्य चाब्दान्तं षट्चतुर्मासमेव च
तन्मासं तद्दिनं वापि नियमेन नयोद्धृतः ५३
नियमेष्वर्चयेद् धीमान् लिङ्गोक्तमवदारयेत्
ततस्त्यक्त्वा तु निर्माल्यं स्नात्वा पूजां समाचरेत् ५४
रोपयेत् तत्पवित्रं तु माविभग्नं दिनेदिने
नियमावृतसूत्रं तु तदासूत्रावरोहणम् ५५
अरोहिणिपवित्राणि पुष्पाणि च विसर्जयेत्
पूर्ववत् पूजनं कृत्वा प्रभूतहविषं ततः ५६
यागोप योगद्रव्याणि ह्याचार्याय प्रदापयेत्
पवित्रारोहणं प्रोक्तं हिरण्यगर्भकं तुलाम् ५७

इति पवित्रारोहणविधि पटलः सप्तमः ७

## अथ हिरण्यगर्भतुलाभरविधिपटलः

अथातः सम्प्रवक्ष्यामि हैरण्यगर्भकं तुलाम्
दीक्षायुक्तनृपाणां तु कर्तव्यौ तौ प्रकीर्तितौ १
ग्रहणे विषुवे काले अयने तु प्रशस्यते
पौरुषे चार्षे चैव दैविके तु पुराणके २
पौरुषैः स्थापितं लिङ्गं पौरुषं तु प्रकीर्तितम्
ऋषिभिस्त्वा ऋषं प्रोक्तं देवैरेव तु दैविकम् ३
स्वयमुद्भूत लिङ्गं तु पुराणमिति निश्चितम्
पौरुषादि पुराणान्तं फलवृद्ध्युत्तरोत्तरम् ४
तस्मात्पौराणिके स्थाने कारयेत् तत्र वित्तमः
दैविके मध्यमं ज्ञेयमन्यत्रैवाधमं स्मृतम् ५
प्रासादस्यैशदिक्भागे पूर्वे वा दक्षिणेऽपि वा
पश्चिमे चोत्तरे वापि अन्तराले मनोरमे ६
चतुरश्रमण्डपं कृत्वा चतुर्द्वारसमायुतम्
दशद्वादशहस्तं वा षोडशस्तम्भसंयुतम् ७
चतुस्तोरणसंयुक्तं सर्वालंकारसंयुतम्
दर्भमालाभिरावेष्ट्य मुक्तास्रग्दामशोभितम् ८
तन्मध्ये वेदिकां कुर्यात् नवभागैक विस्तृतम्
उत्सेधश्चरुमात्रेण दर्पणोदरवच्छुभम् ९
अदिक्षुचाग्निकुण्डानि पूर्वोक्तविधिना सह
अथवा चतुरश्राणि वृत्तानि विदिशासु वै १०
चक्रशङ्करयोर्मध्ये वृतकुण्डं प्रकल्पयेत्
अग्निं वै पूर्ववद्धुत्वा विद्याङ्गं हृदयेन तु ११
स्थण्डिलं वेदिकायां तु शालिभिर्विमलैस्तथा
तत्रैव संलिखेत्पद्ममष्टपत्रं सकर्णकम् १२

गन्धपुष्पैः समभ्यर्च्य धूपदीपैर्विशेषतः
हिरण्यभाजनस्याधस्पटपत्रं सकर्णिकम् १३
ऊर्ध्वभागं ततः कृत्वा चतुर्द्वारसमन्वितम्
तथोभागे न्यसेन्मंत्री बीजमुख्येन मन्त्रतः १४
प्रक्षाल्य पञ्चगव्येन समभ्यर्च्य सदा बुधः
जलस्नानं पुरा कृत्वा दन्तधावनपूर्वकम् १५
भस्मस्नानं ततः कृत्वा शुक्लचन्दनलेपितः
शुक्लवस्त्रोपवीतश्च शुक्लमाल्यैरलङ्कृतः १६
सोष्णीषश्चोत्तरीयश्च सर्वाभरणभूषितः
प्रविशेद्भाजनस्यान्तं पूर्वाभिमुखसंस्थितः १७
शिवमन्त्रं जपित्वा तु शिवध्यानपरायणः
ऊर्ध्वभागेन सञ्च्छाद्य हृदयेन विचक्षणः १८
सूत्रैरावेष्ट्य यत्नेन पुष्पमाल्यैरलंकृतः
शिवोऽहमिति सम्भाव्य यावत् स्वस्वाहितावतः १९
तस्मान्निर्गम्य नृपतिर्नमस्कृत्वा सदाशिवम्
हिरण्यगर्भवेशात्तु पुनर्जन्म न तु वृजेत् २०
भूत्वा हिरण्यगर्भेण विधाता सर्वजन्तुषु
प्रणिपत्य गुरुं तत्र सम्पूज्य च विशेषतः २१
होत्रान् सम्पूज्यविधिवद्वस्त्रहेमाङ्गुलीयकैः
सर्वयज्ञफलं प्राप्य सर्वदानफलं लभेत् २२
दिक्षितानां नृपाणां तु कर्तव्यं तत्प्रयत्नतः
शैवमार्ग स्थितानां तु ग्रहिणां लिङ्गिनामपि २३
भक्तानां दापयेत्तत्र नृपसौवर्णभाजनम्
प्रोक्तं हिरण्यगर्भं तु तुलाभारं ततः शृणु २४
पूर्वोक्त स्थानकालेषु कर्तव्यं तन्नृपेण तु
खदिरश्चन्दनं चैवस्तालं चम्पकविल्वकैः २५

अन्यैस्तु सारवृक्षैर्वा कृत्वास्तम्भद्वयं ततः
तदूर्ध्वे चोत्तरन्यस्त्वा दण्डमध्ये तु योजयेत् २६
सप्तषट्पञ्चहस्तं वा नाहं द्वात्रिंशदंगुलम्
अग्रयोः सुषिरं कृत्वा बध्वाशृङ्खलया दृढम् २७
समवृतं त्रिहस्तं तु ताम्रपात्रद्वयं तथा
किञ्चिन्निम्नं तु सुषिरं तयोर्बध्वा तु रज्जुभिः २८
आयसेन तु मध्ये तु सुस्निग्धं कारयेद्बुधः
दर्भमालाभिरावेष्ट्य पुष्पमालोपशोभितम् २९
स्तम्भं वस्त्रैस्तु संवेष्ट्यः सर्वालङ्कारसंयुतम्
तुलामारोप्य नृपतिः सर्वाभरणभूषितः ३०
तुलामनुसमायुक्तं हृदयेन विचक्षणः
शेषपात्रे तु संयोज्य हेमतत्तुल्यगर्तकः ३१
शिवमन्त्रं जपित्वा तु शिवध्यानपरायणः
अवतीर्यतुलायास्तु तत्सुवर्णं तु पूर्ववत् ३२
दैवानां चैव शैवानां ब्राह्मणानाङ्गुरोस्तथा
आदिशैवानुशैवानां दापयेत्तु यथार्हकम् ३३
वा जपेय सहस्रैस्तु राजसूयशतैरपि
अश्वमेध सहस्रैस्तु तैस्तुल्यं फलमाप्नुयात् ३४
तुला हैरण्यगर्भं तु प्रोक्तं वै दहनं शृणु
इति हिरण्यगर्भतुलाभारविधिपटलोष्टमः ८

अथ दहनविधिपटलः

अतः परं प्रवक्ष्यामि दहनस्य विधिक्रमम्
यदा चैतन्यरहिते प्रारभेद्दहनक्रियाम् १
दहनं च कृतिं भद्रं चावटाग्निकमेव च
अवटादि क्रियाः सर्वाः संक्षेपाच्छृणु सुव्रत २

गर्भस्त्रावं च पतनमुढगर्भं तथा प्रजाः
चौलकार्यादयो मर्त्या ये मृताश्चावटाभिकाः ३
दहनं हलिकर्मादि वर्ज्यं तेषां प्रयत्नतः
पवनोर्ध्वमृतिर्येषामब्दं प्रतिदिनेदिने ४
बलिदाहाद्यकर्माणि सममेतदुदाहृतम्
दशवर्षादतिक्रान्ते दशाहं दापयेत् बलिम् ५
अवटाग्निककार्यं तु समासात्प्रोच्यतेऽधुना
कृत्वा शरीरशुद्धिं तद्रजनी पुष्पशोभितम् ६
दर्भैरावेष्ट्य यत्नेन बन्धुभिः परिवारितः
कार्पासवाससा वापि ग्राहयेत्तु विचक्षणः ७
शिवभक्तिः शुचिर्भूत्वा भस्मोद्धूलितविग्रहः
अपसव्योपवीतस्तु कृतदर्भोत्तरीयकः ८
गत्वा श्मशान देशे तु शुद्धदेशे मनोहरे
खात्वोर्वीं तत्प्रमाणेन विस्तारं तत्प्रमाणतः ९
बाहुमात्रभिदे निम्ने न्यस्त्वादर्भाक्षतादिभिः
शिरस्तु दक्षिणे देशे शाययेन्मृतकं तथा १०
तूष्णीं गन्धादिनाभ्यर्च्य दर्भैराच्छाद्यतच्छवम्
मृदं सम्पूर्य तत्रैव सुस्निग्धं तु सुवर्णकैः ११
तदा स्नानं च कर्तव्यं तत्सपिण्डैः सहैव तु
दाहक्रियाविना यत्र बलिकर्म न कारयेत् १२
अवटाग्निकमेवोक्तमाकृतिं च ततः शृणु
वाचायुक्तस्य मरणं शस्त्रेणैव तु मुष्टिका १३
वसूरिक्षयकुष्ठाद्यैरात्मघातकमारणम्
जलेन श्रिङ्गिणा वापि वह्निना वा विशेषतः १४
एतैस्तु मरणं एषां तेषामाकृतिरुच्यते
सर्पेण पशुनानागैर्देशाद्देशान्तरे गते १५

द्वादशाब्दादतिक्रान्ते चाकृतिर्दहनं स्मृतम्
तस्य पत्न्यस्ति चेत्तत्र वैधव्यं कारयेत् क्रमात् १६
बलिकर्माणि चान्यानि कृत्वा चैव समन्त्रकम्
पश्चात्कृते गते वापि मङ्गल्याभरणं तथा १७
मङ्गल्यमुत्तरीयेण पत्न्याकण्ठे तु रोपयेत्
आचार्यं पूजयेद्धीमान्यावदामरणान्तिकम् १८
यत्र पूर्वक्रियासूत्या तत्र कर्म न कारयेत्
शस्त्रादिमरणं यत्र कार्यं संवत्सरोपरि १९
अमन्त्रेण दहेद्देहं खनित्वा चाथ भूतले
सुदर्भैराकृतिं कृत्वा सूत्रैरावेष्ट्य चाकृतिम् २०
पलाशपत्रैरावेष्ट्य सर्वाङ्गं परिकल्प्य वै
मृतवत्सर्वकर्माणि कारयेत्तु विचक्षणः २१
आकृतेर्दहनं प्रोक्ता दहनस्य विधिं शृणु
शवशुद्धिं पुराकृत्वा भस्मस्नानमतः परम् २२
सिकते स्थण्डिलं कृत्वा स्वप्रमाणेन देशिकः
दर्भैरुपरिविन्यस्य प्रेतं तत्रोपविन्यसेत् २३
बध्वापादौ च हस्तौ च रङ्गमाल्यैरलङ्कृतम्
ध्यात्वा शिवतनुं पूर्वं ब्रह्माङ्गाकृति विग्रहः २४
कर्णमन्त्रं जपं कृत्वा बीजमुख्यं तु मन्त्रतः
स्नात्वा चम्यविधानेन वामे तदुपवीतकम् २५
सपिण्डैर्बान्धवैर्वापि संस्नाप्येवं शिवाग्निकम्
चतुरश्रमलं कृत्वा खनित्वा कीलकत्रयम् २६
तेषामूर्ध्वे तथा पात्रं न्यस्त्वाधसुषकं बुधः
तस्याधश्चाग्निमुद्दीप्य तु षकाग्नौ यथा विधि २७
शिवाग्निं ध्याययेत्तत्र गन्धाद्यैश्चाग्निपूजनम्
निधाय शुद्धदेशे तु कृत्वाश्वास परीक्षणम् २८

हृन्नासिकर्ण देशेषु स्पर्शयित्वा क्रमाद्बुधः
हृदयेन तु मन्त्रेण श्वासंसंशोध्यमन्त्रवित्  २९
अघोरेण तदुथाप्य शशाने चोपरोप्यते
यावत्प्रेतस्य चायामं तावद्भूमिं तु खातयेत्  ३०
अरतिमात्रमर्धं वा तिलाक्षत कुशोदकैः
वामदेवेन सम्प्रोक्ष्य स्नात्वाकोणेषु कीलकान्  ३१
सूत्रैरावेष्ट्य परितः काष्ठं तत्रैव निक्षिपेत्
प्रेतस्य दक्षिणे भागे शिवाग्निं पूर्ववद्बुधः  ३२
हृदयेन शतं हुत्वा तन्नाम्ना तु शताहुतिः
होमशेषं घृते नैव चरुक्षीराक्षतादिभिः  ३३
नाभिहृद्वक्त्रदेशेषु हृदयेन विनिक्षिपेत्
इन्धनोपरि विन्यस्य दक्षिणे तु शिरस्ततः  ३४
दत्वा हिरण्यशकलं नवद्वारेषु बुद्धिमान्
तदास्य चक्षुषी कर्णौ नासि द्वारौ गुहसथा  ३५
लिङ्गं चेति नवद्वारं हृदयेन निधापयेत्
क्षीरतण्डुलसम्मिश्रं दत्वा वामेन चास्यके  ३६
छेदयित्वा ततः पाशमघोरास्त्रेण मन्त्रवित्
स्नग्वासं च ततः कुर्यात्सपिण्डैर्भ्रातृभिस्तथा  ३७
प्रदक्षिणत्रयं कृत्वा वेलाग्रेणैव बुद्धिमान्
जलधारा समायुक्तं वह्निस्थ नवमृद्धटम्  ३८
प्रदक्षिणवशाद्वारमस्त्रमन्त्रेण देशिकः
प्रदक्षिणत्रयं कृत्वा वामपार्श्वे निधाय वै  ३९
ततः कपालतोयैश्च प्राणस्थानेषु योजयेत्
मूर्धादिपादपर्यन्तमाज्यालेपं सुशोभितम्  ४०
पादद्वयं च संस्पृश्य स्मृत्वागौ तु हविष्यवत्
अघोरेणाग्नि निक्षिप्य शिरस्थाने शिवं स्मरेत्  ४१

नद्यां वापि तटाके वा सुस्नात्वा भारकैः सह
पञ्चगव्यं घृतं पीत्वा मूलमन्त्रं शतं जपेत् ४२
यथा शक्त्याधनं दत्वा ब्राह्मणानां दरिद्रिणाम्
तीर्थं गत्वा यथा न्यायं स्नापयित्वा सपिण्डकैः ४३
तिलोदकं तु तातव्यं तस्य तन्नामपूर्वकम्
दहनस्य विधिः प्रोक्ता ब्रह्मचर्यादिषु क्रमात् ४४
दहनं तु न कुर्वीत यतीनां चावटाग्निकम्
संवाह्य शिबिकाद्येषु तूर्यशब्दैर्महारवैः ४५
सर्वमङ्गलकर्माणि कारयेत् तु विचक्षणः
खात्वा दण्डप्रमाणेन प्राङ्मुखं तत्र पूर्ववत् ४६
स्नानं तत्र न कुर्वीत नास्त्येवाशौचं मंत्रिणः
बलिकर्मणि कर्तव्यमेकोद्दिष्टाधिकं विना ४७
समासाद्दहनं प्रोक्तं पितृयज्ञविधिं शृणु
इति दहनविधिपटलो नवमः ९

अथ पितृयज्ञविधिपटलः

अथातः सम्प्रवक्ष्यामि पितृयज्ञविधिक्रमम्
दहनान्ते बलिं कृत्वा एकोद्दिष्टं तदन्तिके १
आश्रमाणां त्रयाणां च बलिपिण्डोदकक्रिया
कर्तव्यं द्वारवामे तु न्यस्त्वा चात्मशरावकम् २
कूर्चं प्रादेशमात्रं तु अश्ममध्ये विनिक्षिपेत्
पितृदैवतमावाह्य गन्धपुष्पादिनार्चयेत् ३
तस्य तद्गोत्रनाम्ना तु सर्वद्रव्यं हृदा बुधः
प्रथमेऽह्नि बलिं दत्वा चान्येष्वेवं तु दापयेत् ४
तस्य प्रीतिकरं द्रव्यं दापयित्वा प्रयत्नतः
पितृपूजा यदा कुर्यात् तस्य तुष्टिप्रदं सदा ५

द्वितीयेऽहनि तन्त्रात्मा दाहकेन समन्वितः
सपिराडैः सहगत्वा तु श्मशाने चाग्निके पुनः ६
घृतक्षुरसमायुक्तं शेषाङ्गं दहनं चरेत्
सप्ताहे नवभाराडं तु अस्थिसंग्रहणं तथा ७
सक्तुलाजोदना पूपैश्चतुर्दिक्षु च दापयेत्
अङ्गैरङ्गादिकन्धार्य तन्मन्त्रेणैव निक्षिपेत् ८
पुणयनामा तु मतिमान् शुभार्थाय च देहिनाम्
नवाहे वा पराह्णे तु शरावाश्मसुपूर्ववत् ९
दशरात्रमति क्रम्य सर्वान्तस्थान्विसर्जयेत्
स्थापयित्वा जलान् सर्वान् गोमयेन तु लिप्य वै १०
पुणयाहं तत्र कुर्वीत ग्रहेऽस्मिं तदशेषतः
एकादशाहे कर्तव्यमेकोद्दिष्टं विसर्जयेत् ११
कृतिकालमथारभ्य सुभक्षापेक्षकं विना
ग्रहे वा पुरतो वापि प्रपां वै कारयेद्बुधः १२
चतुरश्रे समे शुभ्रे सर्वालङ्कारसंयुते
शैवतन्त्रविदः सर्वान् तस्य मध्ये समावहेत् १३
पाद्याचमनार्घ्यं दत्वा नम स्मृत्वा तु चाग्रतः
ममेदं पितृयागं तु सर्वशास्त्रार्थमस्तु वै १४
अनुग्रहं त्विति ब्रूयादावर्तैका वटद्वयम्
श्राद्धकर्म समारभ्य दक्षिणे तत्पदार्थिनः १५
पदार्थिनो निमित्तं च विश्वेदेव पुरस्कृतान्
शैवाचारवृतांश्चैव श्रोत्रियान् प्रियदर्शिनः १६
संग्राह्यैतान् नमस्कृत्वा पादौ शौचं ततः कुरु
कारयेच्च द्वयं पूर्वं तयोर्दर्भान् परिस्तरेत् १७
प्रक्षिप्याथ तिलं मध्ये तैलेनाभ्यञ्जनं ततः
सर्वानभ्यञ्जनं कृत्वा स्नानं सर्वान् समाचरेत् १८

देवाग्निपितृयज्ञार्थं स्थण्डिलं त्रयमत्र वै
उत्तरे देवदेवेशं मध्यमेऽग्नीं प्रकल्पयेत् १९
दक्षिणे पितृपिण्डं च शूर्पाकारं तु देशिकः
कारयेद्व्यजनं भक्त्या शिवस्य विधिपूर्वकम् २०
मेध्येऽग्निं विधिवद्धुत्वा दक्षिणाग्निं परिसरेत्
तद्वत् परिधयस्तत्र समिदाज्योदनैस्तिलैः २१
हुताय नाम मूलेन प्रत्येकं तु शताहुतिः
सहस्राक्षरमन्त्रेण होमं कृत्वा तु शक्तितः २२
अघोरेण शतं हुत्वा स्वनाम्ना तु शताहुतिः
निमित्तं च त्रयं भोज्यं विश्वौ देवौ प्रपूजयेत् २३
गन्धाद्यैश्च समभ्यर्च्य वर्धनीं च सतण्डुलाम्
वस्त्रं कांसं सुवर्णं च शयनं पादुकं तथा २४
दक्षिणां च यथा शक्त्या दापयेद्भक्तिसंयुतः
ताम्बूलं तु विशेषेण दत्वा वैकं प्रणम्य च २५
दर्भाग्रैसुसमुद्वास्य पश्चात् पिण्डं तु देशिकः
शूर्पे सोदनदद्याच्चैर्मर्दयेत् सा पदंशकैः २६
कदली पुष्पवत्पिण्डं दक्षिणाग्रं विशेषतः
स्वाहान्तं प्रणवान्तं वा मन्त्रमेतदुदाहृतम् २७
चतुर्थ्यन्तं हिते मध्ये तस्य नाम समन्वितम्
तत्सूत्रगन्धपुष्पं च धूपदीपं विशेषतः २८
तिलं दत्वोदकं चैव ताम्बूलमपि पार्श्वकाः
ध्यात्वा परमसद्भावं शिवं तत्वैकतां बुधः २९
पात्रे पिण्डं समुत्थाप्य ततो हंसं नियोजयेत्
शैवान् सम्भोज्ययत्नेन पिण्डं रात्रौ जलेक्षिपेत् ३०
पित्रयज्ञविधिः प्रोक्तः सपिण्डीकरणं शृणु
इति पितृयज्ञविधिपटलो दशमः १०

## अथ सपिण्डीकरणविधिपटलः

अथातः सम्प्रवक्ष्यामि सपिण्डीकरणं परम्
द्वादशाहे त्रिमासे वा षाण्मासे वत्सरेऽपि वा १
तैलाभ्यञ्जनकादीनि पूर्ववत् परिकल्पयेत्
देवेशमुद्धरेन्मध्ये वह्निशूर्पं तु दक्षिणे २
सम्पूज्यपूर्ववत् सर्वं निमित्तं भोजयेत्ततः
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ३
तेष्वेवं सर्वतत्वानि कल्पयित्वा विशेषतः
पार्त्थिवादिषु पञ्चैव पञ्चपिण्डं तु विन्यसेत् ४
तस्मादुपरिसादाख्यं पूजयेत्तु सदाशिवम्
लिङ्गं कृत्वा विशेषेण द्वादशाङ्गुलदीर्घिकम् ५
अर्चनोक्तविधानेन तस्मिन् सम्पूजयेच्छिवम्
तत्पिण्डं पूर्ववत्कृत्वा तत्वेतत्वे तु योजयेत् ६
पूर्वं संयोज्य सालोक्यं सामीप्यं च द्वितीयकम्
तृतीयं चैव सारूप्यं सा युज्यन्तु चतुर्थकम् ७
एवं ध्यात्वा तु यत्सम्यक्सपिण्डीकरणं भवेत्
अष्टकाहोमकार्यं तु संक्षेपं शृणु सुवृत ८
माघे च प्रोष्ठमासे च सर्वे द्वौ तु विशेषतः
सूर्ये च सूर्यपुत्रे च भूमिपुत्रे तथैव च ९
अष्टका कुरुते विद्वानस्य द्वारे तु वा यदि
शिवाग्निं पूर्ववद्धुत्वा पञ्चब्रह्मैः शतं हुनेत् १०
पञ्चषट्सङ्ख्यकान् शैवान् भोजयित्वा विशेषतः
दक्षिणां च यथा शक्त्या वस्त्रहेमपुरःसरम् ११
पर्वेपर्वे पराह्णे तु यथा शक्त्या तथा कुरु
सम्प्रोक्तमष्टका होमं प्रायश्चित्तविधिं शृणु १२

इति सपिण्डीकरणविधिपटल एकादशः ११

## अथ प्रायश्चित्तविधिपटलः

अथातः सम्प्रवक्ष्यामि प्रायश्चित्तविधिक्रमम्
ज्ञातीनां च सगोत्राणां प्रायश्चित्तं तु नोच्यते १
तथा प्रबद्धलोकस्य लोकाचारं न लंघयेत्
अदत्वा प्रातिबुद्धस्य प्रायश्चित्तं विधीयते २
स्वजाति दीक्षितं स्पृष्ट्वा भस्म स्नानं विशेषतः
शूद्रस्य स्पर्शने तस्य सचेल स्नानमाचरेत् ३
अन्तरालानि सर्वाणि स्पर्शने स्नानकद्वयम्
प्रमादात् स्पर्शने विद्वान् जलस्नानं विधीयते ४
भस्मस्नानं ततः कृत्वा शिवमन्त्रशतञ्जपेत्
बुध्यासं स्पर्शनं चेति पूर्ववत्स्नानकर्मकम् ५
तद्दृष्टे भोजनेकाले तच्छेषान्नन्त्यजेद्बुधः
स्नानद्वयं तत कृत्वा जप्त्वा मूलं शताष्टकम् ६
दुर्गन्धं वायुनागच्छेन्नासाग्रे भिनिवर्तके
गोमयन्तु तथा जिघ्रन् सद्यः पञ्चाक्षरञ्जपेत् ७
स्वजातिदीक्षितानां च भुक्त्वा कामेन वै बुधः
व्योमव्यापिञ्जपेदेवं यदि कामाच्छतं जपेत् ८
नृपान्नभोजने वैद्यो घोरमन्त्रं शतं जपेत्
भुक्ते वैश्यान्नमेवं तु सहस्रान्तञ्जपेत् क्रमात् ९
भुक्ते त्वकामाद्रुद्रान्नं कृच्छ्रं चांद्रायणं चरेत्
चान्द्रायणं च कामाद्वै कृच्छ्रं चैव तु कूष्मकम् १०
भूक्ते चैकाहमूर्ध्वे तु कृच्छ्रं चान्द्रायणं चरेत्
मासे निरन्तरे भुङ्क्ते शूद्रत्वमुपजायते ११
शूद्रेणैव तु संयुक्तो नित्यं शूद्रवदाचरेत्

शूद्रस्त्री सङ्गमं कृत्वा सप्तकृच्छ्रं ततश्चरेत् १२
सप्तकृच्छ्रादिकृच्छ्रं च मासं मासार्धगामिनः
षाण्मासंवत्सरं वापि कृच्छ्रं चान्द्रायणं चरेत् १३
अब्दादुपरिसंयोगे प्रायश्चित्तं न विद्यते
तस्याचारं च तद्वच्च मरणान्ते विशेषतः १४
रजस्वलाङ्गना स्पर्शे भुक्ते स्नात्वा शिवञ्जपेत्
हेरण्डकवटाश्वत्थपत्रेषु यदि भोजनम् १५
कामादकामतो वापि शिवमन्त्रं शतं जपेत्
उच्छिष्टे घृतसंयुक्ते क्षीरे लवणसंयुते १६
जपित्वा हृदयं तत्र सर्वदोषनिकृन्तनम्
भुक्त्वान्नदर्शने केशे त्यक्त्वा संशोध्य भस्मना १७
संस्मरेद्देवदेवेशं जलं प्राप्य विशुद्ध्यति
लशुनं मत्स्यमांसं च निर्माल्यं च विसर्जयेत् १८
प्रमादात् भक्षयित्वा तु शिवमन्त्रं जपेच्छुचिः
कामेन यदि भुञ्जितं शिवमन्त्रशतं जपेत् १९
पातकानां च सर्वेषां समसाच्छृणु सुव्रत
ब्रह्महत्या सुरापानं सुवर्णस्ते यमेव च २०
गुर्वङ्गनागमं चैव तद्योगं पञ्चमं स्मृतम्
गुरुतल्पसुरापानं ब्रह्महत्या च ते त्रयः २१
मरणाभिमुखे प्रोक्तं तेषां च मरणं शृणु
बीजं कोशसमायुक्तं मूले संच्छिद्यसाहसात् २२
तालपत्रस्य नालेन गुरुतल्पी मृतस्तथा
हस्ते संग्राह्य तप्तानां सुरापी मरणं भवेत् २३
वचनाच्छृणु ताच्छिद्रं प्रमादादग्निसम्भवे
विप्रचिह्नं परित्यज्य सम्प्राप्य स्वहतं पदम् २४
ब्रह्महा चेति वा गच्छेनहा प्रस्थानमाचरेत्

सकृत्प्रवेशी तद्ग्रामं द्वितीयं न प्रवेशयेत्  २५
भर्त्रानारी समागच्छन् ग्रामान्ते नयतान्निशि
एवं चाकामतो ज्ञेयः कामत शृणु सुव्रत  २६
कृत्वा पूर्ववदाचार्य द्वादशाब्दान्तकं यथा
तदूर्ध्वगमने काले जले वह्नौ रणे पतन्  २७
सम्प्रविश्यापि मरणं नयेच्छुद्धो भविष्यति
स्वर्णस्तोधि च तद्योगात् समासाः शृणु सुव्रत  २८
दानं कृत्वा तु सर्वत्र तीर्थे स्नात्वा तु वत्सरम्
शिवमन्त्रं जपेद्देही पश्चादुद्दालकं चरेत्  २९
इदं सुवर्णसेयस्य प्रायश्चित्तं विधीयते
चतुर्भिरथ संयुक्तं कामतो कामतोऽपि वा  ३०
न गाग्रे पञ्चब्रह्माणि जपित्वा वत्सरत्रयम्
मन्दिरे शिवहर्म्ये वा वने वापि विचक्षणः  ३१
जले लक्षं तथा कामि स्नात्वा तु दिवसं प्रति
विशेषपातकं चोक्तं सामान्यं शृणु सुव्रत  ३२
मृगजाति कृते हिंसां सद्यमन्त्रं शतं जपेत्
पशुजातेश्च हिंसायां प्रागुक्तवृतमाचरेत्  ३३
पक्षिजातौ वेद्धिं सा घोरमन्त्रं शतं जपेत्
सरीस्रपादि हिंसा चेत्पुरुषं तु शतं जपेत्  ३४
स्थावराणि च हिंसायामीशमन्त्रं शतं जपेत्
गुरोस्तु वेतनार्थं च हिंसायां तु न दोषभाक्  ३५
सामान्यपातकं प्रोक्तं सामान्यसेयकं शृणु
मृद्दारुशैललोहां च कामतोऽकामतो भवेत्  ३६
ईशमन्त्रं शतं जप्त्वा लक्षं कामेन वै बुधः
स्तेयं समासतः प्रोक्तं सूतकं च ततः शृणु  ३७
ग्रहस्थो ग्रहिणी योगात्सूतकं प्रेतकं द्विधा

दशाहाच्छुद्धिविप्रस्य द्वादशाहात् नृपस्य तु ३८
वैश्यस्य पक्षतः शुद्धिर्मासं शूद्रस्य चोच्यते
सम्यक् ज्ञानी स्वधर्मस्थो न त्यजेद्ज्ञातिनं ततः ३९
शुद्ध्यते तत्क्षणात् ज्ञानी अज्ञानी चोक्तभाग्भवेत्
अन्यथा कुलहानिः स्यात्प्रायश्चित्ते कृते सति ४०
देवाग्निगुरुपूजादि हीने द्विगुणमाधिके
अघोरं तु शतं जप्त्वा स्वधर्मपूरितस्तथा ४१
आशौ चान्नं ततो भुक्त्वा कृच्छ्रं तत्रैव कारयेत्
त्रिसन्धौ पायसादीनि भुकेतु प्रेतकेऽपि वा ४२
सूतकेऽसूतके प्राप्ते प्राक्सुतांशेन शुद्ध्यति
सूतकेऽसूतकं वापि प्रेतकेऽप्रेतकं तु वा ४३
प्राप्ताशौचदिनं शुद्धं पूर्वाशौचाद्विनश्यति
निकृष्टजाति संयुके मन्दिरे संस्थिते सदा ४४
सर्वान् भाण्डान् परित्यज्य कृच्छ्रशुद्धिर्विधीयते
कृच्छ्रं चैवातिकृच्छ्रं च तपकृच्छ्रं तथैव च ४५
पराकं चान्द्रायणोद्दालं तेषामाचरणं शृणु
दिवसत्रयमेकाशी अयाचितदिनत्रयम् ४६
दिनत्रयं तु नक्ताशी निराहारदिनत्रयम्
एवं कृच्छ्रं समाख्यातमतिकृच्छ्रं ततः शृणु ४७
पिबेत्क्षीरस्य कुडुपमेकविंशद्दिनान्तकम्
स्नानाद्ध्यायसमायुक्तमतिकृच्छ्रमिति स्मृतम् ४८
त्र्यहमुष्णोदकं पीत्वा क्षीरं चैव त्र्यहं पिबेत्
त्र्यहमुष्णघृतं पीत्वा त्रयाहं वायुभक्षणम् ४९
तप्त कृच्छ्रं समाख्यातं पराकं च ततः शृणु
अनश्नन् द्वादशाहं तु स्नानं कृत्वा त्रिसन्धिषु ५०
पराकमिति विख्यातं सर्वद्रव्यस्य पूर्वकम्

मासार्धं ग्राहवृद्धिः स्यान्मासार्द्धं क्षयमेव च ५१
चान्द्रायणमिति प्रोक्तमुद्दालकं ततः शृणु
आमीक्षकं पिबेत्पक्षमष्टरात्रं घृतं स्मृतम् ५२
अयाचितं तु षड्रात्रं त्रिरात्रमुदकं पिबेत्
उपवासमहोरात्रमेवमुद्दालकं स्मृतम् ५३
। । । कुसुमं प्रोक्तमशनं ग्रासमात्रतः
एतेषु प्रायश्चित्तेषु स्नात्वा स्नात्वाशिवं जपेत् ५४
सहस्राष्टशतं वापि यथा शक्त्या जपेत्ततः
चतुर्विधा समाख्याता शिवश्वेता इमाः शृणु ५५
उदितोदितमुक्तश्च पादाधिक्यं तमोदितः
अर्द्धाधिक्याधिकान्तं च द्विगुणास्तु समासतः ५६
अनुक्तमिहशास्त्रे तु शेषं सामान्यवच्चरेत्
प्रायश्चित्तमिदं प्रोक्तं चर्या पादे समासतः ५७
चर्यापादं समाप्तं स्याद्योगपादं ततः शृणु

इति प्रायश्चित्तविधिपटलोद्वादशः १२

इति सुप्रभेदे चर्यापादः समाप्तः

शिवमयम्

सुप्रभेदम्

अथ योगपादे

नाडी चक्रविधिपटलः

अथातः सम्प्रवक्ष्यामि योगपादं समासतः
तस्यपादस्य पूर्वे तु नाडीचक्रक्रमं शृणु १
द्विसप्तति सहस्राणि नाडयस्तु प्रकीर्तिताः
नाडीभिर्व्यावृते देहे जीर्णाश्वत्थस्य पत्रवत् २
अशीतिश्च चतुश्चैव शतसाहस्रभेदकैः

शरीरे क्रीडते देवाः स्वेच्छया परमेश्वरम् ३
भूतग्रामैश्चतुर्भिश्च सर्वयोनि समुद्भवम्
अण्डजं स्वेदजं चैव उद्बीजं च जरायुजम् ४
अण्डजाताश्च ये भावास्त्वण्डजास्ते प्रकीर्तिताः
स्वेदजाताश्च ये भावास्वेदजास्तु प्रकीर्तिताः ५
भूमौ तु तोयबीजाभ्यामुद्भिदाश्चेति कीर्तिताः
इल्वयुक्ताश्च ये जाताः कीर्तितास्ते जरायुजाः ६
भूतग्रामैश्चतुर्भिश्च नराद्या षड्विधो भवेत्
नरश्चैव मृगश्चैव पशुः पक्षी तथैव च ७
सरीस्त्रपः स्थावरश्च षड्विधं योनिसम्भवम्
वाचा वदन्ति यद्वाण्या ते नरास्त्विति कीर्तिताः ८
ऊर्ध्वपुच्छं तु तद्बुद्धिं मृगं विद्याद्विनायक
अधोदीर्घाश्च ये पुच्छाः पशुजातिरुदीरिता ९
द्विपक्षाः पक्षिरित्याहु सरतीति सरीस्त्रपः
स्थापितं स्थावरं प्रोक्तं षड्विधं भूतमेव च १०
अथ्यन्ते योनि भेदानि क्षेत्रं स्याद्भूमिकं शृणु
पृथिव्यादीनि तत्वानि यत्र तिष्ठन्ति तल्लये ११
लयस्थानं तदाख्यातं तत्वातीतं परात्परम्
तस्माच्छिन्नं समुत्पन्न तस्माच्छक्तिरजायत १२
तस्मान्नादिं समुत्पन्नं तस्माद्बिन्दुसमुद्भवम्
तस्मात् सदाशिवं प्रोक्तं सृष्ट्यर्थं पञ्चधा भवेत् १३
तस्मादात्मा समुत्पन्नं सहजं मलसंयुतम्
क्षेत्रज्ञं तं विजानीयाच्छक्तिस्थं तु तथोच्यते १४
तस्मादुपरिवेशस्य शुद्धावस्थोऽनुकीर्तिताः
शुभाशुभवरप्राप्तौ तत्र गच्छन्ति जायते १५
मायाद्यवनिपर्यन्तं देहबद्धोऽत्र दृश्यते

कर्मोदये तु जननं कर्मान्ते मरणं स्मृतम्  १६
सुखदुःखनिमित्ताय शरीरग्रहणं कृतम्
शरीरं द्विविधं प्रोक्तं पुंसत्वस्त्रीत्वमेव च  १७
लिङ्गेन लांच्छितं पुंस्त्वं स्त्रीत्वं योन्याभिलांच्छितम्
लिङ्गमीशमयं प्रोक्तं योनिः शक्तिमयं स्मृतम्  १८
तस्माद्वै शिवशक्तिस्तु सर्वमेतच्चराचरम्
तच्छरीरं द्विधा प्रोक्तं स्थूलं वै सूक्ष्ममेव च  १९
पृथिव्यापस्तथा तेजोवायुराकाशमेव च
शुक्रं बीजांशमित्युक्तं क्षेत्रांशं श्रोणितं स्मृतम्  २०
अस्थि स्नायुश्च मज्जा च पित्रजंस्त्रयमेव तु
त्वङ्मांसशोणितं चैव मातृजं त्रिकमेव च  २१
इत्थं षट्कौशिकं प्रोक्तं शरीरान्तैस्तु जायते
नखदन्तश्च रोमाणि केशाश्च नाडयस्तथा  २२
शब्दस्पर्शश्च रूपश्च रसोगन्धश्च पञ्चधा
एतैर्भूतगणैर्युक्तं स्थूलं शरीरकं भवेत्  २३
शूक्ष्मस्य गोलकां विद्धि तच्छुभाशुभसाधनम्
जननमरणं चैव कर्मणा जायते ततः  २४
एवं स्थूलशरीरं च संक्षेपाद्वर्णितं मया
श्रोत्रं त्वक्चक्षुजिह्वा च घ्राणं बुद्धीन्द्रियं विदुः  २५
वाक्पादपाणि पायुश्चोपस्थं कर्मेन्द्रियं स्मृतम्
प्राणः समानोदानश्च अपानोव्यान एव च  २६
नागः कूर्मश्चक्रकरो देवदत्तो धनञ्जयः
मनोबुद्धिरहंकारश्चित्तोऽन्तः करणं स्मृतम्  २७
मदमात्सर्यमानादि सूक्ष्मशारीरकं भवेत्
इदं शरीरं लिङ्गं हि तयोर्जन्म ततः शृणु  २८
शुक्लं रक्तेन सम्भाव्य जनन्याश्चोदरे स्थितम्

कर्मादौ सकलं ग्राह्यं प्राप्यते सुषिराशयम्  २९
क्षेत्रांशैश्चैव बीजांशैः शरीरव्यावृतो गतः
रक्ताधिक्यात् स्त्रीप्रजा च शुक्लाधिक्यात् पुमान् भवेत् ३०
यदि शुक्लसमं रक्तं जायते तु नपुंसकम्
भजने तु यथा बिदुर्वर्द्धते तु शनैः शनैः  ३१
पुन्नागमुकुलाकारं गर्भाशयगतं तथा
मरणादीनि कर्माणि निमित्तानि वरेण तु  ३२
आयुष्यं विभवं कर्मविद्या च निधनं सुखम्
षट्कं सम्प्राप्य तत्रैव ततो गर्भाशयं विशन्  ३३
गुणाश्चैव त्रिदोषाश्च जन्तूनां तत्र सम्भवाः
सत्वं रजस्तमश्चैव गुणत्रयमिहोच्यते  ३४
सत्यं ज्ञानं तपोमौनं स्मृतिर्मेधाधृतिः क्षमा
उत्साहो निश्चयं धैर्यमेवं वै सात्विकं गुणम्  ३५
दर्पं महदहंकारं विषादं प्रियवाचकम्
उद्योगंमात्सरं प्रोक्तं रजसंगुणमुच्यते  ३६
आलस्यं मोहनिद्राश्च चापलं ही नवृत्तिकम्
पापिष्ठं परनिन्दा च तामसं गुणलक्षणम्  ३७
गुणानां तु समावस्था मूलप्रकृतिरुच्यते
संक्षेपात्त्रिगुणं प्रोक्तं त्रिदोषांश्च शृणुष्वमत्  ३८
वातं पित्तं कफं चैव रोगाणामधिपा स्मृताः
सर्वजन्तुषु सामान्यं समं वाधिकमेव च  ३९
एवमादीनि चान्यानि संविशेत् सुषिराशयम्
गर्भाशयगते काले वायुनाभिद्यते यथा  ४०
तदा रूपद्वयं गत्वा वर्धते तु शनैः शनैः
पञ्चाहे तु दशाहे तु पत्मपत्रस्थतोयवत्  ४१
मासान्ते चाक्षफलवद् विमासां मृफलाकृतिः

त्रिमासेऽष्टाङ्गुलं दीर्घं चतुर्मासे शिरो भवेत् ४२
हस्तौ चैव तु पादौ च पञ्चमासे प्रकीर्तितम्
नखाङ्गुल सपादौ च गुल्भौ च नलकौ तथा ४३
जंघे जानु तथा चोरुकटिस्फिक् जघनं तथा
स्तनपार्श्वोदरारभ्य कक्षौ वक्षाभुजावुभौ ४४
पादयोर्हस्तयोरेखा ह्यंगुष्ठे नखपर्वगाः
गलः कर्णौ च जिह्वा च ओष्ठौ दन्ताश्च नासिका ४५
नयनं भ्रूललाटश्च शिरः केशादयस्तथा
एतान्यङ्गानि सर्वाणि जायते षष्ठमासिके ४६
सप्तमासेन्न पानौ च नाभिनालेन भुज्यते
प्रसूयते वा तन्मासे वायुना न प्रसूयते ४७
अष्टमासे समुत्थाय वीणादण्डं समाश्रितम्
सम्प्राप्याष्टगुणैश्वर्य मणिमादिकमत्र वै ४८
त्रिकालं तु विजानाति ज्ञानात्सर्वं प्रकाशते
जायते चाष्टमे मासे जातश्चोत्तमजीवती ४९
जायते नवमे मासे दशमासे तु वा पुनः
ततस्त्वेकादशे मासे मायया प्रेरितो जनः ५०
बोद्धव्यं शक्तिना काचित् श्रमदाहक्षुधादिकान्
एवमादीनि वर्द्धन्ते क्रमेणैव शनैः शनैः ५१
तत्र भूत्वान्न वीर्येण वर्धन्ते सप्तधातवः
अन्नद्रवसमुत्पन्न रसाद्वै श्रोणितं स्मृतम् ५२
श्रोणितान्मांसमुत्पन्नं मांसान्मेदः समुद्भवम्
मेदसोऽस्थिसमुत्पन्नं तस्मान्मज्ञा तु सम्भवम् ५३
मज्ञा शुक्लं समुत्पन्नमित्येते सप्तधातवः
शरीरं धातुभिः प्राप्तं धातुभिः शब्दराशयः ५४
शब्दादिविषयं ज्ञानं द्विमासोपरिपूर्णके

पञ्चविंशति तत्त्वानि वक्ष्यते तु समासतः ५५
भूतानि भूतमात्राणि ततो बुद्धीन्द्रियाणि च
कर्मेन्द्रियाणि विघ्नेश तथान्तः करणानि च ५६
अव्यक्तेन समायुक्तं पञ्चविंशदुदाहृतम्
पृथिव्यादीनि तत्वानि प्राप्यते त्वखिलान्तनुम् ५७
पृथिव्यापस्तथा तेजोवायुराकाश एव च
महाभूतानि चोक्तानि तेषां भेदं शृणुष्वहि ५८
यत्कठिनं तत्पृथिवी यद्द्रव्यं ह्याप उच्यते
यदुष्णं चेत्ततो वह्निर्वायुः सञ्चरति त्विह ५९
अवकाशं यदा काशं महाभूतगणास्त्विमे
अस्थित्वक्मांसकेशाश्च नाडयस्त्विह कीर्तिताः ६०
पृथिव्यंशास्तथा ज्ञेयास्त्वाप्यंशाश्च ततः शृणु
कफः शोणितमूत्राणि मज्ञा शुक्लं तथैव च ६१
द्रव्यांशकमिति ज्ञेयं सर्वप्राणि च संस्थितम्
क्षुधानिद्रा च कृष्णा च आलस्यं मैथुनं तथा ६२
एते पञ्चगुणा प्रोक्ता तेजशा इति संस्थिताः
आस्ते शेते च गमनं प्रसाराणि निरोधनम् ६३
एते पञ्चगुणा प्रोक्ता वाय्वंशा सुप्रकीर्तिताः
कामक्रोधं च लोभं च भयो मोहसथैव च ६४
पञ्चैतेऽनुगुणा प्रोक्ता व्योमांशास्तु प्रकीर्तिताः
प्रोक्तं भूतगुणं चैवं गुणं तेषां तु वक्ष्यते ६५
शब्दस्पर्शं च रूपं च रसं गन्धं च पञ्चधा
आकाशस्य गुणं शब्दं वायोस्तु स्पर्शनं गुणम् ६६
तेजसस्तु गुणं रूपं रसमापगुणं स्मृतम्
पृथिव्यास्तु गुणं गन्धं भूमिकादीनि विन्यसेत् ६७
विषयं त्विति विख्यातं भूतानां गुणमुच्यते

शब्दादिविषयं पुरायं भूमौ तु विनिवर्द्धते ६८
चतुर्गुणाः प्रवर्धन्ते त्रिगुणास्त्वथ वह्निके
वायोश्च द्विगुणं प्रोक्तमाकाशस्यैकमेव तु ६९
विषयाणि तथोक्तानि बुद्धीन्द्रियाणि ततः शृणु
श्रोत्रत्वक्चक्षुजिह्वा च घ्राणं बुद्धीन्द्रियाणि च ७०
शब्दादिविषयाणां च साधनं ते प्रकीर्तितम्
बुद्धीन्द्रियाणामेतेषां देवभूतात्मकं शृणु ७१
श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यमधिभूतता
शिवहस्ताधिदैवं तु त्वगेवाध्यात्मकं विदुः ७२
स्पर्शनं चाधिभूतः स्याद् वायुस्तत्राधिदैवतम्
चक्षुरध्यात्ममित्युक्तं द्रष्टव्यमधिभूतता ७३
सूर्यस्तत्राधिदैवत्य जिह्वाचाध्यात्मकं विदुः
रसज्ञा त्वधिभूतं तु वरुणश्चाधिदेवता ७४
घ्राणमध्यात्ममित्युक्तं घ्रातव्यमधि भूतता
बृहस्पत्यधिदैवं च प्रातः शक्तिरिति स्मृतम् ७५
बुद्धीन्द्रियाणि चोक्तानि शृणु कर्मेन्द्रियाणि च
वागध्यात्मकमित्युक्तं वक्तव्यमधिभूतता ७६
सरस्वत्यधिदैवत्यं वाणिरध्यात्मकं ततः
दातव्यमधिभूतश्च शक्रस्तत्राधिदेवता ७७
पादमध्यात्मकं प्रोक्तं गमनं चाधि भूतता
शक्राधिदैवतं प्रोक्तं वायुरध्यात्मकं विदुः ७८
। । । मधिभूतः स्यात् मित्रस्तत्राधिदैवतम्
उपस्थोऽध्यात्ममित्युक्तमानन्दमधिभूतता ७९
प्राजापत्याधिदैवत्यं क्रियाशक्तिरिति स्मृता
कर्मेन्द्रियाणि चोक्तानि ततोऽन्तकरणं शृणु ८०
मनोहङ्कारबुद्धि च चित्तोऽन्तः करणं विदुः

मनोध्यात्ममिति प्रोक्तमन्तव्यमधिभूतता ८१
सोमाधि दैवमित्युक्तो हङ्कारोऽध्यात्मकं विदुः
अधिभूतमहंकारं रुद्रमूर्त्यधिदैवतम् ८२
बुद्धिरध्यात्ममित्युक्तं बोद्धव्यमधिभूतता
क्षेत्रज्ञस्याधिदैवं स्याच्चित्तमध्यात्मकं स्मृतम् ८३
चैतन्यमधिभूतं हि ईश्वरश्चाधिदैवतम्
मन्यते तं मनो ज्ञात्वा अहङ्कारमहंकृतम् ८४
बोद्ध्यत्वात् बुद्धिरेवं हि चिन्तत्वाच्चित्तमुच्यते
मनश्च द्विविधं प्रोक्तं चलाचलमिति स्मृतम् ८५
अहङ्कारं त्रिधाज्ञेयं भूतवैकारि तेजसम्
वक्ष्यते तु समासेन भूतसारसमुद्भवम् ८६
शब्दतन्मात्रमादौ तु गन्धतन्मात्रमर्थके
एतानि पञ्चमात्राणि भूतानां सृष्टिरुच्यते ८७
स्यात्तैजस अहंकारे इन्द्रियाणि समुद्भवम्
वैकारिकमहङ्कारे इन्द्रियाणि समुद्भवम् ८८
वैकारिकमहंकारे अधिदेवाः समुद्भवम्
बुद्धिरष्टविधा ज्ञेया धर्माधर्मादिरष्टधा ८९
चित्तमेकविधं ज्ञेयं तच्चान्तः करणं विदुः
चतुर्भिरन्तः करणैश्चतुर्विं शतिरुच्यते ९०
उपादानं तु तेषां वै चाव्यकमिति निन्दितम्
अव्यक्तस्य तु धर्मः स्यात् त्रिगुणं सम्प्रकीर्तितम् ९१
तामसं राजसं चैव सात्विकं च तृतीयकम्
तामसे यान्ति नरकं राजसे स्वर्गमुच्यते ९२
सात्विके मोक्षमित्युक्तं तस्मात् सात्विकमुच्यते
सात्विके सर्वकर्माणि एक चित्तस्तु सात्विकम् ९३
तस्मात् सर्वप्रयत्नेन सात्विकं गुणमाश्रये

पञ्चविंशति तत्वानि समासात् कीर्तितानि तु ९४
तेभ्य एकादशं तत्वं समासाच्छृणु साम्प्रतम्
पुंरागोनियती विद्याकलाकलस्तथैव च ९५
शुद्धविद्याशुद्धकला शुद्धमायां तथैव च
आत्मतत्वं च विद्यां च शिवतत्वमतः परम् ९६
एकादशानि तत्वानि शरीरे संस्थितानि तु
कञ्चुकत्रयमाविश्य शनैः कालेन वित्तमः ९७
आलिङ्ग्यते नियतिना आत्मवद्भाववर्तकः
प्रकृतिः पौरुषं यस्मान् तस्मात् पुरुष उच्यते ९८
बालार्कशतसाहस्र भागैकं तत्र चिद्विदुः
सञ्जिव इति विख्यातः संसारी चेति चोच्यते ९९
प्रधानादि विशेषान्तं व्यापं वै परिशक्तिना
कलाशक्तिरितिख्याता चानमुक्तैस्तु कारणा १००
धर्माधर्माधिसम्बन्धा दाणवं सहजं स्मृतम्
इत्येवमादि सम्बन्धाच्छरीरेषु व्यवस्थिताः १०१
सम्बन्धास्तस्य जीवस्य दुःखत्रयमिहोच्यते
आध्यात्ममधिभूतं च अधिदैविकमेव च १०२
त्रिविधं दुःखमाप्नोति तेषामाध्यात्मकं शृणु
आध्यात्मकं द्विधा प्रोक्ता शरीरं मानसं तथा १०३
गुल्मारशोऽतिसारं च ज्वरशूलाद्यनेकधा
नरमृगपिशाचैश्च गोपक्षीचोरराक्षसैः १०४
प्रोक्तं शरीरकं दुःखं मानसं शृणु सुव्रत
शोकासूयावमानेर्ष्या मासाध्यादिभिरेव च १०५
एवं मानसमाख्यातमाधिभौतिकमुच्यते
शीतोष्णवातवर्षैश्च विद्युदाशनिमारुते १०६
एतैर्भूतैस्तु जन्दुःखमाधिदैविकमुच्यते

गर्भजन्मजरा ज्ञानमृत्युर्नरकजं तथा १०७
प्रोक्तं दुःखत्रयं ह्येवमेषु स्थानेषु भुज्यते
ततोदराग्निना गर्भे मातृशीलेन बाध्यते १०८
गर्भात्कोटिगुणं दुःखं योनियन्त्रे प्रपीडनम्
एवमादीनिदुःखानि शरीरी भुज्यते क्रमात् १०९
जाग्रत्स्वप्नं सुषुप्तिश्च तुर्यावस्था ततः शृणु
इन्द्रियाणि गताबुद्धिः कृत्वा कर्माणय शेषतः ११०
करणी यानि सर्वाणि दृश्यन्ते जाग्रदेव तु
करणानि चेंद्रियाणि बध्वा वै वाश्रयं भवेत् १११
निद्रामाश्रयते बुद्धिर्मन्यते पूर्वकर्मकम्
एवं स्वप्नं विजानीयात्सुषिपिं च ततः शृणु ११२
करणानि गृहीत्वा तु बुद्धिश्चैतन्यमागता
तदाश्रये तु काले तु कर्माणय प्रतिबुद्ध्यति ११३
सुषिप्तिरिति विख्याता तुरीयं करणं विना
जाग्रो मुखगतो जीवस्वप्ने कर्णं समाश्रितः ११४
सुषुप्तौ हृदमाश्रित्य तुर्ये सर्वगत स्मृतः
एवं व्यवस्थितो देहे नाडयश्च तत शृणु ११५
नाभिमूलं तु हृन्नाल नाडयश्चक्रवत् तथा
तिर्यगूर्ध्वमधश्चैव व्याप्तिता तैस्तु सर्वतः ११६
चक्रवत्संस्थिता ह्येताः प्रधानश्चाष्टविंशतिः
तेषु प्रधानभूतास्तु इडादिदशनाडयः ११७
इडयाविमाशोषा पृथिवी भ्रापनी तथा
तेजोवती वायुवी च गमनीमर्दनी तथा ११८
रोदनीरक्तवागि च मृद्वंगी शृङ्गिणी तथा
शब्दा स्पर्शा च पूर्णा च सद्रूपारसधारिणी ११९
सर्वाङ्गेषु स्थिता ह्येता प्रधानाश्चाष्ट विंशतिः

तासु नाडीषु चान्तस्थाः प्राणादि दशवायवः १२०
प्राणापानस्तथाव्यान उदानश्च समानकः
नागकूर्माश्चक्रकरो देवदत्तो धनञ्जयः १२१
दशप्राणा इति प्रोक्ता वायवः समुदाहृताः
वायूनां तु नवानां च प्रभुः प्राणप्रकीर्तिताः १२२
निश्वासोछ्वासकासैश्च प्राणीनामुदरे स्थिताः
इन्द्र निलप्रतिकाशप्राणरूपसुकीर्तिताः १२३
नादसंयुक्तजीवान्तजीवमाश्रित्य नित्यशः
स्थानहृन्नाभिनासाग्रं पादाङ्गुष्ठान्तमाश्रितः १२४
अपानपृष्ठमाश्रित्य वामदक्षिणनिर्गमम्
प्राणस्य लक्षणं प्रोक्तमपानं च ततः शृणु १२५
अपानो जीवमाश्रित्य तद्वर्णं चैंद्रकोपवत्
स्थानं तु मेढ्रमूले तु गुदमूलं तु निर्गमम् १२६
नाभेरधस्तात् स्थानं तु मेढ्रमूले तु निर्गमम्
पुरीषोत् सर्गमात्रादि प्राणापानाश्च निर्गमम् १२७
प्राणापानोपहे नित्यं शरीराख्यं महारथम्
दीपान्तस्थ प्रभु प्राणोरक्षां कृत्वा महामनुम् १२८
व्यानं सकलमाश्रित्य स्पर्शादीनी प्रबोधकः
गोक्षीरसमवर्णं स्यात् स्थानं सर्वाङ्गसन्धिषु १२९
उदानच्छक्तिरोगाणामुद्भवं तत्र कारयेत्
विद्युत्पावकसङ्काशां तस्य वर्णं प्रकीर्तितम् १३०
स्थानं पार्श्वौ च कर्णौ च चक्षुषोर्घ्राणयोस्तथा
समानवायोर्वर्णं तु अतसी कुसुमप्रभम् १३१
स्कन्धे मूर्धनि जिह्वाश्च जंघयोर्गुल्भयोस्तथा
अन्नपानरसन्नित्वा चापादतलमस्तकम् १३२
अशेषानन्नपानादीन्वैश्विनराग्निसंयुतम्

तत्रा शयाख्य कुराडे तु हुतं तत्रैव कारयेत्  १३३
तत्र नागसुवर्णं  तु मार्तारडोदयसन्निभम्
हित्काञ्च रोमहर्षादिन् गेयभक्तिं च कारयेत्  १३४
उदयं च ललाटं च स्थानं नासादि चासनम्
कुन्दपुष्पसमाकारं कूर्मवायोः प्रकीर्तितम्  १३५
नेत्रपक्षौ तु सम्प्राप्य निमीलोन्मीलनं कुरु
कृकरस्य तु वर्णं  स्यात् भिन्नाञ्जनसमप्रभम्  १३६
क्षुधादि कुरुते नित्यं नासाग्रे तु व्यवस्थितम्
देवदत्तस्य वर्णं  स्याच्छुद्धस्फटिकसप्रभम्  १३७
मुखं पृष्ठं च पादं च पार्श्वं  चैव विशेषतः
उत्थाप्यशयनासीनं विजृम्भरामतः परम्  १३८
धनञ्जयस्य वर्णास्यां नीलाञ्जनसमप्रभम्
धनञ्जयस्थितो देहममृतस्यापि मुञ्चति  १३९
पश्चात्तु ब्राह्मणं कृत्वा शरीरं भिद्यते गतः
इत्येते दशवायूनां प्राणादीनां प्रचक्षते  १४०
इडादिनाडयस्तत्र शरीरे व्याप्रतस्तथा
नाडीमध्ये ततो वायुः सञ्चरेत् क्रमशस्तथा  १४१
कुराडल्याख्या महानाडी नाभिमध्ये प्रकीर्तिताः
अष्टवर्तुलमेवं तु कुराडलीनाडिसुप्तवत्  १४२
नाभेरूर्ध्वं  भवेत्पद्मं तटाकाब्जं तु पुष्पवत्
तस्य मध्ये स्थितो जीवः सूर्यकोटिसमप्रभः  १४३
तस्यान्तस्थं समाख्यातं सूर्यसोमाग्निकुराडलम्
तेषां मध्ये स्थितो देवः सूर्यायुतसमप्रभम्  १४४
वामपार्श्वे इडानाडी पिंगलादक्षनाडिका
सुषुम्ना मध्यमे चैव यावदङ्गुष्ठकान्तका  १४५
गान्धारी दक्षिणे नेत्रे हस्ति जिह्वा च वामके

पूषा वै दक्षिणे कर्णे वामकर्णे यशस्विनी १४६
अलं पुष्पं तु मेढ्रुन्तु कुहूश्चैव गुदे स्थिता
शखिनी नासिमध्ये तु दशनाडी ह्यवस्थिता १४७
अशेषानाडयः सर्वाश्चक्रवद्व्यावृतस्तनुम्
चक्रवद्वावृतो यस्मान् नाडीचक्रमिहोच्यते १४८
नाडीचक्रमिदं प्रोक्तं कालचक्रमथ शृणु
इति नाडीचक्रविधिपटलः प्रथमः १

अथ कालचक्रविधिपटलः

अथातः सम्प्रवक्ष्यामि कालचक्रस्यलक्षणम्
कालं च कुरुते यस्मात्कालमेवमुदाहृतम् १
प्राणीनां चैव देवानां विनाशोत्पत्तिकारणम्
अमूर्ति कालमाख्याता दृष्ट्वा दष्टं तु लक्षणम् २
त्रिविधं कालमाख्यातं शिवेन परिभाषितम्
सृष्टिकालं स्थितिकालं संहारं चेति कीर्तितम् ३
शिवाद्यवनिपर्यन्तं सृष्टिरेवमुदाहृतम्
या स्थितिः सर्वभूतानां शिवाद्यानन्तकस्थितम् ४
पृथिव्यादिशिवान्ताये लयं गच्छेत् परापरम्
तदा संहारमेवोक्तं त्रिविधं कालनिर्णयम् ५
त्रिषु कालेषु वर्तन्ते तीतानां गमं ततः
वर्तमानाख्यकं कालमुच्यते वै पृथक् पृथक् ६
यदा शेषं समाप्तं तु तदातीतमिति स्मृतम्
सापेक्षकं च यत्काले तदा नागतमुच्यते ७
असमाप्तं यदारब्धं वर्तमानमुदाहृतम्
तत्कालमवबोद्धव्यं देवादीनामुदाहृतम् ८
युगपत्सृष्टि संहारौ स्थितिकाले निवर्तते

केचित् कालात् सृजन्त्येव केचित् कालात् भ्रमन्ति च ९
मनुष्य पितृदेवानां कालसंख्यान्ततः शृणु
कालं च द्विविधं प्रोक्तं स्थूलं सूक्ष्मं तथैव च १०
मौक्तिकं स्थूलमाख्यातं योगिनां सूक्ष्ममेव च
स्थूलं च द्विविधं वत्स चन्द्रादित्यस्य चारणम् ११
चंद्रस्य वर्तनाकालो मनुष्याणां प्रकीर्तितम्
सूर्यस्य वर्तनाकालो देवानां तु प्रकीर्तितम् १२
कालचक्रे तु वर्तन्ते भास्करादि ग्रहास्तथा
द्वादशारयुते चक्रे मेषाद्याराशयो रवेः १३
पट्टिकायां च नाभौ च मध्ये वायुः प्रकीर्तिताः
मेरुमूर्ध्निगतं चक्रं ब्रह्माण्डे संव्यवस्थितम् १४
कुलालचक्रवन्नित्यं भ्रामस्तत्रैव देवताः
मेरुं प्रदक्षिणं कृत्वा नक्षत्राणि ग्रहाणि च १५
सूर्योदयास्तमायान्तमहरेव विदुर्बुधाः
अस्तमयादुदयान्तं निशा चैवमुदाहृतम् १६
अहर्निशिद्वयोपेतमहोरात्रमिति स्मृतम्
दिवाप्रातरहं चैव प्रोक्तः पर्यायवाचकाः १७
शर्वरी रजनी सायं निशिनक्तं तु रात्रिकम्
हायादि देवतानां तु पितृणां प्रातरादिकम् १८
मनुष्याणामहोरात्रमितिशास्त्रेशु निश्चितम्
मनुष्याणां हितार्थाय सर्वसम्पत्कराय च १९
पूर्वाह्ने चैव मध्याह्ने चापराह्नेर्धयामके
तस्मात् सर्वप्रयत्नेन चतुःसन्धिषु पूजयेत् २०
यामं प्रतिविशेषेण पूजयेदष्टसन्धिषु
यामार्धं सन्धिरित्युक्तमहोरात्रं तु पूजयेत् २१
मनुष्याणां दिनं प्रोक्तं पञ्चपञ्चदशाहकः

पक्षद्वयिशुक्लपक्षः कृष्णपक्षस्तथैव च २२
एकराशिगतौ यत्र चन्द्रादित्यौ सहैव तु
तत्रामावास्याचेत्युक्तं तत्पक्षं शुक्लमुच्यते २३
सप्तराशिगतं चंद्रं तत्र पूर्णकलामतः
पौर्णमासी ततः प्रोक्तः कृष्णः पञ्चदशाहकः २४
पक्षद्वयं तथा मासो मासाद्द्वादशवत्सरम्
वर्षं चैवाब्द पर्याय वाचकाः परिकीर्तिताः २५
शताब्दं तु मनुष्याणामायुष्यं समुदीरितम्
मृगाणां सर्वजातीनां शताब्दायुः प्रकीर्तितम् २६
नराणां चैव चायुष्यं शतं चैव प्रकीर्तितम्
एवमुक्तं मनुष्याणां पितृकालं ततः शृणु २७
मनुष्याणामहोरात्रं पितृणां घटिका भवेत्
त्रिंशद्घटिमहोरात्रं शुक्लपक्षं तु वासरम् २८
निशिकृष्णं विजानीयात् पितृणां तदहर्न्निशम्
पूर्वसन्धिरमावास्या मध्याह्नं चाष्टमी भवेत् २९
पौर्णमास्य पराह्णं तु अष्टमी चार्धयामकम्
दिवसैर्द्वादशैर्मासं मासैर्द्वादशवत्सरम् ३०
अमावास्यां तु या पूजा पितृणां तु प्रसादद
पितृकालमिदं प्रोक्तं मनुष्याणां हिताय वै ३१
देवानां वक्ष्यते कालस्तुट्यादि प्रलयान्तकम्
तुटिलवनिमेषाश्च काष्ठा चैव कला तथा ३२
क्षणं मुहूर्तं घटिका सन्धिर्यामस्त्वहर्निशि
दिवसः पक्षमासौ च ऋतुस्त्वयनवत्सराः ३३
युगमन्वन्तरौ कल्पं महाकल्पप्रलयस्तथा
तुट्यादिप्रलयान्तं च लक्षणं शृणु साम्प्रतम् ३४
स्वस्थान राक्षिकोन्मील उन्मीलं तु निमेषकम्

निमेषस्य चतुर्भागं तुटीरेवमुदाहृतम् ३५
तुटिद्वयलवं विद्धि लवद्वयनिमेषकम्
निमिषो दश पञ्चैव काष्ठाः सा त्रिंशतिः कला ३६
कलार्धस्तु क्षणं प्रोक्तं क्षणद्वयं मुहूर्तकम्
तदर्द्धं घटिका प्रोक्ता सर्वकार्यं तया कृतम् ३७
सत्रिपादत्रिघटिका सन्धिरित्युच्यते बुधैः
सन्धिद्वयं तथायाम चतुर्यामं दिवा स्मृतम् ३८
तदहर्मात्र विज्ञेयमहोरात्रं दिनं स्मृतम्
दिनपञ्चदशः पक्षो मासः पक्षद्वयं तथा ३९
पूर्वपक्षोपरं चैव तौ पक्षद्वयमुच्यते
मासद्वयं ऋतुः प्रोक्तमयनं वै ऋतुस्त्रयम् ४०
अयनद्वयमब्दं हि अहोरात्रं तु दैविकम्
देवानां तु दिवाप्रोक्तं मकरादि ऋतुस्त्रयम् ४१
ऋतुस्त्रयं कुलीरादि निशि चैवमुदाहृतम्
संक्रान्ति विषुवे चैव अयने च प्रकीर्तिताः ४२
अन्यराशि गते भानौ राशिमध्ये तु संक्रमः
तुलामेषगते सूर्ये विषुवे तत्प्रकीर्तितौ ४३
कुलीरे मकरे प्राप्ते दक्षिणं चोत्तरायणम्
उत्तरायणसंक्रान्तिः पूर्वाह्नमिति कीर्तितम् ४४
चैत्रे विषु च मध्याह्ने अपराह्ने तु दक्षिणे
अश्वयुक् विषुवं प्रोक्तं देवानामर्धरात्रिकम् ४५
चतुः सन्धिषु तस्माद्द्वे देवे शेषं प्रपूजयेत्
नित्यसन्धिर्मनुष्याणां पितॄणामाससन्धिकम् ४६
अब्दसन्धिषु देवाश्च पूजयेत्तु यथा विधि
इत्थं भूतमहोरात्रं देवानां तु प्रकीर्तितम् ४७
प्रोक्तमब्द क्रमं ह्येवं युगमानं तु वक्ष्यते

अग्डजाति युगाद्यैव केचित् शास्त्रे प्रकीर्तिताः ४८
चतुर्युगं तु शास्त्रे तु शिवेन परिभाषितम्
तृतयुगं तु त्रेता च द्वापरं तु कलिस्तथा ४९
कृतश्चतुः सहस्राब्दं सन्धिरष्टशतं भवेत्
सन्ध्या शतं तथा ज्ञेयस्त्रेतार्ध पादहीनका ५०
चतुः शतः सहस्रो वा द्वापरश्चेति कीर्तिताः
कलियुगं च ऊर्धस्थो वर्धते तु पुनः पुनः ५१
एतैर्द्वादशसाहस्रैरब्दैरैव चतुर्युगाः
सप्तत्येकसमावर्त्या मन्वन्तरमिहोच्यते ५२
अशीति सहस्रैर्वर्षैः पञ्चाशद्द्विसहस्रकैः
दिव्यसंवत्सरेणैव ज्ञेयमन्वन्तरं तथा ५३
स्वायम्भुवमनुः पूर्वं स्वारोचिषमतः परम्
उत्तमं रैवतं चैव तापसं चक्षुषं तथा ५४
वैवस्वतं च सावर्णमेरु सावर्णमेव च
दक्ष सावर्णमेवं हि ब्रह्म सावर्णमेव च ५५
रुद्र सावर्णमित्युक्तं रौल्यं भौत्यं चतुर्दश
इत्येवन्तवसं क्षेपाद्यनवः परिकीर्तिताः ५६
नाभिकल्पं तु तत्कालं ब्रह्मणो यदि भावयेत्
पञ्चैव कालमेवं च कल्पं ब्रह्मादि वा भवेत् ५७
कल्पमेवं समाख्यातं महाकल्पं ततः शृणु
त्रयस्त्रिंशच्च देवाद्यास्त्रिशतं त्रिसहस्रकम् ५८
देवानां लयमित्युक्तं तद्रात्रौ तु प्रकल्पयेत्
ब्रह्मणास्तदहोरात्रं तदा चेन्द्रालयं भवेत् ५९
शतत्रयं षष्टिदिनं ब्रह्मवर्षमुदाहृतम्
षष्टित्रिंशच्च चक्राणां लयं तत्र पुनः पुनः ६०
तेन वत्सरमानेन शताब्दं ब्रह्मणो लयम्

यावद्ब्रह्मलयं तावद्विष्णोस्तु तदहर्निशि  ६१
ब्रह्मणा त्रिशतं षष्टि लयं तत्र पुनः पुनः
तेन मानेन बोद्धव्या शताब्दमीश्वरस्य तु  ६२
ईश्वरस्तु लयं यत्तु निमेषं हि सदाशिवे
ततो वृद्ध्या शतं वर्षात् सदाशिवलयं स्मृतम्  ६३
बिन्दोर्नादस्य तद्वंशात् लयं तत्रैव चोच्यते
नादमूर्तिलयं यावच्छक्ताच्छक्तेर्दिनं तथा  ६४
दिनवृद्ध्या शतं कान्त तावच्छक्ति स्थितः सदा
यदा शक्तेर्लयं विद्धि यावत्परदिनं तु यत्  ६५
तत्सङ्ख्यानि शताब्दं तु परस्यैव लयं भवेत्
प्रथमं शक्तिकं शान्तं शिवः पर्याय वाचकः  ६६
परापरस्य तं ज्ञातं विनाशोत्पत्तिकारणम्
देवानां कालमित्युक्तं तत्वानां कालमुच्यते  ६७
पृथिव्यादि शिवान्तं च सत्वकालं प्रकीर्तितम्
ईश्वरस्य लयं यावदात्मनस्तुलयं भवेत्  ६८
सदाशिवलयं यावन्नादान्तं लयमेव च
ततः शक्तेर्लयं यावल्लयं गच्छेच्छिवान्तकम्  ६९
तत्वानां लयमेवोक्तं सूक्ष्मकालं ततः शृणु
श्वासैस्तु त्रुटिभिः प्राणो घटिका प्राणषट्कके  ७०
अहोरात्रं ततः षष्टि घटिकादिर्विशेषतः
पूर्ववद्दिनवृद्ध्या तु पक्षादीनि विवर्धयेत्  ७१
सूक्ष्मकालेन योगेन देव ब्रह्मादिकालयः
ज्ञानिनां योगिनां चैव सूक्ष्मकालं प्रकीर्तितम्  ७२
कालचक्रमिदं प्रोक्तमाधाराधेयकं शृणु

इति कालचक्रविधिपटलो द्वितीयः  २

## अथ आधाराधेयविधिपटलः

अथातः सम्प्रवक्ष्यामि आधाराधेयलक्षणम्
आधारं स्थानमित्युक्तमाधेयमधिदैवतम् १
आधाराधेयसम्बन्धाद्योगमित्यभिधीयते
योगं बहुविधं वत्स आधाराणां बहुत्वतः २
योगिनां योगमित्युक्तं ज्ञानिनां ज्ञानमेव च
वक्ष्येऽहमधुना योगं संक्षेपान्नतु विस्तरात् ३
योगिनां साधकं पूर्वं मच्छृणुष्व हि साधके
प्रथमं चासनं चैव द्वितीयं योगपट्टिका ४
तृतीयमक्षमाला च वेणुदण्डं चतुर्थकम्
कमण्डलु विजानीयात् पञ्चमं तु विशेषतः ५
तेषां तु लक्षणं वक्ष्ये चासनं कूर्मवत्कृतम्
खादिरोदेवदारू च मधुको बिल्व एव च ६
अथवा याज्ञिकै वृक्षैः कृत्वा कूर्मासनं तथा
पादोनं वा तदर्द्धं वा त्रिविधं त्वासनं तथा ७
दर्पणोदरसङ्काशमधस्तादवदं तथा
आसनं त्वेवमाख्यातं योगाभ्यासे विनायक ८
व्याघ्राजीनं तु प्रथमा कृष्णाजिनं द्वितीयकाः
अथवा तन्तुना कार्या त्रिविधा योगपट्टिका ९
विस्तारं त्र्यङ्गुलं प्रोक्तं नमानमुपवीतवत्
जपमाला शिरोमाला हृंमाला बाहुमालका १०
कर्णपृष्ठात्तु नाभ्यन्ता उरोमाला इति स्मृताः
शिरोमाला तु तन्नाहा भुजमाला भुजासमा ११
जपमालां समानेन संख्यामात्रं शृणुष्व हि
पञ्चविंशति रुद्राक्षैर्मोक्षार्थिनाज्जपं स्मृतम् १२
षड्विंशति शिवार्थं च ज्ञानार्थं शत्रुनाशनम्

सप्तविंशति इत्यर्थं पुष्ट्यर्थमष्टविंशतिः १३
त्रिंशज्जयार्थिनां कार्यं दशपञ्चाभिचारकः
जपमाला समाख्याता जपमाला विधिं शृणु १४
प्रणवं सर्वमन्त्रेषु सर्वमुच्चार्यते यतः
प्रणवं सम्प्रवक्ष्यामि संक्षेपान्न तु विस्तरात् १५
अकारं च उकारं च मकारं बिन्दुरूपकम्
अकारं ब्रह्मदैवत्यमुकारं विष्णुदैवतम् १६
मकारं रुद्रदैवत्यं बिन्दोरीश्वर एव हि
नादं सदाशिवं प्रोक्तमित्येते अधिदेवताः १७
अकारं तु हृदिस्थानं उकारं कर्णदेशकम्
तालुमध्यं मकारं स्यात् बिन्दोश्चैव ललाटकम् १८
तस्योपरि च नादस्य स्थानं ह्येवं प्रकीर्तितम्
अकारादि त्रयोवर्णास्त्वनुस्वारविसर्गकौ १९
पञ्चवर्णाः प्रशस्यन्ते अकाराक्षर सम्भवाः
। । । । । । । । उकाराद्यापि सम्भवा २०
कादिभामक्षिकारेता यकारान्यस्तु बिन्दुके
जाताना देशकारान्यास्त्वेते पञ्चाशति स्मृताः २१
प्रणवं सर्ववर्णाख्यं सर्वदेवमयं विदुः
ऋषिः सनत्कुमारस्तु ॐकारः शुक्लवर्णकः २२
गायत्रीच्छन्द इत्युक्तं तस्य वै शिवतत्वकः
ओमित्येकाक्षरं । । । । । । । । वा हिनाम् २३
प्रणवं तु समास्योक्ता स्मृतपञ्चाक्षरं शृणु
नमः शिवाय पञ्चार्णमेतत् पञ्चाक्षरं स्मृतम् २४
वाचिकायस्तु विज्ञेयस्तद्वाच्यस्य शिवः स्मृतः
जपं शक्तिप्रदंशस्तं मल्लयो मुक्तिरिष्यते २५
ऋषिच्छन्दो वर्णतत्वा देवतास्तु शृणु क्रमात्

काश्यपः कौशिकश्चैव भारद्वाजस्तु गौतमः २६
आत्रेयस्तु न कारादि मुनयः क्रमशस्तथा
अनुष्टुप् त्रिष्टुप् ब्रहति जगत्यति जगत्यपि २७
च्छन्दांसि हि समाख्याता वर्णाद्यैश्चक्रमाच्छृणु
रक्तं कृष्णं तथा श्यामं पीतं स्फटिकसन्निभम् २८
पृथिव्यादीनि तत्वानि तेषां तत्वं प्रकीर्तितम्
सद्यादि पञ्चवक्त्राणि तेषां देवाः प्रकीर्तिताः २९
प्रणवेन समायुक्तं जपकाले तथोच्यते
तदा षडक्षरं प्रोक्तं स्त्रीशूद्रादैस्तु वर्जितम् ३०
जपं चतुर्विधं प्रोक्तं सर्वेषां जपकांक्षिणाम्
मानसं चैव कण्ठेष्यमुपांशु व्यक्तमेव च ३१
व्यक्तं दशगुणोपांशुस्तस्मात् कण्ठेष्यकं शतम्
सहस्त्रं मानसं तस्मादङ्गुल्यादि जपं शृणु ३२
अङ्गुल्या जपसंख्या तु तुल्या एकफलं तथा
पर्वणाष्टगुणं प्रोक्तं दीपे शतगुणाधिकम् ३३
शतसङ्ख्या कुशग्रन्थी प्रवालैस्तु सहस्त्रकम्
मणिभिर्दशसाहस्त्रं मौक्तिकैर्ल्लक्षमुच्यते ३४
पद्माक्षैः कोटिगुणितं रुद्राक्षैस्तु न विद्यते
रुद्राक्षैस्तु ततोत्पत्तिं शृणुत्वं वक्ष्यतेऽधुना ३५
दिव्यवर्षसहस्त्रं तु चक्षुरुन्मीलितं मया
मुञ्चन्ति मम नेत्राणि श्रितरुद्राक्षमुच्यते ३६
एकवक्त्रं शिवः साक्षादनन्तं धारणे फलम्
सन्धार्यमृयते यस्तु सयाति परमाङ्गतिम् ३७
द्विवक्त्रं शक्तिरित्युक्तं त्रिवक्त्रं नादमेव च
चतुर्वक्त्रं तु बिन्दु स्यात् पञ्चवक्त्रं सदाशिवम् ३८
षड्वक्त्रमीश्वरं प्रोक्तं रुद्रः सप्तमुखं स्मृतम्

अष्टवक्त्रं स्मृतो विष्णुर्नववक्त्रं चतुर्मुखम् ३९
नववक्त्रैकवक्त्रान्तं फलं शतगुणोत्तरम्
हस्ते कर्णे शिखे कण्ठे सन्धार्यं सहभस्मना ४०
सर्वपापात्प्रमुच्यन्ते शिवसायुज्यमाप्नुयात्
दर्शनं पापनाशं तु स्पर्शनं सर्वसिद्धिदम् ४१
सर्वाङ्गधारणात्पुण्यं रुद्राक्षं धारयेत् सदा
प्रयाणकाले रुद्राक्षं भक्षयित्वा मृयन्ति ये ४२
ते रुद्र पदमाप्नोति पुनर्जन्म न विद्यते
तस्मात्सर्वप्रयत्नेन जप्यं रुद्राक्षकैः सदा ४३
जपकालं च देशं च वक्ष्यते तु समासतः
पूर्वाह्णे चैव मध्याह्णे चापराह्णेर्धरात्रिके ४४
चतुष्कालं त्रिकालं वा तद्देशं तु ततः शृणु
नदीतटाकतीरे वा गोष्ठे देवालयेऽपि वा ४५
वने वाथ गिरौ देशे पुण्यस्थाने ग्रहे जपेत्
देशमेवं समाख्यातं जपसंख्यां ततः शृणु ४६
सहस्रं वा तदर्धं वा तदर्धं वा शताष्टकम्
जपेन् नित्यं सदायोगी सर्वपापविनाशकृत् ४७
सयाति जपमात्रेण शिवलोकमथाक्षयम्
जपसंख्या विधिप्रोक्तो वेणुदण्डविधिं शृणु ४८
विप्राणां तु शिरोत्सेधं क्षत्रियाणां ललाटके
वैश्यानां नासिकोत्सेधं शूद्रादीनां तु वर्जयेत् ४९
वेणुदण्डमृजुं स्निग्धं वक्रकोटरवर्जितम्
दण्डस्यैव विधिः प्रोक्ता कमण्डलुविधिं शृणु ५०
पूरितं चाढकैः श्रेष्ठं मध्यं त्रिप्रस्थपूरितम्
द्विप्रस्थपूर्णमधमं मानमेवं कमण्डलोः ५१
सौवर्णं रजतं वापि ताम्रं वा मृण्मयं तु वा

यदुक्तं शिल्पशास्त्रेषु तत्तदुक्ता तु कारयेत् ५२
शैवाना साधनं प्रोक्तं पञ्चधा समुदाहृतम्
योगाष्टकांगौ वक्ष्यामि शृणुष्वेकाग्र मानसः ५३
यमनियमासनं च प्राणायामं ततः परम्
प्रत्याहारं च ध्यानं च धारणा च समाधिकम् ५४
अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम्
अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिग्रहम् ५५
यमं तु पञ्चधा प्रोक्तं नियं च ततः शृणु
शौचसन्तोषकात्तञ्च तपःस्वध्यायमेव च ५६
ईश्वर प्रणिधानं च नियमं पञ्चधा स्मृतम्
गोमुखं स्वस्तिकं चैव पद्मं चैवार्धचन्द्रकम् ५७
वीरयोगासनं चैव षड्विधश्चासनं स्मृतम्
वामजानूपनिन्यस्य दक्षिणञ्जानुमण्डलम् ५८
द्वयोः पादतले चैव न्यसेद्द्वौ पृष्ठपार्श्वयोः
एवं कृत्वा तु सुस्निग्धं गोमुखी लक्षणान्वितम् ५९
ऊरूपार्श्वे तलौ न्यस्त्वा जंघामघ्नन्तु स्वस्तिकम्
ऊरूपरितले न्यस्त्वा पद्मासनमिहोच्यते ६०
गुल्फत्रयं समं कृत्वा तले गुह्ये च विन्यसेत्
अर्द्धचन्द्रं समाख्यातं वीरासनं ततः शृणु ६१
द्विभुजं पतितं वामपादं दक्षिणतोपरि
स्थिरं वीरासनं प्रोक्तं योगासनं ततः शृणु ६२
शरीरं जानुसम्बन्धं योगपट्टिकया वृतम्
कूर्परौ चैव विन्यस्तं योगासनमिहोच्यते ६३
कृत्वा चैवैकमेतेषां ततो योगं समाचरेत्
योगाभ्यासस्य पूर्वे तु प्राणायामत्रयं कुरु ६४
रेचकं पूरकं चैव कुम्भकं योगमभ्यसेत्

योगाभ्यासस्य पूर्वे तु प्राणायामत्रयं कुरु ६५
रेचकं पूरकं चैव कुम्भकं च द्वितीयकम्
रेचकं रविबिम्बं स्यात् पूरकं चन्द्रमण्डलम् ६६
आग्नेयं कुम्भकं ज्ञेयं सकायोद्ध्यान पूजयेत्
रेचनाद्रेचकं प्रोक्तं पूरणात्पूरकं ततः ६७
कुम्भकं तु निरोधेन प्रणवेनाभ्यसेत्त्रयम्
रेचकाद्द्वादशं मात्रं तन्मात्रं पूरकं स्मृतम् ६८
कुम्भकं द्वादशं मात्रमिह शास्त्रे तु निश्चितम्
रेचकं ब्रह्मदैवत्यं पूरकं विष्णुदैवतम् ६९
कुम्भकं रुद्रदैवत्यमधि देवास्त्रयं स्मृतम्
रेचकं पूरकं चैव योगिनां तु अहर्निशि ७०
सूतकं प्रोतकं मुक्त्वा कुम्भकेन तु पूरयेत्
प्राणायामक्रमं प्रोक्तं प्रत्याहारं ततः शृणु ७१
इन्द्रियाणीन्द्रियार्थेषु प्रतिस्थाने व्यवस्थितः
यावत्तावत्स्थितीभूतः प्रत्याहारः स उच्यते ७२
आधारेषु च संकल्प्य यथासनं स्वरूपकम्
ध्यानमेवं विजानीयात् सर्वदुःखनिवारणम् ७३
आधारलक्षणं वक्ष्ये संक्षेपान्नतु विस्तरात्
नाभेस्तु चतुरङ्गुल्यमधस्तादग्निमण्डलम् ७४
कदम्बपुष्पवज्जुष्टं पत्रं जुष्टं त्रिकोणकम्
मूलाधारमधः प्रोक्तं द्वितीयं नाभिमूलके ७५
भुजङ्गवलयाकारमष्टवर्तुलमेव च
कुण्डलाख्या महानाडी भानुमण्डलमुच्यते ७६
नाभेरूर्ध्वं तु यत्पद्मं चन्द्रमण्डलमुच्यते
हृदये कर्णमूले तु तालुमूले ललाटके ७७
मूर्ध्निस्थाने तु संकल्प्य ध्यायेत्पद्मकपुष्पवत्

हृत्पद्मलक्षणं वक्ष्ये यथा वदनुपूर्वशः ७८
नाभौ तन्नालमूलं तु ऊर्ध्वनालमधोमुखम्
कदलीपुष्पवत् पद्ममष्टपत्रं सकर्णिकम् ७९
इह शास्त्रेन वाधारं हृत्पद्मेन समायुतम्
आधारलक्षणं प्रोक्तमाधेयं च ततः शृणु ८०
आधेयं यत्प्रयुक्तं च समाधीत्येवमिश्रितम्
इडा च पिङ्गला चैव वीणादण्डस्य पार्श्वयोः ८१
सुषुम्ना मध्यगा तत्र मध्ये तु सुषिरं तथा
जीवप्राणसमायुक्तास्तेषु मध्येषु सञ्चरेत् ८२
सञ्चरन्निह तत्काले आधारेषु व्यवस्थितम्
संयुक्ते योगमाख्यातं योगी खगं समाश्रयेत् ८३
मूलाधारे ततस्त्वग्निसंयुक्ते योगमभ्यसेत्
योगाभ्यासेन तद्योगी अग्निलोकं तु संस्पृशेत् ८४
तदूर्ध्वे भास्करं ध्यात्वा रविलोकमवाप्नुयात्
एवं ध्यात्वा तदूर्ध्वे तु चंद्रलोकं स गच्छति ८५
ब्रह्माणं हृदये स्मृत्वा ब्रह्मलोकमवाप्नुयात्
विष्णुं ध्यात्वा तदूर्ध्वे तु कण्ठमूले व्यवस्थितम् ८६
पुरुषं व्यापयेद्योगी योगाभ्यासेन तद्गुणैः
तालुमूले स्मरेद्रुद्रं रुद्रलोकपदेच्छया ८७
पुरुषोपरिवेशान्तं व्यापकं स्वेन तेजसा
ललाटे ईश्वरं ध्यात्वा तल्लोकं तदवाप्नुयात् ८८
सदाशिवं तु शिरसि ध्यात्वा तत्रैव भुज्यते
हृत्पद्ममध्यं गत्वा तु बिन्दुनादं च शक्ति च ८९
चतुरङ्गुलमात्रेण दीपाकारं विचिन्तयेत्
चतुस्थानेषु सम्पूज्य तत्तत्स्थान स्वरूपकैः ९०
शिरोपरिन्यसेत् ब्रह्ममव्ययं निष्कलान्वितम्

तस्माद्योगसमायुक्तो योगी योगफलं लभेत् ९१
अणुमात्रं लभेद्यस्मादणिमेत्यभिधीयते
सहस्रैर्वा यथा गत्वा मूलवर्णप्रदेशकम् ९२
स्वेच्छया लभते यस्मात् तस्मात् सा लघिमा स्मृता
भूमौ मनोजपं कृत्वा पूज्यते शास्त्रवादिभिः ९३
सर्वत्र पूजितो यस्मात्तस्मात्सा महिमा भवेत्
सर्वद्रव्याणि सम्प्राप्तिः प्राप्तिरेषामुदाहृता ९४
प्रकाम्येषु शरीरेषु प्रकाशं तु प्रवेशिता
सूर्यादिष्वनवाप्तत्वादीशत्वं समुदाहृतम् ९५
यदीशत्वं तु तत्रैव तदीशित्वं विधीयते
शिवसायुज्य सामर्थ्यात्तच्छिवत्वमिति स्मृतम् ९६
अणिमाद्यष्ट सिद्धिं च लभेद्योगी विशेषतः
सालोक्यादि चतुर्थश्च प्राप्यते योगी लक्षणम् ९७
सालोक्यं चैव सामीप्यं सा रूप्यं सा युज्यकं तथा
ध्यानलोकं तु सम्प्राप्य सा लोक्यन्तद्विधीयते ९८
तद्देवस्यं समीपत्वात् सामीप्यमिति चोच्यते
तत्तद्रूपं तु लब्ध्वा तत्सारूप्यमिति च स्मृतम् ९९
शिवे संयोजितं रूपं सा युज्यमिति कत्थ्यते
योगं समासात् सम्प्रोक्तं ज्ञानपादं ततः शृणु १००
तद्योगपादं क्रमशः प्रमाणैर्यत्प्रोक्तमत्रैव समासतस्तत्
नाडी तु चक्रं त्वथ कालचक्रमाधारयुक्तं पटलत्रयेण १०१

इति आधाराधेयविधिपटलस्तृतीयः ३

इति सुप्रभेदे योगपादः समाप्तः

शिवमयम्

# सुप्रभेदम्

## अथ ज्ञानपादे शिवसृष्टिविधिपटलः

अथातः सम्प्रवक्ष्यामि ज्ञानपादं समासतः
तस्यादौ शिवसृष्टिं च शृणुष्वेकाग्रमानसः १
ज्ञानं प्रवर्तते वत्सभ्रान्ति निर्नाशनाय च
अध्वाश्रेणि विनाशाय शिवव्यक्तिकराय च २
अन्धकारवदज्ञानं ज्ञानं दीपवदुच्यते
ज्ञेयं भास्करवत्प्रोक्तं पश्चाद्ज्ञानं विनश्यति ३
पाशजालानि विच्छेद्य तीष्णादिज्ञानमुच्यते
पशुपाशपतित्वं च ज्ञानेनाश्रयते बुधः ४
ज्ञानेनैव तु कैवल्यप्राप्तिस्तत्र न संशयः
शिवाद्यवनिपर्यन्तं लक्षणं शृणु साम्प्रतम् ५
योगिनामुपकाराय मोक्षार्थं भुक्तये तथा
सृष्ट्यर्थं सर्वजन्तूनां तदा सृष्टिद्वयं स्मृतम् ६
शिवसृष्टिस्तथा पूर्वा पशुसृष्टिर्द्वितीयका
शुद्धदेवसमायुक्ता शिवसृष्टिरुदीरिता ७
मलैरावृत्य शुद्धात्मा पशुसृष्टिः प्रकीर्तिता
चराचरादि भेदैस्तु क्रीडते परमेश्वरम् ८
शिवसृष्टिं समासेन शृणु सर्वान् गजानन
शिवं परात्परं ब्रह्मवत् प्रमेयमिति स्मृतम् ९
मलत्वां निन्दितं ज्ञेयममलत्वादनिन्दितम्
अनौपम्य समादृश्यं दक्षिणत्वं यथाव्ययम् १०
व्योमातीतात्परं सूक्ष्मं नित्यं कारणशून्यतः
व्यापीत्वात् सर्वगं प्रोक्तं स्वामिभावात् प्रभुसृतम् ११
वाङ्मनोव्यतिरिक्तत्वात् प्रमाणातीतगोचरम्
प्रत्यक्षादिप्रमाणानि शृणुवत्स समाहितः १२

प्रत्यक्षमनुमानं च शब्दं चोपमया सह
अर्थापत्तिरभावश्च षट्प्रमाणमिति स्मृतम्  १३
अक्षादिकरणैर्दृश्यं प्रत्यक्षं तदिहोच्यते
लिङ्गालिङ्गादि विज्ञानमनुमानमिति स्मृतम्  १४
आप्तोक्तिवचनैर्गम्यं शब्दमेवमुदाहृतम्
तत्सादृश्याद्यथा गम्या ह्युपमा चेति कीर्तिता  १५
दिवाभोजनमस्तीति रात्रौ नास्तीति गम्यते
अर्थेनैवार्थ विज्ञेया चार्थापत्तिरिति स्मृतम्  १६
भ्रान्ति ज्ञाने ह्यभावे तु स्वयज्ञानं तु गम्यते
भ्रान्त्या भावे स्वयं ज्ञानमभावमिति कीर्तितम्  १७
एवमादिप्रमाणैस्तु दुर्लक्ष्यं तच्छिवं स्मृतम्
शिवतत्वमिदं प्रोक्तं तत्वा नामखिलात्मनाम्  १८
सृष्ट्यर्थं  लोकरक्षार्थं  लोकस्योत्पत्तिकारणम्
साधकानां हितार्थाय स्वेच्छया गृह्णते तनुम्  १९
तच्छरीरं त्रिधा ज्ञेयं निष्कलं सकलनिष्कलम्
सकलं च तथा ज्ञेयं त्रिविधं तु विशेषतः  २०
निष्कलं तु चतुर्भेदं सकलं च तथा भवेत्
सकलं निष्कलं चैव नवधा कीर्तिताः क्रमात्  २१
शिवतत्वात् सहस्रांशाच्छां निर्नाम्ना समुद्भवा
शान्तिश्चेति पराप्राहुस्तस्यापर्याय वाचकः  २२
तस्माच्चैव सहस्रांशाच्छक्तिनामा समुद्भवा
शक्तिश्चैव तु विद्या च पर्यायस्तदुदाहृतः  २३
तस्माच्चैव सहस्रांशान्नादमूर्तिसमुद्भवः
नादस्तस्य प्रतिष्ठा च पर्यायस्त्विति कीर्तिताः  २४
तस्माद् दशैकभागेन बिन्दुतत्वसमुद्भवः
बिन्दुश्चैव निवृत्तिश्च पर्यायस्तस्य वाचकौ  २५

परं भावं समारभ्य सर्वज्ञत्वादिभिर्गुणैः
अव्यक्तानि च रूपाणि निर्ल्लक्ष्यानि क्रियास्तथा २६
चतुर्था निष्कलं ह्येवं शिवतत्वं समुच्यते
ध्यानपूजाविहीनस्तु निष्कलत्वं द्वितीयका २७
इत्येवं निष्कलं प्रोक्तं परं भावमिति स्मृतम्
तस्माद्दशैकभागेन सादाख्यं तत्वमुद्भवम् २८
लिङ्गपीठप्रकारेण सादाख्यं तत्वलक्षणम्
लिङ्गे शम्भुः समुद्भूतो नाम्ना सदाशिवेन तु २९
पीठे शक्तिः समुद्भूतो नाम्ना चैव मनोन्मनी
लिङ्गे च पीठिकायां च शक्तिशम्भू समुद्भवौ ३०
लिङ्गं तु पुंस्त्वमेवं स्यात् तत्पीठं स्त्रीत्वमेव च
निष्कलौ लिङ्गपीठौ च सकलौ शक्तिशाम्भवौ ३१
निष्कलं तु कलाहीना सकला तु कलान्विता
यतीनां चैव मंत्रीणां ज्ञानिनां चैव योगिनाम् ३२
ध्यानपूजानिमित्ताय सकलं निष्कलं स्मृतम्
लिङ्गपीठं प्रकारेण देवेशं पूजयेत्सदा ३३
अष्टत्रिंशत्कलायुक्तं सकलं त्वितिविद्यते
ईशादि सद्यपर्यन्तं कल्पयेत्तु सदाशिवम् ३४
ईशानेन तु मन्त्रेण पञ्चमूर्ध्नि प्रकल्पयेत्
पुरुषेणैव मन्त्रेण चतुर्वक्त्रं प्रकल्पयेत् ३५
अघोरेणैव मन्त्रेण हृदयादीनि विन्यसेत्
वामदेवेन मन्त्रेण गुह्यादीनि प्रकल्पयेत् ३६
सद्योजातेन मन्त्रेण पादाद्यङ्गानि कल्पयेत्
अष्टत्रयोदशाष्टौ च चतुःपञ्च यथा क्रमम् ३७
सद्यवाममघोरं च पुरुषे पकला स्मृताः
एवं तु सकलं प्रोक्तं सकलं त्विति निश्चितम् ३८

करपादा वयवानि कल्पनात्सकलं विदुः
सादाख्य तत्वदेवेशं प्रत्यक्षं सर्वतोमुखम् ३९
इच्छाशक्त्युद्भवं पद्मं सहस्रदलभूषितम्
कर्णिकाके सरैर्युक्तं तत्रस्थं हि सदाशिवम् ४०
पञ्चमूर्धा चतुर्वक्त्रं नेत्रैर्द्वादशभिर्युतम्
चतुरास्यं चतुर्नासि अष्टश्रोत्रं चतुर्गलम् ४१
दशभुजं तनूरेकं द्विपादं पद्मसंस्थितम्
शुद्धस्फटिकसंकाशं सूर्यकोटिसमप्रभम् ४२
चन्द्रांशु शीतलं सौम्यं सर्वाभरणभूषितम्
शुक्लाम्बरधरं देवं शुक्लयज्ञोपवीतिनम् ४३
अभयं शूलपरशुं वज्रं खट्गं तु दक्षिणे
खेटकांकुशपाशं च घण्टावरदवामके ४४
इत्येतैर्लक्षणैर्युक्तं सदाशिवमिति स्मृतम्
तस्यैव वामपार्श्वे तु आदिशक्तिर्मनोन्मनी ४५
वह्नेरुष्णत्ववच्छक्तिरविना भाविनी विभोः
शक्तिहीने शिवो नास्ति शिवहीना न शक्तिका ४६
एते समस्त देवाश्च शक्तिशम्भु मया स्मृताः
तस्माच्छिवमयं प्रोक्तं जगदेतच्चराचरम् ४७
एकवक्त्रां चतुर्हस्तां सर्वाभरणभूषिताम्
नितम्बतटविस्तीर्णां मध्ये क्षामांस्तनोन्नताम् ४८
वामादिशक्तिकोपेतां मनोन्मनीं स लक्षणाम्
ध्यात्वा सम्पूजयेद्धीमान् जगत् प्रीतिकराय वै ४९
ब्रह्माङ्गैश्चैव विद्याङ्गैर्विद्येश्चैव गणेश्वरैः
लोकपालैः सहस्रैश्च क्रमशस्ते समुद्भवाः ५०
तत्तद्गुणा वृताः सर्वे तत्तच्चिन्ह समायुताः
सर्वावयवसम्पूर्णास्त्वनन्तादित्य सप्रभाः ५१

चतुर्भुजास्त्रिणेत्राश्च जटामकुटधारिणः
सदाशिवं नमस्कृत्वा तत्तदायुधधारिणः ५२
नानावर्णसमायुक्ता नानाभरणभूषिताः
नानागन्ध समायुक्ता नानापुष्पोपशोभिताः ५३
सदा शिवं यदात्मन्तु तथा चावृतदेवताः
आमूर्त चेदमूर्तस्तु पूजां कुर्याद् विशेषतः ५४
यदि लिङ्गस्तु कर्तव्यो गर्भगेहे पृथक्पृथक्
लिङ्गस्येव तथा पीठे मूर्तादीनि विचिन्तयेत् ५५
सर्वावरण देवांश्च सकलानि ततः शृणु
मूर्तयश्चेश्वराद्यस्तु सकलं च प्रकीर्तितम् ५६
यत्तत्सदाशिवं प्रोक्तं तद्वदीश्वरमुच्यते
यासां मनोन्मनी यद्वदीश्वरी तत्वमुच्यते ५७
वक्त्राद्यावरणे चैव पूर्ववत् परिकल्पयेत्
काष्ठलोहशिला मृद्भिः प्रतिमास्तु प्रकल्पयेत् ५८
विद्या तत्व स्थितं शम्भुं सर्वालङ्कारसंयुतम्
लिङ्गस्य कौतुकं विद्यात्सकलं त्विति बुद्धिमान् ५९
लिङ्गपूजावसाने तु ईश्वरं पूजयेत्क्रमात्
ईश्वरस्य सहस्रांशाद्रुद्रस्योद्भवमुच्यते ६०
चतुर्भुजस्त्रिणेत्रस्तु चन्द्रार्धकृतशेखरः
विद्युत्पुञ्जनिभो देवो परशूमृगधारिकः ६१
सर्वावयवसम्पूर्णः सर्वाभरणभूषितः
उमादेव्युत्तरे पार्श्वे सर्वलक्षणसंयुता ६२
ईश्वरस्य तु कोट्यंशात् विष्णुस्तत्रैव कीर्तितः
श्यामवर्णः सरक्ताक्षः शङ्खचक्रधरो हरिः ६३
पीताम्बरधरो देव श्रीभूमिसहितस्तदा
ईश्वरस्य तु कोट्यंशाद्ब्रह्मणस्तु समुद्भवः ६४

चतुर्भुजश्चतुर्वक्त्रो जटामकुटधारकः
कमण्डल्वक्षमालाधृत्पीतवर्णः सुलोचनः ६५
सावित्री सहितस्तत्र सृष्टिमूर्तिरिति स्मृतः
स्थितिमूर्तिस्तु विष्णुः स्याद्रुद्रः संहारकारकः ६६
त्रिमूर्तयोऽथ विख्याता ब्रह्माण्डे संव्यवस्थितः
निष्कलं तु लयस्थानमधिकारं स निष्कलम् ६७
भोगः सकलमेवं स्यात् लयभोगाधिकारपान्
परं निष्कलमित्युक्तं परमं सकलं स्मृतम् ६८
परापरं तथा प्रोक्तं सकलन्निष्कलं भवेत्
परापरं यथा ज्ञात्वा समुक्तः पाशहा भवेत् ६९
तिस्रस्तु देवताः पश्चात् त्रयस्त्रिंशत् समुद्भवाः
रुद्रैकादशपूर्वास्तु द्वादशादित्यसंयुताः ७०
वसवश्चाश्विनी युक्तास्त्रयस्त्रिंशाधिदेवताः
सहस्र त्रिंशतत्रिंशद् देवतास्तत्र मूर्तिषु ७१
शरीरभूतसारेण देवानां तु स्रजन्ति वै
ऐश्वर्यमलसम्बन्धाद्धृद्बोधस्तु विनाशयेत् ७२
शिवसृष्टिमिदं प्रोक्तं पशुसृष्टिं ततः शृणु
इति शिवसृष्टिविधिपटलः प्रथमः १

## अथ पशुसृष्टिविधिपटलः

अथातः सम्प्रवक्ष्यामि पशुसृष्टिविधिक्रमम्
अनादित्वं पशुत्वं च प्रोच्यते शिवशासने १
शिवात्तु विद्यते चात्मा जगत् सृष्ट्यर्थमेव तु
विद्या तत्वादियोगेन आत्मतत्वमुदीरितम् २
अथात्मा विमलः शुद्धो मायया बद्धते सदा
सहजं मलसम्बन्धात् पशुरित्युच्यते बुधैः ३

अमूर्तिस्तु पशुर्नित्यो निर्गुणो निष्क्रियो प्रभुः
मायोदरगते व्यापि भोगोपायेषु वर्तितः ४
सकेवलस्त्विति प्रोक्ता स्वाणवं मलबन्धनात्
आणवं सहजं प्रोक्तं तु षकम्बुकवत् क्रमात् ५
मोहो मदश्च रागश्च विषादश्चैव शोषितम्
हर्षको हि च वै चित्र्यं सप्तैते सहजामलाः ६
सहजं मलसम्बन्धे केवलं तदुदाहृतम्
सहजं मलमित्युक्तमागन्तु कमलं शृणु ७
मायेयं कर्मजं चैव द्विविधं शिवसाधने
शक्त्याकाचिद्बन्धनादि कलाद्यवनिलक्षितम् ८
माया यत्तं विजानीयात्पुण्यपापैश्च कर्मजम्
आणवं चैव माये यं कामजं च त्रिधा भवेत् ९
मलो ज्ञानं तमश्चैव तिरस्कारकरस्तथा
प्रतिपत्तिरविद्येति मम पर्याय वाचकाः १०
त्रिमलैर्बद्ध्यते चात्मा सकलः परिवादितः
सकलश्चेति बद्धात्मा संसारी विषयि तथा ११
क्षेत्री क्षेत्रज्ञ भोक्ता च पशुज्ञानी तथैव च
भोगी चैव शरीरी च आत्मपर्याय वाचकः १२
अशीतिश्च चतुश्चैव शतःसाहस्र भेदकैः
सम्प्राप्तो योनिभेदस्तु जीवनाम्ना तु तत्र वै १३
प्रोक्ता तु सकलावस्था शुद्धावस्था ततः शृणु
मलानां नाशनार्थय अन्यच्छक्तिनिपा ततः १४
यावच्छक्तिनि पातान्तं तावदज्ञानवेदनम्
पूर्वकर्माणि सर्वाणि समके शक्तिपातने १५
सदाशिवत्वमापेक्ष्य शिवे भक्तिर्भवेद्यथा
तदादीक्षां प्रविश्याथ पूजाश्चैव तु भक्तितः १६

योगाभ्यासं ततः कृत्वा ज्ञानतन्त्रं तदाभ्यसेत्
तदा ज्ञानान्धकारं च ज्ञानदीपेन नाशयेत् १७
स्वभावशुद्धं तद्ज्ञानं स्वभावं तु तथामलम्
श्यामनीलादि सम्बन्धे स्फटिकं तद्वदेव हि १८
तत्वेनातिप्रयत्नेन शुद्धस्फटिकवद्भवेत्
घटगुप्तो यथा दीपो घटनाशे तु दीप्यते १९
घटाभुक्तो यथा भानुर्मुक्तौ वापि तथा भवेत्
तद्वद्बन्धत्वमुक्तत्वादात्मनः परिकीर्तितौ २०
मलैरावृतमात्मानं पशुरित्युच्यते बुधैः
मलमुक्तमथात्मानं शुद्ध इत्युच्यते बुधैः २१
ईश्वर स्मृतिना काले लब्धत्वं सति निर्मलम्
अथोऽहमीश्वरं स्मृत्वा पश्चात् तन्मयतांगतः २२
सर्पबुद्ध्या भ्रमन् रज्जुं रात्रौ तिष्ठति यः पुमान्
भ्रमे नष्टे यथा काले तदा सर्पं न दृश्यते २३
अथात्म बन्धमुक्तत्वं शुद्धत्वात्तत्स्वभावतः
स्वभावं ज्ञानतो मुक्तिः सजीवन्मुक्त एव हि २४
देहनाशे परावाप्तिर्घटनाशे तु व्योमवत्
सोऽहं ज्ञाने तु पश्चाद्वै पूजाध्वाने तु वर्जयेत् २५
सर्वतत्वानि भूतानि दृश्यते चात्म एव हि
समत्वसुखदुःखाभ्यां तत्प्रियाप्रिययोः समम् २६
शरीरारब्धकर्माणि भुज्यते स्वयमेव तु
हिंगुत्यक्ते तु तत्पात्रे गन्धं तत्र न नश्यति २७
कुलालचक्रं कर्मान्ते यथा भ्रमति वै तथा
तत्वज्ञ सर्वकर्माणि शरीरन्तेषु नाशनम् २८
अग्निदग्धानि बीजानि न प्ररोहन्ति भूतले
त्रिवर्ण स्थानियो ज्ञात्वा पुनर्जन्म न विद्यते २९

शुद्धावस्था इयं प्रोक्ता सर्वतत्वादिभिर्गुणैः
त्र्यवस्थं पुरुषः प्रोक्तः ह्यध्वानं च ततः शृणु ३०
इति पशुसृष्टिविधिपटलो द्वितीयः २

अथ अध्वाविधिपटलः

अथातः सम्प्रवक्ष्यामि अध्वानं च समासतः
अध्वानं षड्विधं प्रोक्तं तत्वाध्वादिविनायक १
तत्वाध्वा प्रथमं विद्धि भुवनाध्वा द्वितीयकम्
मन्त्राध्वा वै तृतीयं तु वर्णाध्वा वै चतुर्थकम् २
पदाध्वा पञ्चमं ज्ञेयं कलाध्वा षष्ठमं स्मृतम्
षड्विधैरध्वभिर्मार्गैः संविशेदेकमीश्वरम् ३
तत्वाध्वानं समासेन भूकटाहादिकं शृणु
पृथिव्यादीनि मायान्तमध्वानं वर्ण्यते क्रमात् ४
कालाग्नेः शतरुद्रान्तं ब्रह्माण्डमिति संस्मृतम्
अथाण्डकटहोत्सेधं योजना कोटिरुच्यते ५
कालाग्नि रुद्रदेवस्य तस्योर्ध्वे भुवनं विदुः
अनेककोटिरुद्रैस्तु परिवृत्तस्तु तिष्ठति ६
सिंहासनं महादीपं नानारत्नोपशोभितम्
सहस्रत्रयविस्तारं सहस्रयोजनोच्छ्रयम् ७
। । । । । । । । योजना दशकोटयः
भूमेरुपरितप्तेन कोटिषट्कं विधीयते ८
कोटयः सप्तदशकाः कालाग्नेस्तु घनं महत्
तस्योर्ध्वे नरकं विद्यात् चत्वारिंशच्छताधिकम् ९
तेषां प्रयत्या द्वात्रिंशत् प्रधानास्तेषु ते त्रयः
उपर्युपरि संस्थास्तु द्वात्रिंशन्नरकान् शृणु १०
रौरवं प्रथमं प्रोक्तं महारौरं द्वितीयकम्

शीतोष्णं हि तृतीयं तु सन्तापनं चतुर्थकम् ११
पञ्चमं पद्ममेवं स्यात् महापद्मं तु षष्ठकम्
कमलं सप्तमं चैव सूचिमुखमथाष्टकम् १२
कृष्णसूत्रं तु नवमं श्रीमुखं दशमं स्मृतम्
एकादशं क्षुराधारमसि धारं तु द्वादशम् १३
एकादशं नरकाणामदीप्ते रौरवं स्मृतम्
कुम्भीपाकस्तु प्रथमो हुंकारं द्वितयस्तथा १४
रेश्नीनोकहयस्तुएडास्त्रितयः परिकीर्तिताः
असृक् पूयश्चतुर्थन्तु गजपादस्तु पञ्चमम् १५
कृकरच्छेदषष्ठस्तु तप्तमोहस्तु सप्तमम्
त्रपुलोमाष्टमप्रोक्ता नवमस्तप्तवालुकः १६
अस्तिभङ्गस्तु दशमं कुम्भीपाकप्रधानतः
अवीचि प्रथमं विद्धि जलूकस्तु सदानदी १७
हैमवर्णस्तृतीयं हि शाल्मली च चतुर्थकम्
अनध्वासो निरुच्छ्वासं पूतिमां सानुदक्षणः १८
जतुपंकं च लोहं च युग्मपर्वत एव च
नरकाणां नवानां तु अवीच्येषु प्रधानकः १९
रौरवं कुम्भिपाकं च अविचिं च इमे त्रयः
राजराजेश्वरा ह्येते नरकास्तु त्रय स्मृताः २०
रौरवस्तु तथा मेध्यं कुम्भिपाकस्तु तापनम्
अवीच्या क्रिमिनिचयं अन्तर्भूतं विचिन्तयेत् २१
सप्तसप्तोपनरकैः त्रयाणां परिवारितैः
एकोनत्रिंशन्नरकां स्त्रिभिस्त्रिभिरथा वृतान् २२
एवं नरकमाख्यातं चत्वारिंशत् तदादिकम्
अतिघोरस्तु नरकास्त्रिकोणा कृतिसंस्थिताः २३
पापिनां नरकं प्रोक्तं धर्मिणां स्वर्ग उच्यते

देवद्रव्यापहारश्च शिवशास्त्रविदूषकाः २४
पित्रघातश्च ब्रह्मघ्ना एवमाद्यास्त्वनेकशः
यातना स्थानमाश्रित्य पतितं नरकार्णवे २५
अक्रोधशौचमाचार क्षान्तियुक्ति समायुतः
यत्पुण्यं शिवभक्त्या तु सर्वं प्राणिदयान्वितम् २६
एवमाद्यानराः सर्वे गच्छन्ति नरकं न हि
उच्छ्रयं नरकाणां तु शृणुवत्स समाहितः २७
नवं नवति लक्षाणि एकैकस्योच्छ्रयं विदुः
पक्षमात्रान्तरं ज्ञेयं शतलक्षमिति स्मृतम् २८
एवं तु त्रिशतं लक्षं नरकाणां प्रकीर्तितम्
अधो रौरवमित्युक्तं कुम्भिपाकं तु मध्यमम् २९
अवीचि च्छोर्ध्वतो ज्ञेयं तेषां त्रिस्थानमुच्यते
नरकाणामधोर्ध्वे तु विंशत् साहस्रसंयुतम् ३०
नरकाधिपतिः सोऽयं कूश्माण्डस्तत्र संस्थितः
नवन्नवति साहस्रं पुरं तस्य प्रकीर्तितम् ३१
शतसहस्रमिति ज्ञेयं लक्षमित्यभिधीयते
कुश्माण्डाधिपतिः सोऽपि नरकाणां प्रभु स्मृतः ३२
तस्योपरिष्ठात्पातालं अथयामि समासतः
महातलं सुतलं च रसातलं तलातलम् ३३
पातालं शङ्करं चैव आभासं चैव सपकम्
महातलानां सप्तानां पाताल इति संज्ञितः ३४
नागाश्च राक्षसश्चैव देवाश्चाप्सरसस्तथा
महातले तूपस्वस्थे सक्रीडमुदितात्मनः ३५
नवलक्षाणि चोत्सेध मन्तरं लक्षमुच्यते
लक्षमात्रान्तरश्चैव पातालानां प्रमाणतः ३६
ततः सौवर्णपातालं दशलक्षप्रमाणतः

तस्योर्ध्वे तु वसुर्देवो हाटकः परमेश्वरः ३७
नानालङ्कारसंयुक्तं पुरकोटिसमावृतम्
तत्सर्वं हाटकं यस्मात् तस्माद्द्वे हाटकेश्वरः ३८
तस्योर्ध्वे नवलक्षाणि ग्रन्तरिक्षे प्रकीर्तितम्
भूकटं दशलक्षाणां मृच्छ्रयन्तु विधीयते ३९
कूश्मायुधिष्ठितं स्थानं शतलक्षमिति स्मृतम्
शन्तलक्षं कोटिविज्ञेयं पञ्चाशत् कोटयं स्मृतः ४०
भूम्यन्तं लक्षणं प्रोक्तं भूलोकानि ततः शृणु
समुद्रैः सप्तभिर्युक्तं भूलोकमिति विश्रुतम् ४१
भूलोकं तु वलोकश्च स्वल्लोकश्च महस्तथा
जनलोकस्तपोलोकः सत्यलोकस्तु सप्तमः ४२
प्रमाणं सप्तलोकानां लक्षणं च वदाम्यहम्
भूलोकं प्रथमं वक्ष्ये समासात्तु शृणुष्व हि ४३
नानाजनपदाकीर्णं नानावस्तुसमायुतम्
जम्बूद्वीपादि संयुक्तं क्षीरमम्बोधि संयुतम् ४४
तस्य मध्ये महामेरुर्हैमरूपेण तिष्ठति
लक्षयोजनमानेन कर्णिका रूपवत् क्रमात् ४५
षोडशैस्तु सहस्राणि भूम्यधस्तात् प्रविष्टकम्
चतुराशीतिसाहस्रं योजनोर्ध्वे विधीयते ४६
ऊर्ध्वभागः समं मूलं द्विगुणं मूर्ध्निविस्तरम्
नानाशिखरसंयुक्तं नानाभूमिमलतान्वितम् ४७
तस्योर्ध्वे तु सभाः विद्याद्ब्रह्मणश्च महात्मनः
नाम्नामनोवती चैव सर्वरत्नसमासतः ४८
चतुर्दशसहस्राणि योजनानां प्रमाणतः
नानालङ्कारसंयुक्ता ऋषिसिद्धगणायुताः ४९
तस्योर्ध्वे शानदिग्भागे ज्योतिः शिखर उच्यते

विंशतिश्च सहस्राणि विस्तारोत्सेधमेव च ५०
नानालङ्कारसंयुक्तो नानावर्णसमासतः
हेमप्रासादसंयुक्तं हेमप्राकारतोरणम् ५१
सगन्धर्वसमायुक्तं सर्वदेव गणावृतम्
गणैः सर्वैः समायुक्तं त्रिंशत् साहस्रशोभितम् ५२
उमादेव्या सहैवाहं वसेन्नित्यं हि तत्र वै
तस्य पश्चिमदिग्भागे वै कुण्ठः शिखरं भवेत् ५३
सर्वालङ्कारसंयुक्तं मुनिसिद्धगणावृतम्
चतुर्दशसहस्राणि विस्तारोत्सेधमेव च ५४
सर्वरत्नमयं भासं हेमप्राकारतोरणम्
तत्रैव वसते विष्णुः सर्वदेवगणावृतः ५५
भूलोकरक्षणार्थाय वसन्ति मुदितात्मनः
सृष्टिस्थितिश्च संहारान् कुर्वन्ति क्रमशः तथा ५६
मूर्ध्निभागादधस्तात् तु योजनानां सहस्रकम्
पूर्वे त्विन्द्रस्य विख्याता पूर्नाम्नात्वमरावती ५७
आग्ने तेजोवती नाम्ना पूर्वह्नेस्तु प्रकीर्तिता
यमस्य दक्षिणे भागे नानासंयमनी पुरी ५८
कृष्णाङ्गनापुरीनाम्ना निर्ऋतो राक्षसालयम्
पश्चिमे वरुणस्यैव नाम्नाशुद्धवती पुरी ५९
वायोश्च वायुदिग्भागे नाम्नागन्धवती पुरी
सोमस्योत्तरभागे तु पुरी नाम्ना महोदया ६०
ईशानस्यैशदिग्भागे पूरी नाम्ना च धावती
पुरैः कोटिसहस्रैस्तु सर्वैः सर्वप्रशोभितः ६१
गङ्गाजलेन सुस्नात्वा क्रीडन्ति मुदितात्मनः
चतुर्निष्कं भगिरयः पूर्वाद्यास्तु यथा क्रमात् ६२
मन्दरः पूर्वदिग्भागे दक्षिणे गन्धमादनः

पिङ्गलः पश्चिमे भागे सुपाशश्चोत्तरे तथा ६३
श्वेतं हरितकी नीलं डाडिमी कुषुमप्रभम्
योजनानि सहस्राणि तेषां पञ्चाशदुच्छ्रितम् ६४
भूम्ने नाथोष्ट साहस्रं चत्वारिंशत् द्वयोच्छ्रितम्
तेषां तु मूलविस्तारं द्विगुणोपरिविस्तृतम् ६५
मन्दरोपरिसंस्थं तु कदम्बो नामकवृतः
सहस्रयोजनोत्सेधं स्कन्धैः साहस्र शोभितम् ६६
कुम्भाकारं तु तत्पुष्पं शङ्खाभं च सहस्रकम्
गन्धमादनमूर्ध्निस्थो जम्ब्वाख्यं तत्र वृक्षकः ६७
कदम्बद्विगुणोत्सेधं स्कन्धाः शाखास्तथैव च
महागजप्रमाणानि तस्य जम्बू फलानि तु ६८
पतितानां फलानां तु तेन जाम्बूनदी भवेत्
तत्र वेगवती नाम्ना कृत्वा मेरुप्रदक्षिणम् ६९
तेन प्रवेशितं सर्वं कनकं देवभूषणम्
ये तत्र वासिनः सर्वे जाम्बूनदमयास्तथा ७०
अश्वत्थं केतुनाम्ना वै विपुलोपरि संस्थितिः
सहस्रयोजनोत्सेद्धं स्कन्धैः साहस्रशोभितम् ७१
अश्वत्थ फलवत् ज्ञेयं वृत्तनाम्नासु शोभितम्
तस्यपार्श्वे तु न्यग्रोधस्तस्योपरि तु संस्थितम् ७२
गणैः सप्तैः समायुक्तं विचित्रैर्विविधैः शुभैः
चतुर्वर्णानि चोक्तानि पूर्वादिनि च चोत्तराः ७३
पूर्वे चैत्ररथं नाम्ना वनं पुष्पोपशोभितम्
तस्य मध्ये तटाकोऽस्ति नाम्ना वै वारुणोदयः ७४
नक्रैर्मत्स्यैरनेकैश्च मण्डितं पद्मपुष्पकैः
दक्षिणे नन्दनं नाम वनं तत्र विशेषतः ७५
तटाकं मानसं नाम तस्य मध्ये प्रकीर्तितम्

वै भ्राजं पश्चिमे भागे तटाकं विपुलोदकम् ७६
सौम्ये पत्रवनं नाम तटाकं सुमनोहरम्
ईदृशैर्ल्लक्षणैर्युक्तो मेरुस्तत्र प्रकीर्तितः ७७
मेरुपार्श्वे तु वर्षाणि पारुषाणि समासतः
लवणोदधिपर्यन्तो जम्बूद्वीपं प्रकीर्तितम् ७८
जम्बूशाककुशक्रौञ्च शाल्मको मेदपुष्करः
सप्तद्वीपाः समाख्याताः समुद्राश्च ततः शृणु ७९
क्षारं क्षीरोदधिः सर्पिरिक्षूदकमधूदकम्
समोदकस्त्विति ख्याता सुमुद्राः सप्तकीर्तिताः ८०
लक्षयोजनविस्तारं जम्बूद्वीपं विनायक
कमलाक्षोदितं विद्यात् लवणाम्भस्ततो बहिः ८१
द्विगुणेनावृतं बाह्ये शाकद्वीपस्तु नामतः
द्विगुणाद्द्विगुणं ह्येवं द्वीपात् द्वीपसमुद्रकम् ८२
स्वादूदकान्तामेर्वादि प्रमाणं पञ्चकोटयः
सप्तलक्षाधिकाः प्रोक्ता स्वाधिपत्यान्ततः शृणु ८३
देवाश्च राक्षसाश्चैव ईश्वरेण सुचोदिताः
स्वयम्भुवमनुः पूर्वं सप्तद्विपान् सुरक्षितः ८४
तस्य पुत्रो महावीर्यः प्रियव्रतः सुरक्षकः
दशपुत्राः समुत्पन्नाः तस्य वीर्यान् महाबलाः ८५
अग्निधृत् त्वग्निबाहुश्च मेधा मेधातिथिर्विभुः
ज्योतिष्ठान् धृतिमान् भव्यो वसनः पुत्र एव च ८६
अग्निबाहुश्च मेधावी पुत्रा प्रवृजितास्त्रयः
शेषाणां सप्तपुत्राणां सप्तद्वीपांशभागिनः ८७
अग्निधृद् बाहुवीर्येण जम्बूद्वीपः सुरक्षितः
नाभिः किं पुरुषश्चैव हरिश्चैव जलावृतः ८८
भद्राश्च केतुमालश्च पुष्यकस्तु हिरण्मयः

पुत्रनामाथ नवमो नवपुत्राः प्रकीर्तिताः ८९
जम्बूद्वीपं तु तेषां वै नवभागं प्रकल्पितम्
त्रयस्तु दक्षिणाख्यातो चोत्तरे त्रय एव तु ९०
त्रयस्तु मध्यमे ख्याताः पर्वतान्तरितः तथा
दक्षिणे हिमवाह्ने मकूटस्तस्यैव चोत्तरे ९१
निषधस्य समाख्यातो हेमकूटस्य चोत्तरे
नीलश्चेत्तु स्त्रिशृंगश्च उत्तरस्य च निर्गतः ९२
समुद्रादधिकाशस्ता स्थिता प्राक् पश्चिमायता
सर्वैश्वर्य समायुक्ता षडेते गिरयस्तदा ९३
पूर्वपश्चिममेरोस्तु माल्यवान् गन्धमादनौ
निषधनीलपर्यन्तौ नगौ सौम्योत्तराथतौ ९४
योजनाशीति विस्तारौ सहस्रद्वयकोच्छ्रितौ
हिमवान् हिमवर्णस्तु हेमकूटस्तु हेमवत् ९५
निषधः पद्मरागाभो नीलाभो गन्धमादनः
माल्यवान् पीतवर्णस्तु नीलोरत्तमयस्तथा ९६
श्वेतस्तु सितवर्णः स्यात् त्रिशृङ्गी चन्द्रकान्तवत्
सीमास्तु गिरयप्रोक्ता देशां देशाधिपान् शृणु ९७
त्रिशृंगस्योत्तरे पार्श्वे दक्षिणे लवणो दधेः
क्मरदेशस्त्वितिख्यातः स्वधिपाश्च गुरुर्भवेत् ९८
धन्वाकारः सविज्ञेयो नवसाहस्र योजनः
भूमिसुवर्णवत् ज्ञेया वालुकाश्च तथा स्थिता ९९
जना वसन्ति सर्वत्र कामवृक्षफलाशिनः
त्रिशतानि सहस्राणि जीवन्ति वत्सराणि वै १००
द्वेद्वे पुत्रौ प्रसूयन्ते स्त्रीप्रजानां तथैव च
श्यामपुष्पनिभाकारा भयदुःखविवर्जिताः १०१
सूर्यकान्तेषु कान्तश्च तत्रैव कुलपर्वतौ

रुरोर्नाम्ना तु तं विद्धि कुरु विन्दस्ततस्तु वै १०२
चन्द्रदीपं समाख्यातं प्रविश्य लवणो दधिम्
तस्य वायव्यदिग्भागे द्वीपो भद्राकरस्मृतः १०३
सहस्रायुर्जनास्तत्र सुदिव्याम्रफलाशिनः
त्रिशृङ् श्वेतयोर्मध्ये हिरण्यं वर्षको भवेत् १०४
नवसाहस्र विस्तारं समुद्रावधिदीर्घकम्
जनास्त्विन्दुमुखाः सर्वे वकुलस्य फलाशिनः १०५
जीवन्नेवं सहस्राब्दं तेषामायुः प्रकीर्तितम्
सुनीलश्वेतयोर्मध्ये रम्यं वर्षमिति स्मृतम् १०६
विस्तारं नवसाहस्रं समुद्रान्तायुतं महत्
न्यग्रोधस्य फलं प्राश्य नीलोत्पलसमप्रभाः १०७
द्वादशाब्दसहस्राणि जीवन्ति भयवर्जिताः
मेरु प्रदक्षिणं देशमवधूतनरं तथा १०८
नवसाहस्र विस्तारं योजनानां समन्ततः
तस्येन्दुरश्मयस्थित्या मेरुदीप्त्या सुदीपिता १०९
जम्बूफलरसं पीत्वा जना रोगविवर्जिताः
त्रयोदशसहस्राब्दं तेषामायुः प्रकीर्तितम् ११०
समुद्रस्य तु पूर्वे तु गन्धमादनपश्चिमे
केतुमालाख्य वर्षस्तु जनाः श्याम निभास्तथा १११
पनसस्य फलं भुक्त्वा जीवन्त्ययुतवत्सराः
चतुस्त्रिंशत् सहस्राणि योजना दक्षिणोत्तरे ११२
पूर्वपश्चिममायामं द्वात्रिंशच्च सहस्रकम्
उदधेः पश्चिमे भागे पूर्वे वै वाह्यवद्गिरेः ११३
भद्राश्वनाम वर्षं हि जनाश्चन्द्रनिभास्तथा
ते कृष्णाम्रफलं प्राश्य लभेदयुतमायुषम् ११४
तस्य दीर्घं च विस्तारं केतु मालाद्रिवर्ततः

दक्षिणे निषधस्यैव हेमकूटस्य चोत्तरे  ११५
तं विद्धि हरिवर्षं  तु समुद्रान्तायुतं स्मृतम्
विस्तारं नवसाहस्त्रं योजनानां प्रमाणतः  ११६
जनस्त्विक्षुर सम्पीत्वा रौप्याभास्तत्र वासिनः
द्वादशैव सहस्त्राब्दं तेषामायुः प्रकीर्तितम्  ११७
दक्षिणे हेमकूटस्य सौम्ये हिमवतस्तथा
मध्ये किं पुरुषं वर्षं  विस्तारायामपूर्ववत्  ११८
जनाः सुवर्णवर्णाश्च जीवन्ति प्लक्षभोजनाः
द्वादशाब्दं सहस्त्रायुस्तेषा जीवान्तमुच्यते  ११९
हिमवद्दक्षिणे भागेऽप्युत्तरे लवणो दधेः
नाभेश्च वृक्षोद्भवनो भरतस्तत्सुतस्मृतः  १२०
तन्नाम्नाभरतं वर्षं  धन्वाकारं तदुच्यते
नवसाहस्त्रविस्तारं समुद्रान्तरितायतम्  १२१
नानाजनपदाकीर्णं  जनारोगभयान्वितम्
कल्पसौख्यं महादुःखं जनाः कृष्यान्नभोजनम्  १२२
तेषां शताब्दमायुष्यं चतुर्युगवशात्पुनः
गुणमेवं विजानीयाच्छुभाशुभफलार्जनम्  १२३
कर्मभूमिरियं विद्धि स्वर्गभूमिस्तथापरा
मुक्तिभुक्तिफलं प्राप्यं शिवं साम्प्राप्य यत्ततः  १२४
ततो भारतवर्षं  च नवभागं प्रकल्पितम्
नवपुत्रास्तु जायन्ते भरतस्येन्द्रपूर्वकाः  १२५
इन्द्रश्चैव कशेरुश्च ताम्रवर्णो गभस्तिमान्
नागः सौम्यश्च गन्धर्वो वरुणश्च कुमारिकाः  १२६
तेषां नाम्नैव बोद्धव्या द्वीपश्चैकैकशः क्रमात्
इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान्  १२७
नागद्वीपं च सौम्यं च गान्धर्वो वरुणं तथा

नवमा तु कुमाराख्या तेषां भेदाः प्रकीर्तिताः १२८
सागरान्तरितः कृत्वा स्थलं पञ्चशतं भवेत्
कुमारद्वीपाधान्यास्तु म्लेश्च द्वीपाः प्रकीर्तिताः १२९
चतुर्वर्णसमायुक्तं चतुराश्रमसंयुतम्
गङ्गादीनां नवानां तु ज्ञेयाः पञ्चशतानि तु १३०
तीर्थानां कोटयः प्रोक्ता महापुण्यफलोदयाः
हिमवत्यन्तरे पार्श्वे कैलासशिखरं महत् १३१
रौप्यवर्णं महाशेष मुनिसिद्धैर्निषेवितम्
सर्वालङ्कारसंयुक्तं द्रुमैः सर्वत्र शोभितम् १३२
तत्रैव वसतो नित्यमुमादेवी समन्वितः
अष्टषष्टि महाक्षेत्रं पुराणस्यादि संस्थितम् १३३
जम्बूद्वीपादि षड्द्वीपाः सागरेषु व्यवस्थिताः
महेन्द्रो मन्धरः सख्यशुक्तिमानृक्षपर्वतः १३४
विन्ध्यश्च पारीपात्रश्च इत्येते कुलपर्वताः
मलयद्वीपगालङ्का चामीकरमयाशुभा १३५
नानाविचित्रसंयुक्ता रमन्ते राक्षसे स्वरैः
जम्बूद्वीपं समाख्यातं लवणोदं च मच्छृणु १३६
लक्षद्वयन्तु विस्तारं लवणो दधिरावृतम्
भूधरा द्वादशाश्चैव प्रविष्टा लवणो दधौ १३७
प्रभावश्चैव धूम्रश्च दुन्दुभिः पूर्वभागतः
चक्रं चैव तु मैनाकं वलाहं दक्षिणे तथा १३८
मैनाकचक्रयोर्मध्ये संस्थितो बडबानलाः
वराहः सोमके तु श्वनन्दनं पश्चिमे दिशि १३९
कंकश्चन्द्रस्तथा द्रोणश्चोत्तरे संव्यवस्थिताः
लवणो दधिरित्युक्तच्छाक द्वीपं ततः शृणु १४०
शाकद्वीपाधिपो यावान् पुष्पवान् कुशद्वीपके

ज्योतिष्मान् क्रौञ्चद्वीपे तु शाल्मल्यां द्युतिमां तथा १४१
गोमेदेध नवान् प्रोक्तवासीनस्तु महाबलाः
द्वौ पुत्रौ तु समाख्यातौ द्विभागौ तत्र कीर्तितौ १४२
पर्वतं वलयाकारं मानसोत्तरनामतः
कृतादियुगवत्कालः शाकादिद्वीपवासिनाम् १४३
स्वादूदान्तन्तु मेर्वादि विस्तारं पञ्चकोटयः
सप्तलक्षाधिकं तत्र समासात्परिकीर्तितम् १४४
ततो हेममयं भूमि विस्ताराद्दशकोटिकाः
देवानां क्रीडनार्थाय प्रोच्यतेऽत्र मया ततः १४५
लोकालोकस्वनाम्ना तु पर्वतं वृत्तरूपतः
सहस्त्रयोजनं तारमुत्सेधं लक्षयोजनम् १४६
लोकपाला स्थितास्तत्र सिद्धामरनिषेविताः
तस्यान्तर्भासते सूर्यस्त्वन्धकारस्त्वथा परः १४७
लोकालोकः समावृत्य गर्भोदधिसमुद्रकान्
गर्भो दधिसमावृत्य पार्थिवा वरणं स्मृतम् १४८
पात्थिवं तु समावृत्य कटाहं कोटिविस्तृतम्
कटाहं मेरुमध्यान्तं पञ्चाशत् कोटय स्मृताः १४९
दशदिक्षु समं ज्ञेयं प्रमाणः शतकोटयः
भूलोकश्च समाख्यातो भुवलोकं ततः शृणु १५०
लक्षयोजनमानेन सूर्यलोकं विधीयते
द्वादशादित्य वसवो रुद्राश्चैकादशः तथा १५१
अश्विनौ द्वौस्त्रयस्त्रिंशत् सञ्चरन्ति शिवेच्छया
मेरु प्रदक्षिणे नैव भुवलोकमिति स्मृतम् १५२
तस्योपरितुं क्षेण चन्द्रलोकं विधीयते
चन्द्रोर्ध्वे लक्षमात्रेण स्थितं नक्षत्रमण्डलम् १५३
लक्षद्वये बुधं विद्यात् द्विलक्षे भार्गव स्मृतः

लक्षद्वये तु चाङ्गारो द्विलक्षे तु बृहस्पतिः १५४
सौरिलक्षद्वये प्रोक्तो मुनयो लक्षयोजने
अत्रिश्चैव वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः १५५
भृग्वङ्गिरामरीचिश्च मुनयः सप्तकीर्तिताः
उपरिष्टाधृवः प्रोक्तस्त्वेक लक्षप्रमाणतः १५६
चन्द्रलोकाद्ध्रुवान्तश्च स्वर्ल्लोकमिति कीर्तितम्
दशपञ्च च लक्षाणि भूतपृष्ठाद्ध्रुवान्तकम् १५७
ततोपरिमहल्लोकं द्विकोटियोजनं स्मृतम्
पञ्चाशीति च लक्षाणि जनलोकमिति स्मृतम् १५८
अष्टकोटितपोलोकमुपर्युपरि संस्थितम्
द्वादशैव तथा कोटिः सत्यलोकं विधीयते १५९
महर्ल्लोकादि सत्यान्तं रुद्रास्तत्र निवासिनः
कोटिषोडशमानेन ब्रह्मलोकं विधीयते १६०
कोटियोजनमानेन विष्णुलोकं प्रकीर्तितम्
नवकोटिप्रमाणेन रुद्रलोकमिहोच्यते १६१
कटाहेऽस्य घनं कोटिः पञ्चाशत्कोटयस्मृताः
शतयोजनकोट्येवं कोट्या ब्रह्माण्ड तत्र वै १६२
ब्रह्माण्डधारकास्तत्र शतसंख्या शृणुष्वहि
कपालीशो ह्यजो बुद्धो वज्रदेहः प्रमर्दनः १६३
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः
इन्द्रस्य बलमाक्रम्य प्रभुशक्तिसमन्विताः १६४
विचरन्ति महारुद्राः शक्रराजस्य पूजिताः
अग्निरुद्रो हुताशश्च पिङ्गलः कादको हरः १६५
ज्वलनो दहनो बभ्रू भस्मान्तकक्षयान्तकः
अग्नेस्तु बलमाक्रम्य प्रभुशक्तिसमन्विताः १६६
विचरन्ति महारुद्रा वह्निराजस्य पूजिताः

याम्येऽमृत्युहरो धाता विधाता कर्तृकालकः  १६७
संयोक्ता च वियोक्ता च धर्माधर्मवृतिस्तथा
धर्मस्य बलमाक्रम्य प्रभुशक्तिसमन्विताः  १६८
विचरन्ति महादेवा यमराजेन पूजिताः
नैर्ॠतो मारणो हन्ता क्रूर दृष्टिर्भयानकः  १६९
ऊर्ध्वकेशो विरूपाक्षो धूम्रलोहितदंष्ट्रवान्
निर्ॠतेः बलमाक्रम्य प्रभुशक्ति समन्विताः  १७०
विचरन्ति महादेवा राक्षसेन सुपूजिताः
वारुणं बलमाक्रम्य प्रभुशक्ति समन्विताः  १७१
विचरन्ति महादेवा वारुणेन सुपूजिताः
शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्ण क्षयान्तकः  १७२
पञ्चान्तकः पञ्चशिखः कपर्दी मेखवाहनः
वायोस्तु बलमाक्रम्य प्रभुशक्तिसमन्विताः  १७३
विचरन्ति महादेवाः सोमराजेन पूजितः
विद्याधरश्च सर्वज्ञो ज्ञानधृग्वेदपारगः  १७४
सुरेश्वरश्च सर्वेशो भूतपालो बलि प्रियः
सुखकृद्दुःखकृच्छैते शैवेन तु समासतः  १७५
ईशानबलमाक्रम्य प्रभुशक्तिसमन्विताः
विचरन्ति महादेवा ईशानेन तु पूजिताः  १७६
वृषो वृषधरः कान्तो क्रोधेशस्वनिलाशनः
ग्रसनोदुम्बरश्चैव फणीन्द्रो वज्रदंष्ट्रवान्  १७७
विष्णोस्तु बलमाक्रम्य प्रभुशक्तिसमन्विताः
विचरन्ति महादेवा विष्णुनाम सुपूजिताः  १७८
प्रोक्तोऽयं पृथिवी पश्चादाप्यन्तत्वमतः शृणु
ब्रह्माण्ड परितः स्थाप्य दद्याद् दशगुणावृतम्  १७९
अमरेशं प्रभावं च नैमीशं पुष्करं तथा

अाषाढीशं च पिराडीशं हारभूतं च वाकुलम्  १८०
प्रोष्टं गुह्याष्टकं ह्येवं जलावरणमाश्रितम्
ऊर्ध्वे दशगुणेनैव वह्नेरावरणं महत्  १८१
हरिश्चन्द्रं सुशैलं च जल्पेरम्रातिकेश्वरम्
महाकालं मध्यमं च केदारं भैरवं तथा  १८२
अतिगुह्याष्टकं ह्येवं अग्न्यावरणमाश्रितम्
वाय्वावरणमूर्ध्वे तु विह्नेर्दशगुणं महत्  १८३
गया चैव कुरुक्षेत्रं नखलं नाखलं तथा
विमलं चाट्टहासं च महेन्द्रं भीम एव च  १८४
गुह्याद्गुह्याष्टकं ह्येवं अनिलावरणैः स्थितम्
तदूर्ध्वं तु भवेद् व्योमं स्थितं दशगुणावृतम्  १८५
वस्त्रापदं रुद्रकोटिं रविमुक्तं महालयम्
गोकर्णं भद्रकर्णं च सुवर्णाक्षं च स्थाणुकम्  १८६
पवित्राष्टकमेवं हि व्योमावरणमाश्रिताः
अत ऊर्ध्वमहंकारं स्थितं दशगुणेन तु  १८७
खगलेन्दु करराडं चोमाकोटि मराडलेश्वरम्
कौञ्जरं शंखुकर्णं च स्थूलेश्वरं स्थलेश्वरम्  १८८
स्थानाष्टकमिदं विद्यात्पूर्वाद्यैः शान्तकं स्थितम्
श्वेतगुह्याष्टकं प्रोक्तं रक्तं चैवाजगुप्सितम्  १८९
गुह्याद्गुह्याष्टकं पीतं कृष्णं चैव पवित्रकम्
स्थानाष्टकं स्फटीकाभमेवं पञ्चाष्टकं स्मृतम्  १९०
पक्षाकारस्तु भवताभ्युच्य वै तु निवासता
एते श्रीकराठनाथस्य भोगस्थानं प्रकीर्तिताः  १९१
अथ चोर्ध्वे भवेद्बुद्धि स्थिता दशगुणावृता
पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च  १९२
सौम्यं प्राजेश्वरं ब्राह्मं देवयोन्यष्टकं स्मृतम्

एतत् पुर्यष्टकं विद्धि बुद्ध्यावरणमाश्रितम्  १९३
स्थानान्युक्तानि दिव्यानि सर्वैश्वर्ययुतानि च
गुणावरणमूर्ध्वे तु बुद्धेर्दशगुणं स्मृतम्  १९४
अकृतं च कृतं चैव भैरवं ब्राह्म एव च
वैष्णवं चाथ कौमारं कौमिश्रैकर्णमेव वा  १९५
प्रोक्ता योगाष्टकं ह्येवं गुणावरणमाश्रितम्
योगेश्वरेषु यो भोक्ता योगं पूजन्ति तत्पराः  १९६
तेषां स्थानानि दिव्यानि योगैश्वर्ययुतानि तु
अव्यक्तमत ऊर्ध्वे तु स्थितं दशगुणावृतम्  १९७
क्रोधश्चराडश्च संवक्तो ज्योतिः पिङ्गलसूरकः
पञ्चान्तकैकवीरश्च शिवेन सहितेश्वरः  १९८
महादेवाष्टकं ह्येवं तद्व्यक्तावरणे स्थितम्
अव्यक्त प्रकृतिश्चैव प्रधानमिति चोच्यते  १९९
अत ऊर्ध्वं भवेदन्यद्रागाख्यावरणं विदुः
तत्प्रधानात् शतगुणं पौरुषन् तत्वमुत्तमम्  २००
तत्र रुद्रो महातेजो वामदेवौ भवोद्भवौ
एकलिङ्गेक्षणेशानभुवनैश्च परस्परम्  २०१
अङ्गुष्ठमात्रास्ते देवास्त्वङ्गुष्ठात्मकसंज्ञकाः
माया ज्ञानविनिर्मुक्ता परमेशप्रभावकाः  २०२
तत्रैव पुरुषो ज्यो रागाख्यावरणाश्रिताः
षट्कौशिकानि भूतानि भूतानि विषयाणि च  २०३
मनोबुद्धिरहंकारस्त्रिगुणश्च विशेषतः
एतैर्युक्तस्तु पुरुष आत्मतत्वे भुवि स्थितः  २०४
विद्या तत्वं तदूर्ध्वं तु रागाच्छतगुणं भवेत्
वामदेवोधभीमश्च उग्रश्चैवस्तथापि च  २०५
शर्वैशानैक वीरश्च ईश्वरश्च प्रचराडधृत्

ईश्वरोऽथ उमाभक्त अजेशोऽनन्द एव च २०६
ततो ह्येक शिवश्चैव विद्यावरणमाश्रिताः
कालतत्वं भवेदूर्ध्वं विद्यायास्तु शताधिकम् २०७
उच्छ्रच्छुष्कश्चाम्बरश्च मातङ्गो घोररूपकः
याम्योहलाहलश्चैव क्रोधेशो वसवामुखः २०८
स्थूलरुद्रो वर्षरुद्रो रुद्रोगलगुरुस्तथा
द्वादशैते महावीर्या कलावरणमाश्रिताः २०९
अत ऊर्ध्वं भवेन्माया कलायास्तु शताधिकाः
सम्पुटद्वितये माया रुद्रैर्द्वादश संस्थिताः २१०
अधश्च सम्पुटे विद्यादूर्ध्वश्चासं पुटे परम्
गहने शस्त्वव्ययश्च तथा हरिहर प्रभुः २११
दशैशानस्तथा चैव त्रिकालो गोपतिस्तथा
अधोमाया पुटान्ते तु षड्रुद्रास्ते प्रकीर्तिताः २१२
क्षेमीशो ब्रह्मचारी च विद्येशानस्तथैव च
विश्वेश्वरः शिवश्चैव अनन्तस्तु षडेव हि २१३
ऊर्ध्वजा या पुटान्तास्तु एते रुद्रा प्रकीर्तिताः
तेषां मध्ये सभगवाननन्तेशो जगत्पतिः २१४
उत्पत्तिं भावयित्वा तु कुरुते स्वेच्छया प्रभुः
मायाद्यवनि पर्यन्ता ये रुद्राः संस्थिताः क्रमात् २१५
भुंजते तत्र तत्रैव भोगादिमुदितात्मनः
पश्चाद्ज्ञानं समाश्रित्य शिवतत्वं समाश्रिताः २१६
मायान्तं लक्षणं प्रोक्तं तदूर्ध्वं लक्षणं शृणु
मायोर्ध्वे तु भवेदात्मा स्थितिः शतगुणेन तु २१७
तदात्मा विमलः शुद्धः सर्वज्ञत्वादिभिर्गुणैः
जगत् बीजमिदं ज्ञेयं शिवव्यक्तिकरं परम् २१८
माययासं वृतो ह्यात्मा शिवव्यक्तिकराय च

पशुपाश पतित्वं च त्रिगुणं विद्यते तथा २१९
आत्मानमेवं वेत्तव्यं विद्यातत्वं तथा शृणु
आत्मनस्तु सहस्रांशात् विद्यातत्वं तु संस्थितम् २२०
ईश्वरः संस्थितस्तत्र ब्रह्माङ्गादि समन्वितः
तदूर्ध्वे चैव सादाख्यं तत्र संस्थः सदाशिवः २२१
तदूर्ध्वे बिन्दुतत्वं तु तदूर्ध्वे नादमेव तु
तदूर्ध्वे शक्तितत्वं हि चोर्ध्वे प्रथमशक्तिकम् २२२
तदूर्ध्वे शिवतत्वं तु सर्वतत्वोपरि स्थितः
शिवाद्यवनि पर्यन्तं व्यापकं तेन तेजसा २२३
पृथिव्यापस्तथा तेजो वायुराकाशमेव च
अहङ्कारस्तथा बुद्धिर्गुणमव्यक्तमेव च २२४
रागत्वं च ततः तस्मिन् दशपञ्चेन्द्रियाणि च
विद्याकालकला माया आत्मानं तु तथैव च २२५
शुद्धविद्या च सादाख्यं बिन्दुनादं तथैव च
द्वितीयं शक्तितत्वं च प्रथमं शक्तिमेव च २२६
षट्त्रिंशत्तत्वमेतानि शिवतत्वोद्भवा इह
ब्रह्माण्डं पृथिवी ज्ञेया प्रकृत्यञ्जलकं स्मृतम् २२७
तेजो विद्यान्तमेवं हि वायुः सदाशिवान्तकम्
व्योमः शक्त्यन्तमेषां वै पञ्चतत्वेषु संस्थितम् २२८
एतानि पञ्चतत्वानि सुतत्वे तु स्थितानि तु
मायान्तानि च तत्वानि शिवतत्वमुदीरितम् २२९
आत्मैव चात्म तत्वस्य सर्वतत्व प्रभुः स्मृतम्
विद्या तत्वादिशक्त्यन्तं विद्यातत्वमिति स्मृतम् २३०
प्रकृतिः पुरुषश्चैव ईश्वरश्चक्रयो भवेत्
माया प्रकृतिचात्मानं तत्वस्य पुरुषस्थितः २३१
विद्यां चैवेश्वरः प्रोक्तस्सर्वतत्वं हि तन्मयम्

तेषु रुद्रैर्युतं ध्यानं तथाद्ध्वातुप्रकीर्तितः २३२
तत्वाद्ध्वानमिदं प्रोक्तं भुवनाध्वानकं शृणु
पृथिव्यादीनि तत्वानि भुवनाद्ध्वानि संस्थितः २३३
भुवनेषु स्थितारुद्रा भुवनेशाः प्रकीर्तिताः
रुद्रैस्तु भुवनैर्ध्यानं भुवनाद्ध्वाप्रकीर्तिताः २३४
दशबीजमिदं मन्त्रं पञ्चतत्वे व्यवस्थितम्
प्रणवं पृथिवी ज्ञेयं मकारादि क्रयञ्जलम् २३५
व्योमतत्वमयं चेजो व्यापिनो वायुरेव च
आकाशः प्रणवः प्रोक्तो मन्त्राद्ध्वात्विहसं स्मृतः २३६
लवरयहकारश्च पृथिव्याप्ताः प्रकीर्तिताः
लकारः पृथिवी ज्ञेयो वकारस्त्वाप उच्यते २३७
रेफो वै वह्निबीजं तु यकारो वायुरेव च
हकारो गगनश्चैव वर्णाध्वासं प्रदर्शितः २३८
दशाक्षरं पदं प्रोक्तं बीजाक्षरं चरणेन तु
भूताक्षरैः प्रदानीह संयोज्याद्ध्वापदं स्मृतम् २३९
सद्यमन्त्रकलाचाष्टौ वामाख्यस्य त्रयोदश
अघोरस्य कलाश्चाष्टौ पुरुषस्य चतुष्कलाः २४०
ईशानस्य कलाः पञ्च पञ्चब्रह्मसमुद्भवाः
अष्टत्रिंशत् कलाश्चैताः शृणु वै शेषिणः कलाः २४१
शशिनी चाङ्गदा इष्टा मरीची ज्वलिनी तथा
ईशानस्य कलाः पञ्च प्रोक्तास्तत्पुरुषे शृणु २४२
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च
पुरुषस्य कला ह्येताश्चकस्त्रस्तु विशेषकाः २४३
तमो मोहः क्षयो निष्ठा व्याधिमृत्युः क्षुत्तृद्
कलाश्चाष्टौ त्वघोरस्य वामदेवकलाः शृणु २४४
रजो रक्षारतीपाल्या कामासंयमनी क्रिया

हुं क्रोधिका च धात्री च ब्राह्मिणी मोहिनी वरा २४५
त्रयोदशकला ह्येतोस्सद्यो जातकलाश्शृणु
सिद्धिर्वृद्धिर्द्युतिर्ल्लक्ष्मीर्मेधाकान्तिस्वधाधृतिः २४६
सद्योजातकलानह्यष्टौ भूताक्षरसमन्विताः
न्यस्त्वा ध्यात्वा कलाश्च ता द्विविधास्तु कलास्तथा २४७
षड्विधाध्वेहमार्गे तु विंशत्येकं शिवं पदम्
इत्येवं षड्विधं ज्ञानं ज्ञाक्त्वाधः पाशहा स्मृताः २४८
ज्ञानपादं समासेन प्रोक्तमेवं विनायक
शिवसृष्टिमार्गमद्ध्वा ह्यखिलं समासाद्ज्ञानमशेषमुक्तम्
२४९
संक्षेपतस्तत्तदभावपूर्वं तथा समाप्तं त्वथ सुप्रभेदम् २५०

इति अद्ध्वाविधिपटलस्तृतीयः

इति सुप्रभेदे ज्ञानपादस्समाप्तः

Reference:
Mutaliyar, Alakappa, *Suprapetakamam*, Civañanapotayantra: Cennai, 1907, 340 pp.